नस्य वित्तादिसंपत्तौ सत्यां उत्तरत्र क्रत्वनुष्ठानेऽग्नेरेव सुखं भवति ।

भद्रशब्दार्थं शाट्यायनिनः समामनन्ति । "यद्वै पुरुषस्य वित्तं तद्भद्रं प्रजा भद्रं पशवो भद्रम्" इति ।

करिष्यसीति—तिङ्ङतिङः (पा० ८।१।२८) इति अनुदात्तत्वे प्राप्ते यच्छब्दान्निघाताभावः ।

अग्निः पुनः किं किं ददातीति श्लोकशेषेणाह—पितृवद्यजते धनं ददाति । यथा पिता पुत्राय धनं दद्यात् । तथा पितृस्थानीयोऽग्निः पुत्रस्थानीययजमानाय धनाद्यभिलषितं दद्यात् । मृताय मरणं प्राप्ताय तस्मै अमृतत्वं दद्यात् । तमेवंगुणोपेतमग्निं त्यक्त्वा कं देवं तुच्छं वयमुपास्महे परिचरामः ।

अत्रार्थे ऋक् ( ऋ. १.१.९.)—

स नः पितेव सूनवेऽग्ने सूपायनो भव।

सचस्वा नः स्वस्तये ॥ ॥

सः । नः । पिताऽइव । सूनवे । अग्ने । सुऽउपायनः । भव । सचस्व । नः । स्वस्तये ॥ ३ ॥

पूर्ववत् सर्वम् । हे अग्ने सः त्वं नः अस्मभ्यं अस्मदर्थं सूपायनः शोभनमुपायनं यस्य सः शोभनधनादिप्राप्तियुक्तो भव । क इव । पिता सूनवे इव । यथा पिता पुत्राय सूपायनो भवति तद्वत् । नः अस्माकं स्वस्तये अविनाशाय सचस्व सेवस्व । सिषक्तु सचत इति सेवमानस्य (नि. ३ । २१) । सेवस्व नः स्वस्तये इति यास्कः । त्वं तमग्ने अ० (ऋ.१. ३१. ७.) इति निगमान्तरम् । अथ यत्स्वैरग्निभिर्यजमानं संस्थापयन्तीति यजमानस्याग्नेः सकाशादमृतत्वमुक्तम् ।

अग्ने इत्यामन्त्रितत्वेन सर्वानुदात्तत्वे प्राप्ते पादादित्वान्न (पा० ८.१.१९) ।

स न इत्येतत्तदोरिति सुलोपः ( पा० ६.१.३२ ) ।

सूनवेऽग्ने इति पादादित्वादेकीभवति । पादादिरकार (ऋ.प्रा.

२।३३) इत्येकीभावः ।

सचस्वा नः स्वस्तय इति (ऋ. ग्रा०८।५४) स्वस्तये ग्रहणाद्दीर्घः ।

एवमग्नेर्माहात्म्यमुक्त्वा बहुप्रजस्यापत्यस्य दारिद्र्यं सूचयति ॥

बहुप्रजस्य पुत्रस्य सुवाचोपि सदा विपत् ।

सीदन्निन्द्रं मधुच्छन्दा वस्वयाचद्दचोत नः ॥ ५ ॥

बव्ह्यः प्रजा यस्यासौ बहुप्रजः । गोस्त्रियोरुपसर्जनस्येत्युपसर्जनह्रस्वत्वम् ( पा० १. २. ४८ ) । तस्य पुत्रस्य सुवाचोपि शोभनवेदशास्त्राध्ययनयुक्तस्यापि सदा सर्वदा विपद् दारिद्र्यं भवति । पितुर्दायादानां बहुत्वात् । यथा विश्वामित्रस्य 'यद्वहुप्रजस्य हैकशतं पुत्रा आसु' रित्युक्तस्य तत्पुत्रस्य मधुच्छन्दसः दारिद्र्यमभूत् । मधुरं वेदो छन्दो यस्यासौ मधुच्छन्दा इति सुवाक् । सोपि सीदन् अतीव धनेच्छया इन्द्रं परमैश्वर्ययुक्तम् । इदि परमैश्वर्य इतिधातुः ।

ऋ. १.४.६.

"उत नः सुभगाँ अरिर्वोचेयुर्दस्म कृष्टयः ।
स्यामेदिन्द्रस्य शर्मणि

उत । नः । सुऽभगान् । अरिः । वोचेयुः । दस्म । कृष्टयः । स्याम । इत् । इन्द्रस्य । शर्मणि ॥ ४ ॥

इत्यनयर्चा वसु धनमयाचत । मधुच्छन्दा गायत्र्या इन्द्रं स्तौति । षष्ठेऽहनि ब्राह्मणाच्छंसिनोऽनुरूपस्य तृतीया सूत्रिता । सुरूपकृत्नुमिति ( ऋ० १।४।१ ) स्तोत्रियानुरूपाविति ।

अयमर्थः ।

हे दस्म शत्रूणामुपक्षपयितर् इन्द्र—दसु उपक्षये । त्वत्प्रसादात् अरिरुत—अरयोपि—वचनव्यत्ययः । उतशब्दोऽप्यर्थे । अप्येक इति चेत् । नः अस्मान् सुभगान् शोभनधनोपेतान् वोचेयुः उच्यासुः । भग इति धननाम ( निघण्टु २.१०. )। यद्यप्यरयोप्येवं वदन्ति त-

हिं कृष्टयः अस्मिन् मित्रभूता मनुष्याः । कृष्टयः इति मनुष्यनाम (निघण्टु २. ३) । अस्मान् ऋद्धान् इति वदन्ति तत्र किं वक्तव्यम् । ततो धनसम्पन्ना वयं इन्द्रस्य शर्मणि इन्द्रप्रसादलब्धे सुखे स्याम भवेम ।

धनं सर्वोऽपि याचते परं तु अयमत्यन्तं विलपति । तस्मात्सीदन्निन्द्र इति सिद्धम् ।

नः इति युष्मदस्मदोः षष्ठीति निघातः (पा० ८.१.२०) ।

वोचेयुः स्यामेति पादादित्वान्निघाताभावः ( तिङ्ङतिङः, पा० ८।१।२८ इति सूत्रस्य प्राप्तिर्न) ।

दस्मेत्यामन्त्रितत्वान्निघातः । ( पा० ८.१. १९ ) ।

सुभगाँ अरिः-नकार आकारोपधः० ( ऋ० प्रा० ४. ६४ ) इति नलोपे कृते, 'नकारस्यलोपरेफोष्मभावे० (ऋ० प्रा० ४. ७९) इत्युपधानुनासिकत्वम् ॥ ४ ॥

याचकानां धैर्यं कुत इत्यर्थ आह—

याचकानां कुतो धैर्यं यत्त(१)त्याज पुरन्दरः ।
अभूत्सोममना सानौ दृष्ट्वार्षिमिध्ममानसम् ॥ ६ ॥

याचकानां याचकवृत्तीनां धैर्यं साहस्यं कुतो भवति । यद्धैर्यं पुरन्दरः इन्द्रोपि याचकत्वमापन्नः सन् तत्याज त्यक्तवान् । तत्कुत इत्याह—सानौ पर्वतशिखरे कञ्चिदृषिम् इध्मं मानसे यस्य तं दृष्ट्वा स एव सोममनाः सोमे अभिषवार्थवल्लीरूपे मनो यस्य सः एवंविधमना अभूत् ।

---

( १ ) 'तत्याज मघवापि हि' इत्यपि पाठः । 'ग' पुस्तकेऽतऊर्ध्वमेवमपि दृश्यते—

याचकानां कुतो धैर्यं देवा धैर्यं हि तत्यजुः ।
उचतुश्चाधरं शक्रं मधुच्छन्दाश्च गौतमः ॥ २ ॥

कस्मिन्मन्त्रे मधुच्छन्दसा कस्मिंश्च वामदेवेन शक्रोऽधर उक्तस्तदाह—'यत्सानोरिति ।

तत्रेतिहासपूर्विका ऋक्—( ऋ० १. १०.२ )

यत्सानोः सानुमारुहद्भूर्यस्पष्ट कर्त्वम् ।

तदिन्द्रो अर्थं चेतति यूथेन वृष्णिरेजति ॥

यत् । सानोः । सानुम् । आ । अरुहत् । भूरि । अस्पष्ट । कर्त्वम् । तत् । इन्द्रः । अर्थम् । चेतति । यूथेन । वृष्णिः । एजति ॥ ५ ॥

इन्धनार्थमृषिः कश्चिन्निर्जगाम वनाद्बहिः ।
पर्वतभ्रमणं (१)कुर्वन् सानोर्वै सानुमारुहत् ॥ १ ॥
अचेती(२)दर्थमिन्द्रस्तं सोमार्थं भ्रमति ह्ययम् ।
इति सञ्चिन्त्य सुत्रामा देवयूथेन (३)चाचलत् ॥ २ ॥

मधुच्छन्दा इन्द्रो गायत्री महदुक्थे तृचं विनियुक्तम् ।

इन्द्रं वृत्राय हन्तवे ( ऋ० ३.३७.५ )

गायन्ति त्वा गायत्रिणः ( ऋ० १.१०.१. ) ॥

ऋचोऽयमर्थः । यत् यदा सानोः सानुमारुहत् यजमानः समिदाद्याहरणाय एकस्मात् पर्वतशिखराद् अपरं पर्वतशिखरम् आरूढवान् तदा इन्द्रः अयं भूरि महत् प्रभूतं वा कर्त्वं ज्योतिष्टोमादिकं कर्म कर्तुं करिष्यति इति अस्पष्ट स्पृष्टवान् उपक्रान्तवान् । तत्तदानीमिन्द्रः अर्थं प्रयोजनम् एतदेव चेतति—अचेतीत् । ज्ञात्वा च यूथेन देवयूथेन स ह वृष्णिः कामानां वर्षिता सन् एजति चकम्पे । एजृ कम्पने । स्वस्ववाहनादियुक्तो यज्ञभूमिमागन्तुं चलचित्तोऽभूदित्यर्थः । एवमर्थित्वं प्राप्य इन्द्रेणापि धैर्यं त्यक्तमिति तात्पर्यार्थः ।

आरुहत्—निपातैर्यद्यदिहन्तेति (पा०८.१.३०) निघाताभावः ।

चेतति—तिङ्ङतिङः ( पा० ८. १. २८ ] इति निघातः ।

---

( १ ) 'चक्रे' इत्यपि पाठः ।
( २ ) 'अर्थं चेतति शक्रस्तम्' इत्यपि पाठः ।
( ३ ) 'एजति' इत्यपि पाठः ।

एजतीति तद्वत् ।

निन्दावादचौर्यान्निवृत्तिः कार्येत्यर्थं आह—

निन्दावादरतो न स्यात्परेषां नैव तस्करः ।
निन्दावादाद्धि गोहर्ता शक्रेणाभिहतो वलः ॥ ७ ॥

कोविदो जनः परेषां निन्दावादरतो न स्यात् । नैव च तस्करः स्यात् । तदृगर्थेन दृढयति । यस्मात् पूर्वं निन्दावादाद्वलासुरः गोहर्त्ता गवां चोरः शक्रेणाभिहतः तस्मादेतद्द्वयं न कुर्यादित्यर्थः ।

अत्रार्थे ऋक् ( ऋ. १.११.५. )

त्वं वलस्य गोमतोपावरद्रिवो बिलम् ।
त्वां देवा अबिभ्युषस्तुज्यमानास आविषुः ॥

त्वम् । वलस्य । गोऽमतः । अप । अवः । अद्रिऽवः बिलम् । त्वाम् । देवाः । अबिभ्युषः । तुज्यमानासः । आविषुः ॥ ६ ॥

मधुच्छन्दा गायत्र्येन्द्रं तुष्टाव । स्वरसाम्नि निष्केवल्ये विनियुक्तम् । इन्द्रो विश्वा अवीवृध ( ऋ० १.११.१ ) मित्यानुष्टभम् निष्केवल्यमित्युक्तम् ।

अयमर्थः । पुरा वलनामकः कश्चिदसुरः परनिन्दापवादनिरतः देवसम्बान्धिनीः गाः अपहृत्य कस्मिंश्चित्पर्वतबिले गोपितवान् । तदानीमिन्द्रः तद्बिलं स्वसैन्येन समावृत्य बृहस्पतिना सह तस्माद्बिलान्निःसारयामास । इन्द्रो वलस्य बिलमपौर्णोदिति ब्राह्मणे [ तै.सं.२.५.१.] प्रसिद्धम् । । अद्रिरस्यास्तीत्यद्रिवः । हे वज्रयुक्त इन्द्र । त्वं वलस्य वलनामकस्यासुरस्य सम्बन्धि गोमतः गोभिर्युक्तस्य पर्वतस्य बिलं अपावः स्वसैन्यमुखेनापावृतवानसि । तदानीं देवास्त्वामाविषुः त्वां प्राप्तवन्तः । तुज्यमानासः वलेन हिंस्य-

मानाः । तुजि हिंसार्थः । पुनः कीदृशाः अबिभ्युषः त्वया रक्षिता वलादभीताः । तथेन्द्रेषु बार्हस्पत्येषु निगमाः ।

इन्द्रो यदभिंनद्वलम् । ( ऋ. ८.१४.७ )

इन्द्रो वलं रक्षितारम् ( ऋ. १०.६७.६ ) ।

यो गा उदाजत्( ऋ. २.१२.३ ) । इत्येवमादयः

अवः वरवरावरिति (ऋ.प्रा.१.१३) । रेफः ।

अमुना प्रकारेण निन्दावादाद्वलो हत इति ॥

'सोमसुत् धन्य'इत्यर्थ आह—

"कुयोनिजोऽपि सर्वेभ्यो धन्यो भवति सोमसुत् ।

ऐच्छन्मेधातिथिः साम्यमुशिकपुत्रस्य सुन्वतः ॥ ८ ॥

कुयोनिजोपि कुत्सितयोनिजातोऽपि यः सोमसुत् । सोमं सुतवान् इति सोमसुत् । सोमे सुञः (पा०३।२।९०)इति क्विप् । ह्रस्वस्य पिति कृति तुक् (पा०६.१.७१) इति तुक् । सर्वेभ्यः सुन्वद्भ्यो द्विजवर्येभ्यः धन्यः प्रशस्यो भवति । तत्कुतः । यतो मेधातिथिः मेधानां यज्ञानां अतिथिः । यज्ञः मेधः वेनः इति तन्नामसुपाठात् (निघण्टु३।१७) । सोप्युशिक्पुत्रस्य—उशिगिति दास्या आख्या—तस्याः पुत्रस्य कक्षीवतः सुन्वतः सोमानमित्यनयर्चा साम्यं सादृश्यमैच्छत् ।

तदर्थेयमृक्–( ऋ. १.१८.१ )

सोमानं स्वरणं कृणुहि ब्रह्मणस्पते ।

कक्षीवन्तं य औशिजः ॥

सोमानम् । स्वरणम् । कृणुहि । ब्रह्मणः । पते ।

कक्षीवन्तम् । यः । औशिजः ॥ ७ ॥

कक्षीवत उशिक्-पुत्रत्वं वदामः । अङ्गराजः कस्मिंश्चिद्दिवसे स्वकीयाभियोषिद्भिः सह गङ्गायां जलक्रीडां चक्रे । तस्मिन्दिवसे

दीर्घतमा नाम ऋषिः स्वभार्यापुत्रभृत्यादिभिश्च दुर्बलत्वात् किमपि कुर्वन्न शक्नोतीति द्वेषेण गङ्गामध्ये प्राचिक्षिपे। स च ऋषिः केनचित्प्लवेन अङ्गराजस्य क्रीडादेशं प्रति समाजगाम। स च राजा सर्वज्ञं तमृषिमवगम्य प्लवादवतार्यैवमवोचत्। हे भगवन् मम पुत्रो नास्तीति। एषा महिषी। अस्यां कंचित्पुत्रमुत्पादयेति। स तथेत्यब्रवीत्। सा महिषी राजानं प्रति तथेत्युक्त्वा अयं वृद्धतरः, जुगुप्सितो मम योग्यो न भवतीति बुद्ध्या स्वकीयां उशिक्संज्ञिकां दासीं प्राहैषीत्। तेन सर्वज्ञेन ऋषिणा मन्त्रपूतेन वारिणा अभ्युक्षिता सती सैव ऋषिपत्नी बभूव। तस्यामुत्पन्नः कक्षीवान् नाम ऋषिः स एव राज्ञः पुत्रोऽभूत्।

तथा च बृहद्देवता (४.२१–२५);—

जीर्णं तु दीर्घतमसं खिन्ना स्तत्परिचारकाः
दासा (१)बद्ध्वा नदीतोये दृष्टिहीनमवादधुः ॥ २१ ॥
तत्रै[२]कस्त्रैतनो नाम शस्त्रेणैनमपाहनत्।
शिरश्चांसावुरश्चैव स्वयमेव न्यकृन्तत ॥ २२ ॥
हत्वा दीर्घतमास्तन्तु पापेन महता वृतम् ॥
[३]अङ्गराजसमीपे तु तं नद्यः समुदक्षिपन् ॥ २३ ॥
आत्माङ्गान्यनुदच्चैव तत्रोदोन्मोहितो भृशम् ॥
अङ्गराजगृहे [४]दासीमुशिजं पुत्रकाम्यया ॥ २४ ॥
[५]राज्ञा च प्रहितां ज्ञात्वा शुद्धां कृत्वारमन्मुनिः।
सा च कक्षीवतं जज्ञे ॥ २५ ॥ इति कथा।

(१) 'अग्नौ' इत्यपि पाठः।
(२) २२।२३द्वावेतौ श्लोकौ बृहद्देवताया उद्धृतौ नीतिमञ्जर्यां न स्तः।
(३) 'अङ्गदेशसमीपे, इत्यपि पाठः।
(४) 'युक्तामुशिजम् इत्यपि पाठः।
(५) राज्ञा च प्रहितां दासीं भक्तां मत्वा महातपाः।
जनयामास चोत्थाय कक्षीवत्प्रमुखानृषीन् ॥ २५ ॥ इति बृहद्देवतायाम्।

इति कक्षीवत उशिक्-पुत्रत्वमुक्तम् । मेधातिथिर्ब्रह्मणस्पतिं गायत्र्या स्तौति । सोमानमिति पञ्च ब्राह्मणस्पत्या इत्यनुक्रमणी । अयमर्थः । हे ब्रह्मणस्पते एतन्नामक देव । सोमानं सोमानामभिषवस्य कर्तारं अनुष्ठातारं स्वरणं देवेषु प्रकाशनवन्तं कृणुहि कुरु-कमिव-औशिजः उशिक्पुत्रः कक्षीवान् सोमाभिषवकर्ता तमिव । लुप्तोपमानमेतत् । कक्षीवतोऽनुष्ठातृषु मुनिप्रसिद्धिः ।

कक्षीवते वृचयामिन्द्र सुन्वते० । (ऋ० १. ५१.१३.)

कक्षीवन्तं स्तोतारं० । [ ऋ० १.११२.११ ]

अहं कक्षीवाँ ऋषिः [ ऋ० ४.२६.१. ] इत्यादि ।

कक्षीवानुशिक्पुत्रोपि यदि सोमसुत् ज्यायान् । यः कुलीनोपि यदि सुन्वानः स द्विजपरिवृढो ज्ञेयः इत्युक्तमृग्दृष्टान्तेन ।

"सोमानं सोतारं प्रकाशनवन्तं कुरु ब्रह्मणस्पते कक्षीवन्तमिव य औशिजः कक्षीवान् कक्ष्यावानौशिज उशिजः पुत्रः । उशिग्वष्टेः कान्तिकर्मणः ॥ अपि त्वयं मनुष्यकक्ष एवाभिप्रेतः स्यात्तं सोमानां सोतारं मां प्रकाशनवन्तं कुरु ब्रह्मणस्पते"। इति यास्कः । ( नि० ६–१० ) ।

ब्रह्मणस्पते-पतिशब्दे द्व्यक्षरे०(ऋ०प्रा०४।४२)इत्युपाचरितसन्धिः। सुबामन्त्रित (पा०२।१।२) इति पराङ्गवद्भावात् पदद्वयस्य निघातः ।

पित्रोर्भक्तिपरेण भाव्यमिति ऋग्दृष्टान्तेनाह ।

मातरं पितरं भक्त्या तोषयेद्यः सभात्युरु ।
पितरावृभवश्चक्रुरुरुभासो नवावतः ॥ ९ ॥

यः पुत्रः मातरं च पितरं च भक्त्या आदेशकरणादिना तोषयेत् सन्तोषयेत् स ऋभुदेववत् उरु अत्यर्थं भाति शोभते । यथा ऋभवो देवाः पितरौ मातापितरौ । पितामात्रा ( पा०१.२.७० ) इत्येकशेषः । जीर्णौ सन्तौ नवौ युवानौ चक्रुः । अतः कारणादुरुभासः बहुकान्तियुक्ता आसन् । त-

मर्थं 'ऋभव उरु भान्ती'ति यास्केनोक्तम्। ( नि० ११–१६ )

पित्रोर्युवदर्शनी ऋक्–

( ऋ०१.२०.४ )

युवाना पितरा पुनः सत्यमन्त्रा ऋजूयवः।

ऋभवो विष्ट्यक्रत।

युवाना। पितरा। पुनरिति। सत्यऽमन्त्राः। ऋजुऽयवः। ऋभवः। विष्टी। अक्रत॥ ८॥

मेधातिथिः ऋभून् गायत्र्या स्तौति। द्वितीये छन्दोमे वैश्वदेवे विनियुक्तं तृचम्। महीद्यौ० [ ऋ०१.२२.१३ ] युवानापितरेति तृचाविति

ऋभव एतन्नामका देवाः। पितरौ स्वकीयौ मातापितरौ। पूर्वं वृद्धावपि युवाना पुनः तरुणौ अक्रत कृतवन्तः। कीदृशाः। सत्यमन्त्राः। सत्या यथार्था मन्त्रा येषां ते तथोक्ताः। तस्माज्जीर्णयोः पित्रोर्युवत्वं सम्पादयितुं समर्थाः। पुनः कीदृशाः। ऋजूयवः ऋजुत्वमात्मन इच्छन्ति तथोक्ताः। छलरहिता इत्यर्थः। पुनः कीदृशाः। विष्टीः विष्ट्यो व्याप्तियुक्ताः—विश्लृ व्याप्तौ–

युवाना पितरेति—सुपां सुलुगित्यादिना ( पा० ७.१.३९ ) द्विवचनस्याकारः

पुनः–वारपुनःपुन ( ऋ० प्रा० १.११७ )रिति रेफः।

ऋजूयवः पृशनाजिरर्ज्विति ( ऋ. प्रा० ९–१५ ) यकारपरत्वाद्दीर्घः

तथा निगमाः।

जिव्री यत्सन्ता पितरा० ( ऋ. ४ ३६.३ )

पुनर्ये चक्रुः पितरा ( ऋ० ४. ३३.३ )

तक्षन्पितृभ्यामृभवो० ( ऋ०१. १११. ११ )

इत्येवमादयः।

कृतसंविभागो भुङ्क्त इत्याह—

विभज्य भुञ्जते सन्तो भक्ष्यं प्राप्य सहाग्निना ।
चतुरश्चमसान्कृत्वा तं सोममृभवः पपुः ॥ १० ॥

सन्तः सत्पुरुषाः तद् भक्ष्यं प्राप्य सुखादिष्टं सुखभाक्षिकान्नादिकं प्राप्य विभज्य भागं कृत्वा तु देववद् भुञ्जते । भुजोऽनवने ( पा० १.३.६६ ) इत्यात्मनेपदम् । यथा ऋभवो देवास्त्वष्ट्रा निष्पादितम् एकं चमसं चतुरश्चमसान् चतुर्धा कृत्वा चतुर्थांशमग्नये दत्वा शेषं समं त्रयो भ्रातरः पपुः ।

तत्र ऋक् [ ऋ० १.२०.६ ]

उ॒त त्यं च॑म॒सं नवं॒ त्वष्टु॑र्दे॒वस्य॒ निष्कृ॑तम् ।
अक॑र्त च॒तुरः॒ पुनः॑ ॥

उ॒त । त्यम् । च॒म॒सम् । नव॑म् । त्वष्टुः॑ । दे॒वस्य॑ । निःकृ॑तम् । अक॑र्त । च॒तुरः॑ । पुन॒रिति॑ ॥ ९ ॥

तत्र बृहद्देवता–[अ० ३ श्लो० ८३–९० ] ;

सुधन्वन आङ्गिरसस्यासन्पुत्रास्त्रयः पुरा ।
ऋभु-र्विभ्वा च वाजश्च शिष्यास्त्वष्टुश्च तेऽभवन् ॥ ८३ ॥
शिक्षयामास तांस्त्वष्टा त्वाष्ट्रं यत्कर्म किञ्चन ।
परिनिष्ठितकर्माणो विश्वे देवा उपाह्वयन् ॥ ८४ ॥
विश्वेषां ते ततश्चक्रु र्वाहनान्यायुधानि तु ।
धेनुं सबर्दुघां चक्रुरमृतं सबरुच्यते ॥ ८५ ॥
बृहस्पतेरथाश्विभ्यां रथं दिव्यं त्रिबन्धुरम् ।
इन्द्राय च हरी देवप्रहितेनाग्निनापि यत् ॥ ८६ ॥
एकं चमस ( ऋ०१.१६१.२ ) मित्युक्ते ज्येष्ठ आहे ( ऋ.४.३३.५ ) त्यथो दिवि ।
उक्त्वा ततक्षुश्चमसान् यथोक्तं तेन हर्षिताः ॥ ८७ ॥
त्वष्टा च सविता चैव देवदेवः प्रजापतिः ।

सर्वान् देवान् समामन्त्र्य अमृतत्वं ददुश्च ते ॥८८॥
तेषामाद्यन्त्ययो र्नाम्ना दृश्यते बहुवत्स्तवः ।
तृतीयसवने तेषां तैस्तु भागः प्रकल्पितः ॥ ८९ ॥
अपिबत्सोममिन्द्रश्च तैस्तत्र सवने सह ।
तेषां स्तुतिरिदं सूक्तं त्वयमित्यष्टकं(ऋ०१.२०)परम्॥९०॥इति ।

वेदभाष्येऽपि ( ऋ० १. १६८. १ )–ऋभवो नाम सुधन्वन आङ्गिरसस्य त्रयः पुत्राः ऋभुर्विभ्वा वाज इति ते च मनुष्याः सन्तः ( सुकर्मणा ) देवत्वं प्राप्यं कदाचित्कर्मकाले सोमपानाय प्रवृत्ताः तान्प्रति देवैः पेरितोऽग्निः परस्परं समानरूपान्दृष्ट्वा स्वयमपि तदाकारं देहं धृत्वा तेषुमध्ये स्वयमपि चतुर्थः सन् पातुं प्रवृत्तः ते च ऋभवः आगतं तं समानरूपमवलोक्य विवेक्तुमसमर्थाः परस्परमेवं सन्देहं कृत्वा ज्येष्ठ आहेत्युक्तं (ऋ० १. १६१.१–५.) संवादं कृत्वा त्वष्ट्रा निर्मितं एकं चमसं चतुर्द्धा कृत्वा तं सोममग्निना सह पपुः। इति ।

ऋष्यादि पूर्ववत् । अयमर्थः । उतापि च त्वष्टुः एतन्नामकस्य देवस्य सम्बन्धलक्षणव्यापारः त्यं तं नवं नूतनं चमसं सोमधारणक्षमं काष्टपात्रविशेषं निष्कृतं निःशेषेण सम्पादितम् अकरोद् इति शेषः । लक्षणव्यापारः कुशलस्य तस्य त्वष्टुः शिष्याः ऋभवः तेन निर्मितं एकं चमसं सन्तं पुनरपि चतुरः कर्ता ज्येष्ठ आहेत्युक्तं संवादं कृत्वा चतुर्धा विभक्तान् चमसान् कृतवन्तः ।

चमसस्य च संस्तवेन बहूनि दाशतयीषु सूक्तानि भवन्तीति निरुक्तम् । तत्र निरुक्तम् ( ११. १६. )–'ऋभुर्विभ्वा वाज इति सुधन्वन आङ्गिरसस्य त्रयः पुत्रा बभूवुस्तेषां प्रथमोत्तमाभ्यां बहुवन्निगमा भवन्ति न मध्यमेन । तदेतदृभोश्च बहुवचनेन चमसस्य च संस्तवेन बहूनि दाशतयीषु सूक्तानि भवन्ति' । इति ।

तथा निगमाः ।

एकं चमसं चतुरः कृणोतन ( १. १६१. २. )।

यदा वाख्यंच्चमसाञ्चतुरः कृतान् ।(ऋ० १.१६१.४)।

एकं वि चंक्र चमसं चतुर्वयं ( ऋ० ४. ३६. ४ )।

व्यंकृणोत चमसं चंतुर्द्धा ( ऋ० ४. ३५. ३ )

इत्येवमादयः ।

एकं भक्ष्यं प्राप्य दत्त्वा ऋभूणामिव भक्षयेदिति फलितम् ।

पितरौ वन्द्यौ इत्याह—

पितरौ हि सदा वन्द्यौ न त्यजेदपराधिनौ ।

पित्रा (१)बद्धः शुनःशेपो ययाचे पितृदर्शनम् ॥११॥

पितरौ मातापितरौ । पितामात्रेत्येकशेषः ( पा० १. २. ७० )। अपराधिनौ कृतापराधावपि न त्यजेत् । हि यस्मात् सदा सर्वदा वन्द्यौ वन्दनीयौ । शुनःशेपदृष्टान्तेन दृढयति । यथा शुनःशेपः पित्रा अजीगर्त्तेन गवां शतं गृहीत्वा विक्रीतः, गवां शतं गृहीत्वा यूपे बद्धः, गवां शतं गृहीत्वा विशसनाय शासो गृहीतः, तथापि पितृदर्शनपूर्वकं देवान्मोक्षणं ययाचे कस्येत्यादिभिर्ऋग्भिः ( ऋ० १. २४. )।

तत्र ऋक् ( ऋ० १. २४. १ )

कस्यं नूनं कतमस्यामृतानां मनामहे चारु देवस्य नामं ।

को नो मह्या अदितये पुनं र्दात् पितरं च दृशेयं मातरं च ।

कस्यं । नूनम् । कतमस्यं । अमृतानाम् । मनामहे । चारुं । देवस्यं । नामं । कः । नः । मह्यै । अदितये । पुनः । दात् । पितरम् । च । दृशेयम् । मातरम् । च ॥ १० ॥

इमं षष्ठमनुवाकं यूपे बद्धः शुनः शेपो बन्धमोक्षार्थं ददर्श । तस्य 'कस्येति' प्रथमं सूक्तं वारुणं त्रैष्टुभं पञ्चदशर्चम् । आदौ काद्याग्नेय्यौ ।

---

( १ ) 'यूपबद्धः शुनः शेपो बभूव पितृलालसः' इति पाठभेदः ।

तत्रानुक्रमणी–'कस्य पञ्चोनाजीगर्तिः शुनःशेपः स कृत्रिमो वैश्वामित्रो देवरातो वारुणं तु त्रैष्टुभमादौ काय्याग्नेय्यौ सावित्रस्तृचो गायत्रोऽस्यान्त्या भागी वा' । इति ।

ऋग्विधानोक्तविनियोगः । शुनःशेपमृषिं बद्धः स निरुद्धोऽथवा जपेद् । इति ।

तथा सूत्रम्–शुनःशेपं प्रथमम् । यथा शुनः शेप आजीगर्त्तिः यूपे नियुक्तो मुमुचे प्रथमे च सूक्ते निगदेदिति ।

शुनः शेपः पित्रा यूपे बद्ध इत्यर्थे कथा 'हरिश्चन्द्रो ह वैधस' ( ऐ० ब्रा० ७. ३ ) इत्यध्यायार्थोक्ता–अनुक्रमणीभाष्यकारेणोक्ता—

तत्रेतिहासः श्रुत्युक्तः सम्यगेव प्रवर्ण्यते ।
हरिश्चन्द्रो ह वैधस इत्यादिब्राह्मणेरितः ।
राजसूये कृतावेष शौनः शेप इति श्रुतः ॥ १ ॥
शतभार्यो हरिश्चन्द्र ऐक्ष्वाकः पुत्रकाम्यया ।
नारदोक्ताद्धि पुत्रार्थे वरुणात् सुतमाप्तवान् ॥ २ ॥
जाते पुत्रे ह्यने(१)न त्वां यक्ष्येऽहमिति चोक्तवान् ।
वरुणस्तनये जाते निर्दशे जातदन्तके ॥ ३ ॥
च्युतदन्ते पुनर्जातदन्ते व(२)र्म्मचरे तथा ।
मेध्यस्थे तदवस्थोऽसाविति राज्ञा प्रतारितः ॥ ४ ॥
निर्बध्य स नृपं प्रोचे पुत्रेणाद्यैव मा यज ।
इत्युक्तो वरुणेनोचे स्वपुत्रं रोहितं नृपः ॥ ५ ॥
एनं यक्ष्ये त्वयाद्येति नेति सोम्यद्रवद्वनम् ।
वनस्थो रोहितः श्रुत्वा नृपं जातमहोदरम् ॥ ६ ॥
दिदृक्षुः पञ्चवर्षेषु विप्ररूपेन्द्रवारितः ।
षष्ठेऽजीगर्तनामानं त्रिपुत्रं बाधितं क्षुधा ॥ ७ ॥

---

( १ ) 'त्वामनेन' इत्यपि पाठः । ( २ ) 'वर्म्मभरे' इत्यपि पाठः

आसाद्यास्य शुनः शेपं मध्यमं जगृहे सुतम् ।
गवां शतेन पितरं पुरःस्थं दृष्टवान् सुतः ॥ ८ ॥
मया कार्यमनेन त्वं कुरु तातेऽति चाब्रवीत् ।
वरुणोपि नृपेणोक्तः शुनःशेपपशुं क्रतुम् ॥ ९ ॥
राजसूयं सोऽनुमेने तेनायष्ट च भूमिपः ।
तदाभिषेचनीयेऽह्नि शुनःशेपनियोजने ॥ १० ॥
अन्याभावाद्गोशतार्थी त्वजीगर्तो युयोज तम् ।
पुनर्विशसनं कर्त्तुं पिता जग्राह गोशतम् ॥ ११ ॥
यूपे बद्धः शुनः शेपो जिघांसुं पितरं ततः ।
दृ(१)ष्ट्वा चाहाहमेवान्या उपधावामि देवताः ॥ १२ ॥
अस्तौत्कमादावग्निं च सवितारं भगं त(२)था ।
वरुणं पुनरग्निं विश्वान्देवानथो खलु ।
इ(३)न्द्रं च पूर्वव्यापारसम्प्राप्तस्तुतिसुप्रियम् ।
हिरण्मयरथस्यापि स्वस्मै दातारमेव च ॥ १५ ॥
अश्विना उषसं चापि तृचाभ्यामन्ततस्तदा ।
अतिप्रीतियुतै र्देवै स्तै र्यूपान्मोचितस्तदा ॥ १५ ॥
ऋत्विग्गणैः प्रार्थितो ऽसावञ्जःसवमकारयत् ।
गतरोगो हरिश्चन्द्र यत्र ग्रावे (अ० १. २८)ति सूक्ततः॥१८॥
अञ्जःसवो राजसूये प्रयोगः पश्विष्टिदिव्यादिविहीन एकः ।
यतोऽञ्जसाभिष्टुवतेऽत्र साम्ना यच्चाञ्जसा देवतास्तं लभन्ते१७॥
स पित्रा प्रार्थित स्त्यक्त्वा तातं गाधिसुतं गतः ।
पुत्रत्वेन गृहीतश्च विश्वामित्रेण धीमता ॥ १८ ॥
देवरात इति प्रोक्तो देवैर्दत्तो यतः स्वयम् ।

(१) 'ऊर्ध्वे तिष्ठाहमेवान्या इत्यपि पाठः ।
(२) 'च सः' इत्यपि पाठः ।
(३) अतः परमेते श्लोकाः सर्वानुक्रमणीत उद्धृत्य लिखिता नीतिमञ्जर्यां न सन्ति ।

दत्तपुत्रविधे योगाद्वैश्वामित्रः स कृत्रिमः ॥ १९ ॥
आर्षानुक्रमेण चोक्तं कस्य नूनं शुनः शेपः ।
आजीगर्तिः कृत्रिमस्तु वैश्वामित्रो देवरातः ॥ २० ॥

इति कृत्रिमपुत्रत्वं देवरातत्वमेव च ।
अजीगर्तसुतत्वं च वैश्वामित्रत्वमेव च ॥ २१ ॥

शुनः शेपमहर्षेस्तु सम्यगत्र प्रवर्णितम् ।
बन्धक्षयकरी पाशमोचनीया कथेरिता ॥ २२ ॥

राजसूयेऽभिषेचनीयेऽहनि एषोऽनुवाक आख्यातव्यः । तथा-हाश्वलायनसूत्रे ( आ० श्रौ० सू० उत्तरषट्के ३. ३. )—

'संस्थिते मरुत्वतीये दक्षिणत आहवनीयस्य हिरण्यकशिपावासीनोऽभिषिक्ताय पुत्रामात्यपरिवृताय राज्ञे शौनःशेपमाचक्षीतेति'।

ब्राह्मणम् ( ऐ० ब्रा० ७. १८ ) 'एवैतच्छौनःशेपमाख्यानं नहास्मिन्नल्पं च नैनः परिशिष्यते' । इति ।

शुनः शेपो यूपे बद्धः प्रजापतिं त्रिष्टमां स्तौति । तथाऽम्नातम् । स प्रजापतिमेव प्रथममिति ( ऐ० ब्रा० ७. १६. ) ।

अयमर्थः । वयं शुनःशेपनामकाः अमृतानां देवानां मध्ये कतमस्य किंजातीयस्य देवस्य चारु मनोहरं नाम मनामहे उच्चारयामः । को देवः नः अस्मान् मुमूर्षून् मह्यै महत्यै अदितये पृथिव्यै पुनर्दात् दद्यात् । अदितिः इळेति तन्नामसु पाठात् ( निघण्टु,० १. १ ) तेन दानेनाहममृतः सन् पितरं मातरं च दृशेयं पश्येयम् ।

मनामहे इति पादादित्वान्निघाताभावः ।

दृशेयमिति मातरं चेत्यत्र 'च' शब्दाद् दृशेयमित्यनुषज्यते अतस्तदपेक्षया एषा तिङ्विभक्तिः प्रथमा 'चवायोगे प्रथमे' ( पा० ८।१।५९ )ति न निहन्यते ।

पुनर्दादिति वारपुनः पुनरिति रेफः । (ऋ० प्रा० १-११७)

देवानामपि स्तुतिः प्रियेत्याह—

"ऐश्वर्यपरि(१)पूर्णोपि दद्यात्स्तुत्यापि चेप्सितम्।
शुनः शेपाय सौवर्णं रथमिन्द्रः स्तुतो ददौ ॥१२॥

यः ऐश्वर्येण परिपूर्णः सोपि स्तुत्यैव तुष्टः सन् दद्यात्- ईप्सितं इष्टं तस्यापि स्तुति रेव इन्द्रवल्लिया । देवेन्द्रः परमैश्वर्यसम्पूर्णोऽपि शुनः शेपेन यच्चिद्धि-सत्येचेति सूक्ताभ्यां ( ऋ० १. २५, २८;) यत्नेन स्तुतः स ईप्सितं सौवर्णं सुवर्णमयं रथं तस्मै शुनः शेपाय ददौ दत्तवान्। तथा सर्वोपि स्तुतिप्रियो भवतीत्यर्थः ।

शुन इव शेपो यस्येति समासे 'शेपपुच्छलाङ्गूलेषु संज्ञायाम् (पा०वा० ६।३।२१) इति षष्ठ्या अलुक् ।

तथा बृहद्देवता—( अ० ३ श्लो० १०३ )

स्तूयमानः शश्वदिति प्रीतस्तु मनसा ददौ ।
शुनः शेपाय दिव्यं तु रथं सर्वं हिरण्मयम् ॥ १०३ ॥

तत्प्रकारः यूपे बद्धः शुनः शेपः कस्येत्यनुवाकेन क्रमेण एकया प्रजापतिं एकयाग्निं तृचेन सवितारं एकत्रिंशता वरुणं पुनर्द्वाविंशत्या अग्निम् एकया विश्वान् देवान् द्वाविंशत्येन्द्रं च स्तुत्वा त्रयोविंशत्या 'शश्वदिन्द्र' इत्यनया तुष्टाव इन्द्रश्च सौवर्णं रथं प्रादादित्युच्यते ।

तत्र ऋक्—[ ऋ० १. ३०. १६; ]

शश्वदिन्द्रः पोप्रुथद्भिर्जिगाय नानदद्भिः शाश्वसद्भिर्धनानि ।

---

( १ ) अत्र 'ग' पुस्तके पाठस्त्वेवम्-'सर्वेषां स्तुतिरेव वल्लभा' इत्यवतरणिका । श्लोकस्तु-

स्तुतिर्नराणां देवानां प्रिया घर्ममृणञ्चयः ।
बभ्रवे देवराताय शक्रो रौक्मं रथं ददौ ॥ १५ ॥

ऋणञ्चयो राजा बभ्रवे ऋषये घर्मं सौवर्णं महावीरपात्रं ददौ । इन्द्रः शुनःशेपाय रथं ददौ इत्यर्थः ।

स नो हिरण्यरथं दंसनावान्त्सनः सनिता सनये स नोऽदात् ॥

शश्वत् । इन्द्रः । पोप्रुथत्ऽभिः । जिगाय । नानदत्ऽभिः । शाश्वसत्ऽभिः । धनानि । सः । नः । हिरण्यऽरथम् । दंसनाऽवान् । सः । नः । सनिता । सनये । सः । नः । अदात् ॥ ११ ॥

शुनः शेप इन्द्रं त्रिष्टुभा स्तौति । इन्द्रः शश्वन्निरन्तरम् एवं धनानि वैरिसम्बन्धीनि जिगाय जितवान् । कैः अश्वैरिति शेषः । कीदृशैः । पोप्रुथद्भिः घासभक्षणानन्तरभाविनम् ओष्ठशब्दं कुर्वद्भिः । पुनः कीदृशैः । नानदद्भिः नादं आस्यगतं हेषादिशब्दं कुर्वद्भिः । पुनः कीदृशैः । शाश्वसद्भिः पुनःपुनर् भृशं वा श्वसद्भिः । सनिता दाता । षणु दाने । स इन्द्रः नः अस्माकं सनये संभजनार्थं हिरण्यरथं सुवर्णेन निर्मितं रथमदात् दत्तवान् । किं लक्षणः । दंसनावान् कर्मवान् ।

स नोऽदादिति अदादवर्त्रो० ( ऋ० प्रा० २. ३९ ) इत्यभिनिहितसन्धिः । स नो द्विरुक्तिरादरार्था । 'अभ्यासे भूयांसमर्थं मन्यन्त' इति यास्कः ।

बहुभिः स्पर्द्धा न कार्येत्याह—

हिंसाक्रूरतराचारै र्न व्रजेद्विश्वशत्रुताम् ।
विश्वशत्रुर्हतो वृत्र इन्द्रेणापां निरोधकः ॥ १३ ॥

हिंसा च क्रूरतराश्च ते आचाराश्च तैर्विश्वशत्रुतां विश्वानिष्टतां प्राज्ञो न व्रजेत् । तत्र वृत्रदृष्टान्तेन दृढयति—यथा वृत्रो विश्वावरकः विश्वशत्रुः हिंसया कुत्सिताचारैः अपां उदकानां निरोधको यद्येवं विघोऽभूत् तर्हि इन्द्रेण जगन्मित्रेण निहतः तस्माद्विश्वशत्रुतां न व्रजेदित्यर्थः ।

एतदर्थप्रतिपादनार्थमृक्—( ऋ० १.३२.११; )

दासपत्नीरहिगोपा अतिष्ठन्निरुद्धा आपः पणिनेव गावः।
अपां बिलमपिहितं यदासीद्वृत्रं जघन्वाँ अप तद्ववार।

दासऽपत्नीः। अहिऽगोपाः। अतिष्ठन्। निऽरुद्धाः। आपः। पणिनाऽइव। गावः। अपाम्। बिलम्। अपिऽहितम्। यत्। आसीत्। वृत्रम्। जघन्वान्। अप। तत्। ववार॥ १२॥

हिरण्यस्तूप इन्द्रं स्तौति त्रिष्टुभा—अथापि स्तुतिरेव भवति नाशीर्वादः 'इन्द्रस्य नु वीर्याणि प्रवोचम्' इति यास्केन स्तुतिरुक्ता (नि० ७।२)। ज्योतिष्टोमे निष्केवल्ये विनियुक्तं महाव्रते च। इन्द्रस्य नु वीर्याणीति (ऋ० १. ३२) रथन्तरपृष्ठ इति सूत्रितम्।

अयमर्थः। दासः विश्वोपक्षयहेतुः वृत्रः पतिः स्वामी यासां ताः। दसु उपक्षये। अहिगोपाः अहिर्गोपाः वृत्रो रक्षको यासां ताः। गोपनं नाम यथा स्वच्छन्देन न प्रविशन्ति तथा निरोधनम्। एवंविधा आपः निरुद्धा अतिष्ठन् स्थिताः। केनेव। पणिना गाव इव। यथा पणिना असुरेण पूर्वं गा अपहृत्य बिले स्थापयित्वा बिलद्वारं निरुद्धं तथाऽनेनापां द्वारं निरुद्धमित्यर्थः। यत् यदा अपां यद्बिलं प्रवहणद्वारं अपिहितं वृत्रेण निरुद्धं आसीत् तदा इन्द्रः वृत्रं विश्वशत्रुं जघन्वान्। हत्वा अपववार अपवृतमकरोत्। वृत्रकृतमपां निरोधं परिहृतवान्।

'विवृद्ध्या शरीरस्य स्रोतांसि निवारयाञ्चकार। तस्मिन्हते प्रसस्यन्दिर आप' इति। 'दासपत्नीर्दासाधिपत्न्यः' इति यास्कः (नि० २. १७)।

जघन्वाँ—नकार आकारोपध० (ऋ० प्रा० ४. ६४) इति नलोपः।

इन्द्रस्य वृत्रवधो बहुधा प्रपञ्चितः—

अहन्वृत्रं वृत्रतरं०—[ ऋ. १. ३२. ५. ]

वृत्रं जघान्वाशन्येव वृक्षम्—[ ऋ. २. १४. २. ]

जघान वृत्रं स्वधितिर्वनेव—[ ऋ. १०. ८९. ७. ]

इत्येवमादयः ।

यज्वनां ये स्पर्धिनस्तेषामिन्द्र एव शास्ता इत्याह—

यज्वभिर्नास्तिको भूत्वा स्पर्द्धां कुर्यान्न बुद्धिमान् ।
स्पर्धमाना अयज्वानो हता वृत्रेण ते सह ॥ १४ ॥

बुद्धिमान्नरः नास्तिको भूत्वा यज्वभिः यज्ञकर्तृभिः सह स्पर्द्धां तेषां निन्दां च न कुर्यात् । तन्निवारणार्थं वेदमूलेन दृढयति । यो वै दीक्षितानां पापं कीर्त्तयति तृतीयम् एषां पाप्मनो हरतीति सामवेदे दृष्टत्वात् । पूर्वं ये अयज्वानः स्वयमयष्टारो यज्ञद्विषः पणयस्ते याज्ञिकैस्सहस्पर्धमाना इन्द्रेण हताः । तस्माद्यज्वनिन्दाऽनिष्टकरी भवति ।

तदर्थेयमृक्-( ऋ० १. ३३. ५. )

परा चिच्छीर्षा ववृजुस्त इन्द्रा यज्वानो यज्वभिः स्पर्धमानाः ।
प्र यद्दिवो हरिवः स्थातरुग्र निरव्रताँ अधमो रोदस्योः ॥

परा । चित् । शीर्षा । ववृजुः । ते । इन्द्र । अयज्वानः । यज्वऽभिः । स्पर्धमानाः । प्र । यत् । दिवः । हरिऽवः । स्थातः । उग्र । निः । अव्रतान् । अधमः । रोदस्योः ॥१३॥

हिरण्यस्तूपस्त्रिष्टुभा इन्द्रं स्तौति । आभिप्लविके पञ्चमे विनियुक्तम् । एतायामोपगव्यं ता इन्द्रमिति । ( ऋ० १. ३३. ) निष्केवल्यमिति ।

हे हरिवः हरिनामकाश्वयुक्तेन्द्र । हे स्थातः स्थितियुक्त युद्धे पलायनरहित उग्र शौर्ययुक्त यत् यदा दिवोऽन्तरिक्षात् रोदस्योः

द्यावापृथिव्योः सकाशाच्च अव्रतान् व्रतमिति ज्योतिष्टोमादिकं कर्म तद्रहितान् निः प्राधमः निः शेषेण धमनं वधं कृतवान् असि। धमतीति वधकर्माणः (निघण्टु२।१९)। तदानीं ते अयज्वानः स्वयं यागरहिताः प्रत्युत यज्वभिः सह यागानुष्ठानकर्तृभिः सह स्पर्धमानाः शीर्षा शीर्षाणि स्वकीयानि शिरांसि परावर्वृजुः तत्यजुः। वृजी वर्जने असंयोगाल्लिट् कित् (पा० १।२।५) इति किच्वाद् गुणाभावः। त्वया हताः सन्तः शीर्षाणि त्यक्त्वा मृता इत्यर्थः।

अतो यज्वनो निन्दां न कुर्यादिति प्रसिद्धम्।

शीर्षा—बहुवचनस्य डादेशः (पा० ७. १. ३९)।

ववृजुस्ते इति विसर्जनीयस्य षत्वे प्राप्ते 'त्वात इत्यनुदात्तयो' (ऋ० प्रा० ५. ३२) रित्यनुदात्तत्वाभावान्न।

स्थातः-स्थातर्जरितरिति रेफः। (ऋ० प्रा० १. ११५)

देवतापि कृतं कर्म भुंक्त(१) इत्याह—

शुभाशुभं कृतं कर्म भुञ्जते देवता अपि।

सविता हेमहस्तोऽभूद्भगोऽन्धः पूषकोऽद्विजः ॥१५॥

यत्कृतं कर्म शुभाशुभं वा देवा अपि भुञ्जते यदि—तर्हि मनुष्याणां किमाश्चर्यम्। देवैर्भुक्तानि शुभाशुभानि कर्माणि तदाह—सविता देवो यज्ञे छिन्नहस्तः हेमहस्तोऽभूत्। हेममयौ हस्तौ यस्य स हेमहस्तः। भगो देवोऽन्धोऽभूत्—पूषकः पूषा अद्विजः अदन्तकोऽभूत्। तयोरशुभकर्मणः। तत्प्रदर्शनार्था इतिहासपूर्विका ऋक्—(ऋ० १. ३५. ९)

**हिरण्यपाणिः सविता विचर्षणिरुभे द्यावापृथिवी अन्तरीयते अपामीवां बाधते वेति सूर्यमभि कृष्णेन रजसा द्यामृणोति॥**

---

(१) 'ग' पुस्तकेऽवतरणिका त्वेवं दृश्यते।
भाग्यं विना किमपि नास्तीत्यर्थं आह—
देवत्वेऽपि सुखं नास्ति भाग्यं यदि न विद्यते।
सविताऽभूदयःपाणिरजाश्वो गतदन्तकः॥ १॥ इति।

हिरण्यऽपाणिः। सविता। विऽचर्षणिः। उभे इति। द्यावापृथिवी इति। अन्तः। ईयते। अप। अमीवाम् बाधते। वेति। सूर्यम्। अभि। कृष्णेन। रजसा। द्याम्। ऋणोति॥ १४॥

अत्राख्यानम्। देवकर्तृकत्वे यागे सविता ब्रह्मत्वेनावस्थितः। तदानीं कस्याश्चिदिष्टौ अध्वर्यवः तस्मै सवित्रे ब्रह्मणे प्राशित्रेण कर्मपुरोडाशभागं दत्तवन्तः। तच्च प्राशित्रं हस्ते सवित्रा अमन्त्रेण गृहीतं सत् तदीयं पाणिं प्रचिच्छेद। ततः प्राशित्रस्य दातारोऽध्वर्यवः सुवर्णमयं पाणिं निर्माय प्रक्षिप्तवन्तः। तद्भगाय दत्तवन्तः। तस्याक्षिणी निर्जघान। ईक्षणाभावाद्भगोऽन्धोऽभूत्। तत्पूष्णे दत्तवन्तः। तस्य दन्तलग्नाद् दन्तान्परोऽवाप। तस्मादाहुरदन्तकः पूषेति।

तत्र कौषीतकिब्राह्मणम्। 'अथ यत्र ह तद्देवा यज्ञमतन्वत तत्सवित्रे प्राशित्रं परिजहुस् तस्य पाणी प्रचिच्छेद तस्मै हिरण्मयौ प्रतिदधु स्तस्माद्धिरण्यपाणिरिति स्तुतः"। इति।

यथाह यास्कः। 'अन्धो भग इत्याहुरनुत्सृप्त' इति (नि०१२.१३) अदन्तकः पूषेति च ब्राह्मणमिति' (नि० ६. ३१)।

अतो देवैः शुभाशुभानि कर्माणि भुक्तानि इति दर्शितम्।

हिरण्यस्तूपः सवितारं जगत्या तुष्टाव। अयमर्थः—

हिरण्यपाणिः सुवर्णमयहस्तः। यद्वा यजमानेभ्यो दातुं हिरण्यं हस्ते धृतवान्। सविता सर्वस्य प्रसविता देवः। विचर्षणिः विविधदर्शनयुक्तः। विश्वचर्षणिरिति (निघण्टु० ३. ११) तन्नामसु पाठात् सविता देवः पश्यतीत्यर्थः। उभे द्यावापृथिवी अन्तः उभयो र्लोकयो र्मध्ये ईयते गच्छति। अमीवां रोगादिबाधाम् अपबाधते सम्यङ् निराकरोति। तथा वेति सूर्यं सूर्यं गच्छति। वी गतौ। यद्यपि सवितृसूर्ययोरेकदेवतात्वं तथापि मूर्त्तिभेदेन गन्तृगन्तव्यभावः।

कृष्णेन तमसः कर्पकेन निवर्तकेन रजसा । ज्योती रज उच्यते ( नि० ४.१९ )। द्यामाकाशं अभ्यृणोति । ऋणु गतौ । तनादित्वादुः । सर्वतो व्याप्नोति ।

द्यौश्च पृथिवी च द्यावापृथिवी । दिवसश्च पृथिव्याम् ( पा० ६. ३. ३० ) इति चशब्दाद् द्यावादेशः । द्यावापृथिवी अन्तः—षष्ठ्यादयश्च द्विवचोन्तभाजः० ( ऋ० प्रा० १. ८६ ) इति प्रकृतिभावः । अन्तोदात्तमन्त इति ( ऋ० प्रा० १. १३. ) अन्तः शब्दाद्रिफितः ।

एवं सवितु—र्भाग्यवत्वं सिद्धम् ।

कया प्रजया प्रजावान् भवतीति प्रश्न आह—

अन्य इच्छन्ति यत्साम्यं प्रजावान् प्रजया तया ।
ब्रह्मा स्वसूनुसाम्येष्टेः काण्वस्यातः प्रजापतिः ॥१६॥

यस्याः प्रजायाः साम्यं यत्साम्यं अन्ये जना इच्छन्ति तया प्रजावान् भवति । नान्यया । ब्रह्मप्रजादृष्टान्तेन दृढयति । ब्रह्मा अतः प्रजापति र्बभूव । कुतः काण्वस्य कण्वपुत्रस्य प्रस्कण्वस्य स्वसूनोः साम्येष्टौ । अग्नौ प्रस्कण्वः ब्रह्मपुत्रसाम्यमैच्छत् ।

तदर्थेयमृक्—( ऋ. १. ४५. ३; )

प्रियमेधवदत्रिवज्जातवेदो विरूपवत् ।
अङ्गिरस्वन् महिव्रत प्रस्कण्वस्य श्रुधी हवम् ॥

प्रियमेधऽवत् । अत्रिऽवत् । जातऽवेदः । विरूपऽवत् । अङ्गिरस्वत् । महिऽव्रत । प्रस्कण्वस्य । श्रुधि । हवम् ॥१५॥

तृतीयेऽह्नि आज्ये विनियुक्तम् त्वमग्ने वसूनिति (ऋ० १.४५) समूह्ळ इति सूत्रे । प्रस्कण्वोऽनुष्टुभाग्निं तुष्टाव । हे महिव्रत प्रभूतकर्मन्। हे जातवेदः अग्ने प्रस्कण्वस्य कण्वपुत्रस्य मम हवं आह्वानं श्रुधि शृणु । श्रुशृणुपॄकृवृभ्य० ( पा० ६. ४. १०२ ) इति हेर्धिः ।

तत्र चत्वारो दृष्टान्ताः । प्रियमेधात्रिविरूपाङ्गिरोनामका ब्रह्मपुत्राः एतेषामाह्वानं यथा शृणोषि । तद्वन् मम शृणु इत्यन्वयः ।

प्रियमेधाः । प्रिया अस्य मेधा इति यास्कः ( नि० ३. १७ )।

श्रुधी हवं–"षष्ठं चाष्टाक्षरे०" (ऋ० प्रा० ८. ३९) इति दीर्घः ।

याच्ञा रूपहानिकरी भवतीत्याह—

प्रभोरपि धिगर्थित्वं रूपहानिं करोति यत् ।
मेधातिथिं यदाऽयाचदिन्द्रो मेषोऽभवत्ततः ॥ १७ ॥

प्रभोरपि अर्थित्वं धिक् । कुतः । यदर्थित्वं रूपहानिं करोति । इन्द्रदृष्टान्तेन दृढयति । यथा इन्द्रस्यापि अर्थित्वं रूपहानिकरं बभूवेति । तथा इन्द्रसदृशस्यापि पुंसः अर्थित्वं रूपहानिकरं भवतीति । इन्द्ररूपहानिकरत्वं दर्शयति । यदा इन्द्रो मेधातिथिं सोममयाचत् ययाचे । ततोऽनन्तरं ऐश्वर्यरूपं त्यक्त्वा मेषो भूत्वा मेधातिथिसम्बन्धिसोमं पपौ । ततः इन्द्रो मेषोऽभवदिति ।

तदर्थेयमृक्–( ऋ० १. ५१. १. )

अभित्यंमेषंपुरुहूतमृग्मियमिन्द्रंगीर्भिर्मदतावस्वोअर्णवम्।
यस्य द्यावो न विचरन्ति मानुषा भुजे मंहिष्ठमभि विप्रमर्चत

अभि। त्यम्। मेषम्। पुरुऽहूतम्। ऋग्मियम्। इन्द्रम्। गीःऽभिः। मदत। वस्वः। अर्णवम्। यस्य। द्यावः। न। विऽचरन्ति। मानुषा। भुजे। मंहिष्ठम्। अभि। विप्रम्। अर्चत ॥ १६ ॥

सव्यो जगत्या इन्द्रं तुष्टाव(१)। प्रथमे होतुः पर्याये विनियुक्तम्। अभित्यं मेषमिति ( ऋ० १. ५१ ) जागतमिति सूत्रम्।

---

( १ ) ऋचमेनामधिकृत्यावतरणिका 'ग' पुस्तके त्वेवं दृश्यते धनस्त्रीजीवितव्याहारेषु कस्यापि धैर्यं नास्तीत्यर्थे श्लोकानाह--

धनस्त्रीजीवितव्येष्वाहारेषु ऋषिदेवताः ।
ययतृप्ता बभूवुस्ते मनुष्याणां कुतो धृतिः ॥१॥

ऋचोऽयमर्थः । त्यं तं प्रसिद्धं इन्द्रम् । त्यच्छब्दश्छन्दसि तदर्थः । उद्वहन्ति तमितिवत् । हे ऋत्विजः । गीर्भिः स्तुतिभिः मदत हर्षं प्रापयत । मदी हर्षे । कीदृशम् । मेषं(१) । मेधातिथेर्मेषम् । कण्वपुत्रं मेधातिथिम् ऋषिं इन्द्र आगत्य एवमवोचत् मह्यं देहीति सोमं । त्वं मेषरूपं यदि करोषि तर्हि सोमं दद्यामिति । ततो मेषरूपमास्थाय इन्द्रस्तदीयं सोमं पपौ । स ऋषिस्तं मेष इत्यवोचत् । अत इदानीमपि मेष इन्द्रोऽभिधीयते । मेधातिथेर्मेष इति सुब्रह्मण्यायाम् । मेधातिथिं हि काण्वायनिं मेषो भूत्वा जहारेति मेषत्वं बहुभिः प्रतिपादितम् । पुनः कीदृशम् । पुरुहूतं बहुभिर्यजमानै राहूतम् । पुनः कीदृशम् । ऋग्मियम्(२) । ऋग्भिर्मीयते(३)

---

विश्वामित्रो धनं हृत्वा नदीस्तुष्टाव सादरम् ।
कक्षीवान्वृचयां वव्रे दशभार्यो हि शक्रजाम् ॥२॥
च्यवनोऽश्विनौ तुष्टाव यौवनाय जराङ्गतः ।
मेधातिथेः पपौ सोमं मेषो भूत्वा पुरन्दरः ॥३॥

विश्वामित्रः सुदासो धनं हृत्वा पश्चान्नदीस्तुष्टाव तत्प्रपर्वतानामिति (ऋ० ३. ३३. १.) नदीस्तुतौ कथयिष्यामः । च्यवनो जीवितव्येप्यतृप्तो बभूव तत् 'जुजुरुष०(ऋ० ४.११६.१०.) इत्यस्यामृचि वक्ष्यामः । अत्र तु स्त्रीष्वाहारेषु च कक्षीवानिन्द्रश्चातृप्तौ बभूवतुः । तत्प्रतिपाद्यते । 'अभित्यं मेषमिति ( ऋ० १. ५१. १. ) । तत्रेतिहासः–अङ्गिरा इन्द्रतुल्यं पुत्रम् आत्मनः कामयमानो देवता उपासाञ्चक्रे । तस्य सव्याख्येन पुत्रेणेन्द्र एव स्वयं जज्ञे जगति मत्तुल्यो मा भूदिति । स सव्य ऋषि जंगत्या इन्द्रं तुष्टाव । अभित्यम् इति ।

(१) मेषम्–शत्रुभिः स्पर्धमानम् इति वेदभाष्ये । मिष स्पर्धायां 'इगुपधलक्षणे के' प्राप्ते 'देवसेनमेषादयः पचादिषु द्रष्टव्या' इति वचनाद् अच्प्रत्ययः ।

(२) ऋग्मियम्–ऋग्भिर्विक्रियमाणं स्तूयमानमित्यर्थः । स्तुत्या हि देवता विक्रियते । तस्य विकार इत्यर्थे एकाचो नित्यं मयटमिच्छन्तीति मयट् प्रत्ययः । अकारस्येकारश्छान्दसः । प्रत्ययस्वरः ।

(३) माङ माने शब्दे च । ऋग्भिर्मीयते इति ऋग्मीः । क्विपि वलिलोपात्पूर्वमेव परत्वात् घुमास्थेतीत्वम् अचिश्नुधातीत्यादिने यङादेशः कृदुत्तरपदप्रकृतिस्वरत्वम् ।

शब्द्यत इति ऋग्मीः। अचिश्नुधातुभ्रुवां० ( पा० ६. ४. ७७. ) इतीयङ्। पुनः कीदृशम्। वस्वो अर्णवम्। वस्वो धनस्य अर्णवं वासभूतम्। यस्य इन्द्रस्य कर्माणि मानुषा मनुष्याणां हितानि भुजे भोगाय विचरन्ति विशेषेण प्रवर्तन्ते। तत्र दृष्टान्तः। द्यावो न। अयं न उपमार्थीयः। उपमार्थीय उपरिष्टादुपचारस्तस्येति यास्कः (नि० १. ४. १०.), अश्व न त्वेतिवत्। यथा द्यावः सूर्यस्य रश्मयः सर्वेषां हितकरा भवन्ति। तं मंहिष्ठम् अतिशयेन मंहिता मंहिष्ठः तम्। तुश्छन्दसीति ( पा० ५. ३, ५९. ) इष्ठन् प्रत्ययः। विप्रं मेधाविनम्। विप्रः विग्रः(निघण्टु ३. १५) इति तन्नाम। अर्चत पूजयत हे ऋत्विजः(१)। अर्च पूजायाम्।

मदत–दधिममदत० [ ऋ०प्रा० ८. १५. ] इति दीर्घः।

निस्पृहदानदातारं स्तुवन्नाह(२)—

स इन्द्रादधिको दानं यो दद्यान्निस्पृहः पुमान्।
इन्द्रोऽदाद्वृचयां पुत्रीं सुन्वते सोमवल्लभः॥ १८॥

यः पुमान् पुरुषः निःस्पृहः निर्गता स्पृहा यस्यासौ निःस्पृहः। गो-

---

(१) 'अनेनेन्द्रो ऽप्याहारेऽतृप्तो बभूवेत्युक्तम्' इति 'ग' पुस्तके।

(२) अस्यावतरणिका 'ग' पुस्तके त्वेवम्–कक्षीवानृषिर्दशभार्योऽपि स्त्र्यतृप्तः सन् वृचयाख्यां शक्रजाम् इन्द्रपुत्रीं वव्रे। अत्र श्लोकः–

"सुरेन्द्रादधिको दाता यो दद्यान्निःस्पृहः पुमान्।
इन्द्रो ददौ तु वृचयां सुन्वते सोमवल्लभः॥ १॥

पूर्वं कक्षीवते स्वनयेन राज्ञा दशभार्या दशरथसहिता वध्वर्थं दत्ताः। तदग्रे 'अमन्दान् ( ऋ० १. १२६. ) इत्यस्मिन्सूक्ते वक्ष्यते। 'वधूमन्तो दशरथासो अस्थुः' ( ऋ० १. १२६. ३३ ) इति। ताभिस्तृप्तिर्न जातेत्युक्तम्। एकादशीन्द्रेण दत्ता। तत्राख्यानपूर्विका ऋक्। अददा अर्भां० ( ऋ० १. ५१. १३ ) इति। 'अङ्गराजः कस्मिंश्चिद्दिवसे०' इत्यादि उक्तमेव पूर्वं सोमानं स्वरणं ( ऋ० १. १८. १ ) इत्यस्या ऋचो व्याख्याने।

स्त्रियो रुपसर्जनस्येति (पा० १।२।४८) स्पृहाया ह्रस्वत्वम् । स्पृहां त्यक्त्वा दानं दद्यात् । स एष इन्द्रादधिको ज्ञेयः । इन्द्रोपि वृचयां कन्यां ददौ ।
तदाह ( ऋ० १. ५१. १३ )–

अदंदा अर्भां महते वंचस्यवें कक्षीवंते वृचयामिन्द्र सुन्वते ।
मेनांऽभवो वृषणश्वस्यं सुक्रतो विश्वेत्ता ते सवंनेषु प्रवाच्यां॥

अदंदाः । अर्भाम् । महते । वचस्यवें । कक्षीवंते । वृचयाम् । इन्द्र । सुन्वते । मेनां । अभवः । वृषणश्वस्यं । सुक्रतो इतिं सुऽक्रतो । विश्वां । इत् । ता । ते । सवंनेषु । प्रऽवाच्यां ॥ १७ ॥

इन्द्रः वृचयां पुत्रीं आत्मजां सोमाकाङ्क्षया सुन्वते सोमाभिषवं कुर्वते (१)कक्षीवते ऋषये वृचयाख्यामर्भाम् अल्पाम् । दभ्रमर्भकमित्यल्पस्येति यास्कः (निघण्टु ३. २) । युवतिमित्यर्थः । एवंविधां पुत्रीमददाः अदाः । तथा । सुक्रतो सुकर्मन् सुप्रज्ञ वा । क्रतुः कर्मनामसु पठितः ( निघण्टु २. १ ) । प्रज्ञानामसु वा ( निघण्टु ३. ९) । त्वं वृषणश्वस्य राज्ञो मेनाऽभवः । मेना नाम कन्याऽभूः ।

तथा शाट्यायनिभिः सुब्रह्मण्यायां मन्त्रैकदेशे ब्राह्मणमेवमाम्नायते 'वृषणश्वस्य मेन' इति । 'वृषणश्वस्य मेना भूत्वा मघवा कुलमुवासेति तां च प्राप्तयौवनां स्वयमेवेन्द्रश्चकम' इति ।

'वृषणश्वस्य मेना दुहिताऽऽस तामिन्द्रश्चकम' इति ताण्ड्ये स्पष्टमुक्तम् ।

अत उक्तानि कर्माणि ते त्वदीयानि तानि विश्वेत् सर्वाण्येव सवनेषु यज्ञेषु प्रवाच्या प्रकर्षेण वक्तव्यानि । स्तुतिभिर्वक्तव्यानीत्यर्थः ।

---

( १ ) महते वचस्यवे इति द्वे विशेषणे नीतिमञ्जर्यां व्याख्यातुं विस्मृते दृश्येते । तयो र्व्याख्यानं वेदभाष्ये त्वेवम्–महते प्रवृद्धाय वचस्यवे त्वदीयस्तोत्रलक्षणं वच आत्मनः इच्छते । सुप आत्मनः क्यच् ( पा० ३।१।८) क्याच्छन्दसि (पा० ३।२।१७० ) इत्युप्रत्ययः ।

नृणां धनदो धन्यो (१)महानित्याह—

"नृषु यो धनदो धन्य इन्द्रतुल्यैः प्रशस्यते ।
सुष्टुत्या द्रविणोदःसु सव्यो नाहेति दुष्टुतिः ॥ १९ ॥

नृषु मध्ये यो धनदः धनं ददातीति धनदो दाता स एव धन्यः प्रशस्यः । कुतः । इन्द्रतुल्यैः इन्द्रसदृशैः पुंभिः प्रशस्यते । कथा । सुष्टुत्या इन्द्रतुल्यः सव्यऋषिः न्यूष्वित्यनया ऋचा प्रत्याह—इति । किम् । द्रविणोदःसु 'धनं द्रविणमुच्यते तस्य दाता द्रविणोदाः' इति भाष्यकारेणोक्तः (नि० ८।१) । तेषु धनदातृषु न दुष्टुतिः शस्यते । धनदः सर्वदा पुरुषेण स्तुत्य इत्यर्थः ।

तत्र ऋक्—( ऋ०१.५३.१. )

न्यू३षु वाचं प्र महे भरामहे गिर इन्द्राय सदने विवस्वतः ।
नूचिद्धि रत्नं ससतामिवाविदन्न दुष्टुतिर्द्रविणोदेषु शस्यते

नि । ऊम् इति । सु । वाचम् । प्र । महे । भरामहे गिरः । इन्द्राय । सदने । विवस्वतः । नु । चित् । हि । रत्नम् । ससताम्ऽइव । अविदत् । न । दुःऽस्तुतिः । द्रविणःऽदेषु । शस्यते ॥ १८ ॥

सव्यो जगत्या इन्द्रं तुष्टाव । ब्राह्मणाच्छंसिनः प्रथमे पर्याये विनियुक्तम् । वयमुत्वा तदिदर्था इति खण्डे न्यूषु वाचमिति जागतमिति सूत्रितम् [ सां० श्रौ० सू० ९।९।४ ] ।

प्रथमं सव्यस्य इन्द्रतुल्यत्वं प्रतिपाद्यते । अंगिरा इन्द्रतुल्यं

---

( १ ) अस्यावतरणिका 'ग' पुस्तके त्वेवम्—सर्वेषां प्रियं ब्रूयादित्यर्थं आह—

सर्वेषामेव जन्तूनां प्रियं ब्रूयाद्विचक्षणः ।
धनदानां विशेषेण सव्यस्तुष्टाव वासवम् ॥ १ ॥

सव्यो जगत्या इन्द्रं स्तौति 'न्यू३षु' ( ऋ० १. ५३. १ ) इति ।

पुत्रमात्मनः कामयमानो देवता उपासाञ्चक्रे तस्य सव्याख्य इन्द्ररूपः स्वयं जज्ञे, जगति मत्तुल्यो मा भूदिति बुद्ध्या।

तथा चानुक्रमणी—"अङ्गिरा इन्द्रतुल्यं पुत्रमिच्छन्नभ्यध्यायदि"ति-

अयमर्थः—महे महते इन्द्राय सुवाचं शोभनां स्तुतिं नि प्रभरामहे नितरां प्रयुञ्ज्महे(१)। यतः विवस्वतः(२) परिचरतो यजमानस्य सदने यज्ञगृहे इन्द्राय गिरः स्तुतयः क्रियन्ते इति शेषः। हि यस्मात्स इन्द्रः नूचित् क्षिप्रमेव पुराण नवं च। रत्नं रमणीयं धनं असुराणामविदत्—विन्दति। तत्र दृष्टान्तः। ससतामिव(३) यथा स्वपतां पुरुषाणां चोरः धनं लभते तद्वत्। अतोऽस्मभ्यं धनं दातुं शक्त इति भावः। द्रविणोदेषु धनदातृषु पुरुषेषु दुष्टुतिरसमीचीना स्तुतिः न शस्यते नाभिधीयते। अतः सुवाचं प्रभरामहे।

न्यू३षु इति। इकारयोश्च प्रश्लेषे क्षैप्रातिक्षैप्रसन्धित्वात् (ऋ० प्रा० ३-१३) स्वरितं कृत्वा 'जात्योऽभिनिहतः (ऋ० प्रा० ३. ३४) इति कम्पः। उकारो व्रजस्य सुधा इति उकारस्य दीर्घे स्वबह्वक्षरेणेति (ऋ० प्रा० ५. ५) षत्वम्।

नूचिदिति अद्यादित्वात्पादादौ दीर्घः (ऋ० प्रा० ७. ३३)। 'नूचिदिति निपातः पुराणनवयो र्नूचेति च' इति यास्कः (नि० ४।१७)।

न दुष्टुतिः—अन्यपूर्वैरिति षत्वम् (ऋ० प्रा० ५. २१)।

---

(१) उः पादपूरणः। 'मिताक्षेरठवनर्थकाः कमीमिद्विति यास्कः (नि० १।९)' इति 'ग' पुस्तके।

(२) विवासतिः परिचर्यायाम् (निघण्टु ३।५)। विवस्वतः परिचरणवतः।

(३) 'सुप्तानाम्' इति 'ग' पुस्तके। षस स्वप्ने। अस्माच्छत्रन्तादन्तोदात्तात्परस्याविभक्तेः शतुरनुमो० (पा०६।१।१७३) इत्युदात्तत्वम् इवेन विभक्त्यलोपः। पूर्वपदप्रकृतिस्वरत्वं चेति समासः।

विमलेन मनसा भाव्यमित्याह—

देवा रक्षन्ति तं नित्यं यस्य स्याद्विमलं मनः ।
ररक्षेन्द्रोऽमलाञ्छ्रोणतुर्वीतियदुतुर्वशान् ॥ २० ॥

यस्य पुंसः विमलं निर्मलं मनः स्यात् तं देवाः निरन्तरमेव रक्षन्ति । यथा इन्द्रः । इन्द्र उपलक्षणार्थः । इन्द्रादयोऽपि देवा इत्यर्थः । एतान् विमलान् ररक्षुः । कान् श्रोणतुर्वीतियदुतुर्वशानमलान् ।

तदर्थेयमृक् । ( ऋ० १.५४.६. )—

त्वमा॑विथ॒ नर्यं॑ तु॒र्वशं॒ यदुं॑ त्वं तु॒र्वीतिं॑ व॒य्यं॑ शतक्रतो ।
त्वं रथ॒मेत॑शं॒ कृत्व्ये॒ धने॒ त्वं पुरो॑ नव॒तिं द॑म्भयो॒ नव॑ ॥

त्वम् । आ॒वि॒थ॒ । नर्य॑म् । तु॒र्वश॑म् । यदु॑म् । त्वम् । तु॒र्वीति॑म् । व॒य्य॑म् । श॒त॒क्र॒तो॒ इति॑ शत॒ऽक्र॒तो । त्वम् । रथ॑म् । एत॑शम् । कृत्व्ये॑ । धने॑ । त्वम् । पुरः॑ । न॒व॒तिम् । द॒म्भ॒यः॒ । नव॑ ॥ १९ ॥

सव्यो जगत्या इन्द्रं तुष्टाव । अच्छावाकस्य प्रथमे पर्याये विनियुक्तम् । इन्द्राय मद्वन इति खण्डे मानो अस्मिन्निति ( ऋ० १. ५४. १ ) जागतमिति सूत्रम् [ सां० श्रौ० सू० ९।१०।३ ] ।

अयमर्थः । हे इन्द्र त्वं नर्यं नरहितं त्वं तुर्वशं—यदुं—वय्यकुलजं—तुर्वीतिम् आविथ । ररक्षिथ । तथा नर्यादीनां चतुर्णां राज्ञां रथं एतशं अश्वं—एतग्वः एतश इति अश्वनाम (निघण्टु१।१४)। कृत्व्ये कर्तव्ये इति वर्णविकारः । पृषोदरादित्वात् ( पा० ६।३।१०९ ) । धने सङ्ग्रामे आविथ—हे शतक्रतो बहुकर्मन्—तथा शंबरस्य नवतिं नवोत्तरनवतिं नव पुरो नवतिं चेति उक्तसंख्याकाः पुरः पुराणि दम्भयः हिंसितवान् । दभ्नोतीति वधकर्मसु पाठात् ( निघण्टु० २।१९ ) ।

एतेषां सर्वदैव स्तुतौ फलमुक्तम्—

अग्निना तुर्वशं यदुं० ( ऋ० १.३६.१८ ) इति अग्नि स्तुतौ ।

याभिः कुत्सं श्रुतर्यं० ( ऋ० १.११२.९ ),

याभिः कुत्समार्जुनेयं० ( ऋ० १.११२.२३ ),

इति अश्विनोः स्तुतौ तुर्वीतिरक्षणमुक्तम् ।

प्रेमन्धः ख्यन्निःश्रोणो भूत् ( ऋ० ८.७९.२ ) इति सोमस्तुतौवन्धश्रोणरक्षणमुक्तम् ।

सर्वैर्देवैरेते निर्मलाः पालिताः इति, देवा रक्षन्तीत्युक्तम् ।

द्विजो रक्ष्य इत्याह—

इन्द्रः स्याद्वज्रहीनोऽपि द्विजरक्षां करोति यः ।
पुरेन्द्रः सूर्यसङ्ग्रामे ररक्ष ह्येतशं द्विजम् ॥ २१ ॥

यो भयात्—द्विजरक्षां द्विजरक्षणं करोति सविना वज्रमपि इन्द्र एव ज्ञेयः । इन्द्रदृष्टान्तेन दृढयति । पुरा सूर्यसङ्ग्रामे सूर्यस्य भयाद् एतशं एतशनामानं द्विजं ब्राह्मणम् इन्द्र आगत्य ररक्ष । तस्माद्यो ब्राह्मणं रक्षति स इन्द्रः स्यात् ।

तदर्थेयमृक् ( ऋ० १.६१.१५. )

अस्मा इदु त्यदनु दाय्येषामेको यद्वव्ने भूरेरीशानः ।
प्रैतशं सूर्ये पस्पृधानं सौवश्व्ये सुष्विमावदिन्द्रः ॥

अस्मै । इत् । ऊम् इति । त्यत् । अनु । दायि । एषाम् । एकः । यत् । वव्ने । भूरेः । ईशानः । प्र । एतशम् । सूर्ये । पस्पृधानम् । सौवश्व्ये । सुस्विम् । आवत् । इन्द्रः ॥ २० ॥

नोधास्त्रिष्टुभा इन्द्रं तुष्टाव । उत्तमे छन्दोमे निष्केवल्ये

विनियुक्तम् । अष्टाचत्वारिंशदिति खण्डे सूत्रितम्—आसत्यो यातु० ( ऋ० ४. १६ ) अस्मादु इत्यद्० ( ऋ० १. ६१ ) इति [ सां० श्रौ० सू० १०।११।७ ] ।

अथोत्तरार्द्धर्चस्येतिहासः । स्वश्वो नाम कश्चिद्राजा । स च पुत्रकामः सूर्यमुपासाञ्चक्रे । तस्य स सूर्यः पुत्ररूपी स्वयमेव तत्रोत्पन्नः सन्न् एतशेन महर्षिणा सार्द्धं युद्धं चकार । तदानीं स ऋषिः युद्धे जयार्थमिन्द्रं तुष्टाव । स इन्द्रस् तेन स्तूयमानः शश्वत् पुत्रस्य सूर्यसम्बन्धिनः संग्राम एनम् एतशम् अपालयदिति ।

अयमर्थः । यःइन्द्रः एक एव सन् भूरे र्बहुविधस्य धनस्येशानः स्वामी एषां स्तोतॄणां सम्बन्धि यत् स्तोत्रं वव्ने ययाचे । वनु याचने । इत्येतत् प्रसिद्धं स्तोत्रमस्मै इन्द्राय अस्माभिरनुदायि अकारीत्यर्थः । बहुलं छन्दस्यमाङ्० ( पा० ६।४।७५ ) इति अडभावः । अयमिन्द्रः सूर्ये (१)पस्पृधानं स्पर्धायमानं (२)सुष्विं सोमानाभिषोतारम् । षुञ् अभिषवे । किकिनावुत्सर्गश्छन्दसि सदादिभ्यो दर्शनाद् इति वार्त्तिकेन किन् ( पा० ३-२-१७१ वा० ) । एतशम् ऋषिं प्रावत् प्रारक्षत् । कीदृशे सूर्ये सौवश्व्ये(३) स्वश्वपुत्रे ।

सुष्विम्—युग्मान्तस्था दन्तमूलीयपूर्वैरिति ( ऋ०प्रा०५.२० ) दन्तमूलीयपूर्वत्वात्षत्वम् ।

---

( १ ) पस्पृधानम्—स्पर्ध सङ्घर्षे । अस्माल्लिटः कानच् ( पा० ३।२।१०६ ) द्विर्वचने ( पा० ६।१।१७ ) शर्पूर्वाः खयः ( पा० ७।४।६१ ) इति यकारःशिष्यते । धात्वकारस्य लोपे रेफस्य सम्प्रसारणम् पृषोदरादित्वात् ( पा० ६।३।१०९ ) । चित्वादन्तोदात्तत्वम् ( पा० ६।१।१६३ )

( २ ) सुष्विम्—षुञ् अभिषवे । उत्सर्गश्छन्दसि (पा०वा०३।२।१७१) इति किन् । लिड्वद्भावाद्विर्भावः । यणादेशः । उवङादेशाभावश्छान्दसः ।

( ३ ) सौवश्व्ये—स्वश्व इति जनपदशब्दः क्षत्रिये संज्ञात्वेन वर्त्तते । वा नामधेयस्य वृद्धसंज्ञा० ( पा० वा० १।१।७५) वृद्धेत्कोशला० ( पा० ४।१।१७१ ) इति अपत्यार्थे यङ्प्रत्ययः । नय्वाभ्यां पदा० (पा० ७।३।३) इति वृद्धिप्रतिषेधः ऐजागमश्च ञित्वाद्(पा०६।१।१९७) आद्युदात्तत्वम् ।

तत्त्वविदपि(१) संसारान्न मुच्यत इत्याह—

तत्त्वविदपि संसारे मूढो भवति लोभतः ।
तत्त्वज्ञा सरमाऽयाचदिन्द्रमन्नं गवां ग्रहे ॥ २२ ॥

तत्वं वेत्तीति तत्त्ववित् संसारे संसरणे मूढो भवति लोभतः । मायया बध्यत इत्यर्थः । तत्र सरमादृष्टान्तेन दृढयति । यथा सरमा देवशुनी गवां ग्रहे इन्द्रस्य पणिभिः गावो गृहीताः तासां दर्शनाय इन्द्रेण सरमा प्रेषिता तत्किमिच्छन्तीति ( ऋ० १०.१०८.१) अग्रे स्पष्टं दर्शयिष्यति । तस्मिन्गवां ग्रहे तत्त्वज्ञा अपि ब्रह्मज्ञा अपि—अस्या ब्रह्मज्ञत्वं गोधा घोषेति प्रतिपादितम् । सापि मायया बाधिता सती इन्द्रं स्वतनयार्थमन्नं ययाचे । अन्योऽज्ञोपि गास्त्रातुमुद्यमं करोति । सा तत्त्वज्ञापि लोभमूढाऽभूदित्युक्तम् ।

तत्रेतिहासः ।

सरमानाम देवशुनी । पणिभिर्गोष्वपहृतासु तदन्वेषणाय तां सरमां इन्द्रः प्राहैषीत् । यथा लोके व्याधो वनान्तर्गतमृगान्वेषणाय श्वानं विसृजति तद्वत् । सा सरमा एवमवोचत् । हे इन्द्र अस्मादीयाय शिशवे तद्गवां सम्बन्धि यदि क्षीराद्यन्नं प्रयच्छसि तर्हि गमिष्यामीति । स तथेत्यब्रवीत् । तथा शाट्यायने—'अन्नादां ते प्रजां करोमीति यदि नो गा अन्वविन्द' इति । ततो गत्वा गवां स्थानमज्ञासीत् । ज्ञात्वा च तस्मै निवेदयति । अथ निवेदितासु गोषु तानसुरान्हत्त्वा गाः स इन्द्रोऽलभतेति ।

तदर्थेयमृक् ( ऋ० १. ६२. ३ )

इन्द्रस्याङ्गिरसां चेष्टौ विदत् सरमा तनयाय धासिम् ।
बृहस्पतिर्भिनदद्रिं विदद्गाः समुस्रियाभिर्वावशन्त नरः ॥

---

( १ ) अवतरणिकेयमेवमपि 'ग' पुस्तके दृश्यते—
संसारे मायया सर्वं पीड्यत इत्यर्थ आह—
"संसारे गहने सर्वं मायया बाध्यते जगत् ।
तुजे शुने ययाचेऽन्नं सरमा ब्रह्मवादिनी ॥ ॥
तुजे अपत्याय । इत्यादि–

इन्द्रस्य । अङ्गिरसाम् । च । इष्टौ । विदत् । सरमा तनयाय । धासिम् । बृहस्पतिः । भिनत् । अद्रिम् । विदत् । गाः । सम् । उस्रियाभिः । वावशन्त । नरः ॥२१॥

किमिच्छन्ती(१)ति सूक्ते (ऋ० १०.१०८.) प्रोक्तः सरमासम्बन्धीतिहासो बृहद्देवतायामेवं वर्णितोऽस्ति-

( बृहद्देवता-अ० ८, श्लो० २४-३६ )—

असुराः पणयो नाम रसापारनिवासिनः ।
गास्तेऽपजह्रुरिन्द्रस्य न्यूगूहंश्च प्रयत्नतः ॥२४॥
बृहस्पतिस्तथाऽपश्यद् दृष्ट्वेन्द्राय शशंस च ।
प्राहिणोत्तत्र दूत्येऽथ सरमां पाकशासनः ॥२५॥
किमित्यत्रायुजाभिस्तां पप्रच्छुः पणयोऽसुराः ।
कुतः कस्यासि कल्याणि किं वा कार्यमिहास्ति ते ॥ २६ ॥
अथाब्रवीत्तान्सरमा दूत्यैन्द्री विचराम्यहम् ।
युष्मान्व्रजं चान्विष्यन्ती गाश्चैवेन्द्रस्य पृच्छतः ॥ २७ ॥
विदित्वेन्द्रस्य दूतीं तामसुराः पापचेतसः ।
ऊचुर्मा सरमे गास्त्वम् इहास्माकं स्वसा भव ॥ २८ ॥
विभजामो गवां भागं माहिता ह ततः पुनः ।
सूक्तस्यास्यान्त्यया चर्चा युग्माभिस्त्वेव सर्वशः ॥ २९ ॥
साऽब्रवीन्नाहमिच्छामि स्वसृत्वं वा धनानि वा ।
पिबेयं तु पयस्तासां गवां यास्ता निगूहथ ॥ ३० ॥
असुरास्तां तथेत्युक्त्वा तदाजह्रुः पयस्ततः ।
सा स्वभावाच्च लौल्याच्च पीत्वा तत्पय आसुरम् ॥ ३१ ॥
परं संवननं हृद्यं बलपुष्टिकरं ततः ।
शतयोजनविस्तारामतरत्तां रसां पुनः ॥ ३२ ॥

( १ ) इतिहासोऽयं लिखितपुस्तकेषु नोद्धृतो दृश्यते । कथाभेद एव तत्र कारणं स्यात् ।

यस्याः पारे परे तेषां पुरमासीत्सुदुर्जयम् ।
पप्रच्छेन्द्रश्च सरमां कच्चिद्वा दृष्टवत्यसि ॥ ३३ ॥
सा नेति प्रत्युवाचेन्द्रं प्रभावादसुरस्य तु ।
तां जघान पदा क्रुद्ध उद्गिरन्ती पयस्ततः ॥ ३४ ॥
जगाम सा भयोद्विग्ना पुनरेव पणीन्प्रति ।
पदानुसारिपद्धत्या रथेन हरिवाहनः ॥ ३५ ॥
गत्वा जघान च पणीन् गाश्च ताः पुनराहरद् ॥ इति ।
नोधा इन्द्रं तुष्टाव । वाचस्तोमे विनियोगः ।

ऋचोऽयमर्थः । इन्द्रस्याङ्गिरसाम् ऋषीणां च इष्टौ प्रेषणे सति सरमा देवशुनी तनयाय स्वपुत्राय । तोकं तनयः–( निघण्टु २।२ ) अपत्यनामसु पाठात् । धासिम् अन्नं–क्षुत् धासिः [ निघण्टु २।७ ] अन्ननामसु पाठात् । विदत् अविन्दत् । विद्लृ लाभे–लृदित्वाल्लुङि अङ् ( पा० ३।१।५ ) बहुलं छन्दस्यमाङ्० [पा० ६।४।७] इति अडभावः । बृहस्पतिः तया गासु निवेदितासु (१)अद्रिं पर्वतं भिनत् अभिन्दत्–भित्त्वा गाः विदत् अविन्दत् । ततो नरो नेतारो देवाः उस्रि(२)याभिः । उस्रियेति गोनामेति यास्कः [ निघण्टु २।११ ] । आभिः समं सह वावशन्त भृशं हर्षशब्दमकुर्वन् । वाशृ शब्दे ।(३)

बृहस्पतिः तद्बृहतोः० (पा० वा० ६।१।१५७) इति सुट् । उभे वनस्पत्यादिषु युगपदिति ( पा० ६।२।१४० ) प्रकृतिस्वरत्वम् ।

---

( १ ) अद्रिम्—'अत्तारमसुरम्' इति 'ग' पुस्तके वेदभाष्ये च ।

( २ ) उस्रियाभिः—निवसत्यस्यां क्षीरादिकमिति उस्रा गौः । वस निवासे इत्यस्मात् । स्फायितञ्चि० ( उ० सू० १७८ ) इत्यादिनाऽधिकरणे रक्प्रत्ययः । वाचस्वपि० ( पा० ६।१।१५ ) इत्यादिना सम्प्रसारणम् । उस्राशब्दात्स्वार्थे पृषोदरादित्वेन घप्रत्यय इति निघण्टुभाष्यम् । घस्येयादेशः ( पा० ७।१।२ ) प्रत्ययस्वरः ।

( ३ ) यद्वा गोभिः साधनभूताभिस्तदीयं क्षीरादिकमकामयन्त समगच्छन्तेत्यर्थः । वे० भा०

महान्मृतोप्युपकरोतीत्या(१)ह—

महान्पतितकायोऽपि करोति सुखिनं परम् ।
दधीचोऽश्वशिरोऽस्थ्नेन्द्रो हत्त्वा वृत्राण्यभूत्सुखी॥२३॥

महान्नरः पतितकायोऽपि मृतोऽपि परं पुत्रपौत्रादिकम् अन्यं वा जनं सुखिनं सुखयुक्तं करोति । क इव । दध्यङ्ङिव । यथा दध्यङ् इन्द्रं सुखिनमकरोत् । कुतः । दधीचऋषेर्मृतस्य अश्वशिरः अश्वसंबन्धि यच्छिरः तस्यास्थ्ना वृत्राणि पापरूपाणि हत्त्वा सुखी अभूदिन्द्रः ।

तत्र ऋक्—[ १. ८४. १३. ]

इन्द्रो॑ दधी॒चो अ॒स्थभि॑र्वृ॒त्राण्यप्र॑तिष्कुतः ।
ज॒घान॑ नव॒तीर्नव॑ ।

इन्द्रः॑ । द॒धी॒चः । अ॒स्थऽभिः॑ । वृ॒त्राणि॑ । अप्र॑तिऽस्कुतः । ज॒घान॑ । न॒व॒तीः । नव॑ ॥ २२ ॥

तत्रेतिहासः(२) आथर्वणस्य दधीचो जीवतो दर्शनेन असुराः परिबभूवुः(३) । अथ तस्मिन्स्वर्गते असुरैः परिपूर्णा(४) पृथिव्यभवत् । अथेन्द्रः तैरसुरैः सह योद्धुमशक्नुवंस्तमृषिमन्विच्छन् स्वर्गं गत इति शुश्राव । अथ तत्रत्यान् पप्रच्छ नेह किमस्य किञ्चित्परिशिष्टमङ्गमस्तीति । तस्मै अवोचद् अस्त्येतदाश्वं शीर्षं—येन शिरसा अश्विभ्यां मधुविद्यां प्राब्रवीत् । तत्तु न विद्मो यत्राभवदिति । पुनरिन्द्रोऽब्रवीत् तदन्विच्छतेति । तद्धान्वैषिषुः तच्छर्यणावत्यनुवि-

(१) 'ग' पुस्तकेऽवतरणिकेयन्त्वेवम्-
सर्वदा गुरुः पूजनीय इत्याह—
श्लोकश्च—उपकुर्वन्ति गुरवे सच्छिष्या अपमानिताः ।
इन्द्रो जघान वृत्राणि दधीचिशिरसोऽस्थिभिः ॥ इति ।

(२) 'अत्र शाट्यायनिन इतिहासमाचक्षते' इति वेदभाष्ये ।

(३) 'परा बभूवुः' इति वेदभाष्ये ।

(४) 'असुरैः पूर्णा' इति वे० भा० ।

द्याजहुः(१)। शर्यणावद्ध वै नाम कुरुक्षेत्रस्य जघनार्धे सरः स्यन्दते तस्य शिरसोऽस्थिभिरिन्द्रोऽसुराञ्जघानेति इयमर्थमनयोत्तरया च ऋचाऽऽह—

गोतमो गायत्र्येन्द्रं स्तौति। षोडश्यां विनियोगः। षोडशिन इति खण्डे 'इन्द्रो दधीच' इति सूत्रितम्। (सां०श्रौ०सू० ९।६।११)

अस्या ऋचोऽयमर्थः। अस्थभिः। छन्दस्यपि दृश्यते—(पा० ७।१।७६) इति अनजादावप्यस्थिशब्दस्यानङादेशः। स चोदात्तः। दधीचो अश्वशिरसः। इन्द्रः। अप्रतिष्कुतः पैरप्रतिशब्दितः प्रतिकूलशब्दरहितः। (२)नवतीर्नव। नवसंख्याका नवतीः। दशोत्तराष्टशतसंख्याकाः। वृत्राण्यावरकाणि असुरजातानि। जघान हतवान्।

अप्रतिष्कुत इति अन्यपूर्वैरिति (ऋ० प्रा० ५।२१) षत्वम्।

एषाऽपरा—(ऋ० १. ८४. १४)

इच्छन्नश्वंस्य यच्छिरः पर्वतेष्वपंश्रितम्।
तद्विंदच्छर्यणावति॥

इच्छन्। अश्वस्य। यत्। शिरः। पर्वतेषु। अपंऽश्रितम्। तत्। विदत्। शर्यणाऽवति॥ २३॥

गायत्री छन्दः। दधीच ऋषिः। इन्द्रो देवता। पर्वतेषु पर्व-

(१) 'जहुः' इति वे० भा०।

(२) अस्य पदस्य व्याख्यानं 'ग' पुस्तके तथा वेदभाष्येऽप्येवम्—तथाहि लोकत्रयवर्त्तिनो देवाञ्जेतुमादावासुरी माया त्रिधा सम्पद्यते। त्रिविधा अतीतानागतवर्त्तमानकालभेदेन तत्कालवर्त्तिनो देवाञ्जेतुं पुनरपि प्रत्येकं त्रिगुणिता भवति। एवं नव सम्पद्यते। पुनरपि उत्साहादिशक्तित्रयरूपेण त्रैगुण्ये सति सप्तविंशतिः सम्पद्यते। पुनः सात्त्विकादिगुणत्रयभेदेन त्रैगुण्ये सति एकोत्तरा अशीतिः सम्पद्यते। एवं चतुर्भिस्त्रिकै गुणिताया मायायाः दशसु दिक्षु प्रत्येकमवस्थाने सति नवनवतयः सम्पद्यन्ते। एवं विधानि मायारूपाणि। इति।

वत्सु गिरिषु अपश्रितं अपगत्य स्थितम् । अश्वस्य अश्वसम्बन्धि यच्छिरः दधीचः इच्छन् इन्द्रः वर्तते । इष इच्छायां तुदादित्वाच्छः (पा० ३।१।७७)। शर्यणावति एतत्संज्ञके सरसि तच्छिरोऽविदत् अविन्दत्(१) ।

इत्यमुना मृतेनापि दधीचा इन्द्रः सुखीकृत इत्यर्थः ।

शर्यणावति—शर्यणा नाम देशाः तेषामदूरभवं सरः शर्यणावत् । मध्वादिषु शर्यणाशब्दस्य पाठात् । मध्वादिभ्यश्च ( पा० ४।२।८६ ) इति चातुरर्थिको मतुप् । संज्ञायामिति ( पा० ८।२।११ ) मतुपो वत्वम् । मतौ बह्वचोनजरादीनाम् ( पा० ६।३।११९ ) इति दीर्घः ।

सतामुपकाराय(२) यः श्रमस्तत्सुखमित्याह—

सतां परतृषां हन्तुं यः श्रमस्तत्सुखं भवेत् ।
मरुतः कूपमुत्क्षिप्य गोतमायाम्बु शं ददुः ॥ २३ ॥

सतां सुखं किम् । परतृषां परपीडां हन्तुं य एव श्रमः तदेव सतां सत्पुरुषाणां सुखम् । अन्यथा मरुतः सन्तो गोतमाय ऋषये अम्बु उदकं

---

(१) अतऊर्ध्वं 'ग' पुस्तके तथा भाष्ये त्वेवं दृश्यते–अविदत् अज्ञासीत् । ज्ञात्वा च तदाहृत्य तदीयै रस्थिभिर्वृत्राणि जघानेति पूर्वेणान्वयः । इति ।

(२) अस्यावतरणिका 'ग' पुस्तके त्वेवं दृश्यते–'जलदानात्परं नास्तीत्यर्थमाह—
श्लोकौ च ।

यतः परतृषां हन्तुं यः श्रमस्तत्सुखं भवेत् ।
मरुतः कूपमुत्क्षिप्य गोतमायाम्बु सन्ददुः ॥ १ ॥
सर्वेषामेव दानानां जलदानं विशिष्यते ।
आश्विनौ मरुतः कूपाद्गोतमाय जलं ददुः ॥ २ ॥

आश्विभ्यां यद्दत्तं तत् 'परावतं नासत्या० (ऋ० १. ११६. ९) इत्यत्र कथ्यते । अत्र मरुतां जलदानमाख्यानपूर्वकं वदामः । 'ऊर्ध्वं नुनुद्रे०' इत्यादि ।

ददुः । किं कृत्वा—शं सुखेन कूपम् अन्यदेशस्थम् उत्क्षिप्य—एतदुक्तं भवति । मरुतां कूपोद्धरणे यः श्रम स्तदेव सुखं बभूवेति ।

अस्मिन्नर्थेयमृक्—( ऋ० १. ८५. १० )

ऊर्ध्वं नुनुद्रेऽवतं त ओजसा दादृहाणं चिद्बिभिदुर्वि पर्वतम् । धमन्तो वाणं मरुतः सुदानवो मदे सोमस्य रण्यानि चक्रिरे ॥

ऊर्ध्वम् । नुनुद्रे । अवतम् । ते । ओजसा । दादृहाणम् । चित् । बिभिदुः । वि । पर्वतम् । धमन्तः । वाणम् । मरुतः । सुऽदानवः । मदे । सोमस्य । रण्यानि । चक्रिरे ॥ २४ ॥

गोतमस्त्रिष्टुभा मरुतं तुष्टाव । चतुर्थेऽहन्याग्निमारुते विनियुक्तम् । होताऽजनिष्टेत्याज्यं० इति खण्डे सूत्रितम् । प्र ये शुम्भन्ते(ऋ०१।८५) जनस्य गोपा ( ऋ० ५।११ ) इति । (सां०श्रौ०सू० ११।७।२ ।

तत्रेतिहासः—गोतम ऋषिः पिपासया पीडितः सन् मरुतः उदकं ययाचे । तदनन्तरं मरुतो दूरस्थं कूपमुद्धृत्य यत्र स गोतम ऋषिस्तिष्ठति तां दिशं नीत्वा ऋषिसमीप ( समीपे कूप ) मवस्थाप्य तत्पार्श्वे आहावं च कृत्वा तस्मिन्नाहावे कूपमुत्सिच्य तमृषिं तेनोदकेन तर्पयाञ्चक्रुः । अयमर्थोऽनया उत्तरया च प्रतिपाद्यते ।

अयमर्थः । हे मरुतः । अवतं कूपम् । अ(१)वत इति कूपनाम (निघण्टु० ३।२३) । ओजसा बलेन ऊर्ध्वम् उपरि नुनुद्रे प्रेरितवन्तः । णुद प्रेरणे । इरयो रे ( पा० ६।४।७६ ) इति रे आदेशः । उत्खातवन्तः । एवं कूपमुत्खाय ऋषेराश्रमं प्रति नयन्तो मरुतः मार्गमध्ये दादृहाणं प्रवृद्धं प्रवृद्धगतिनिरोधकम् । दृह दृहि वृद्धौ—लिटः कानच् । (पा० ३।२।१०६) । (२)पर्वतं शिलोच्चयं चिद् अपि विबिभिदुः । विशेषेण बभञ्जुः । छन्दसि परेपीति (पा० १।४।८१) परप्रयोगः । तथा

---

( १ ) अवस्तात्ततो भवतीति अवतः कूपः । ( वे० भा० )
( २ ) पर्ववन्तम् ।

सुदानवः शोभनदानास्ते मरुतः । वाणम् । वाणः पविः शब्दनाम (निघण्टु १।११)। (१)शततन्त्रीभिर्युक्तं वीणाविशेषं धमन्तो वादयन्तः। सोमस्य मदे सोमपानेन हर्षे सति रण्यानि रमणीयानि स्तुत्यानि धनानि चक्रिरे स्तोतृभ्यः कुर्वन्ति ।

तुनुद्रेऽवतम्—यकाराद्यक्षरं परं वकाराद्यपि वा (ऋ० प्रा० २।३४) इत्यभिहितसन्धिः ।

दाद्दहाणम्—आवयादित्वाद्दीर्घः ( ऋ० प्रा० ९।३० )।

एषाऽपरा—( ऋ० १. ८५. ११ )

जिह्मं नुनुद्रेऽवतं तया दिशासिञ्चन्नुत्सं गोतमाय तृष्णजे।
आगच्छन्तीमवसा चित्रभानवः कामं विप्रस्य तर्पयन्त धामभिः ॥

जिह्मम् । नुनुद्रे । अवतम् । तया । दिशा । असिञ्चन् । उत्सम् । गोतमाय । तृष्णऽजे । आ । गच्छन्ति ईम् । अवसा । चित्रऽभानवः । कामम् । विप्रस्य । तर्पयन्त । धामऽभिः ॥ २५ ॥

ऋष्यादि पूर्ववत् । ऋचोऽयमर्थः । मरुतोऽवतमुद्धृत्य तं कूपं यस्यां दिशि ऋषिर्वसति तया दिशा जिह्मं वक्रं तिर्यञ्चं नुनुद्रे प्रेरितवन्तः । एवं कूपं नीत्वा ऋष्याश्रमेऽवस्थाप्य (२)तृष्णजे तृषिताय गोतमाय ऋषये तदर्थम् उत्सं जलप्रवाहं कूपादुद्धृत्य असिञ्चन्

---

( १ ) 'शतसङ्ख्याभिस्तन्त्रीभिर्युक्तम्' ( वे० भा० )।

(२) तृष्णजे–ञितृषा पिपासायाम्। स्वपितृषोर्नजिङ् (पा.३।२।१७२) प्रत्ययाद्युदात्तत्वम्। पदकारस्य शाकल्यस्य त्वयमभिप्रायः। अन्येष्वपि दृश्यते ( पा० ३।२।१०१ ) इति अपि ग्रहणात् केवलादपि जनेर्डप्रत्ययः। तृष्णा जाताऽस्य सः तथोक्तः ङ्यापोः संज्ञाछन्दसोर्बहुलम् ( पा० ६।३।६३) इति ह्रस्वत्वम्। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्।

तथा सति तृष्णजे इति सप्तम्यन्तं स्यात्। सायणोक्तमिदम् चिन्त्यम्।

आहावे सेचनम(१)कुर्वन्। एवं कृत्वा ईमेनं स्तोतारम् ऋषिं—चित्रभानवः विचित्रदीप्तयः ते मरुतः अवसा ईदृशेन रक्षणेन सह आगच्छन्ति। तत्समीपं प्राप्नुवन्ति। प्राप्य च विप्रस्य मेधाविनो गोतमस्य काममभिलाषं धामभिरायुषो धारकैः उदकैस्तर्पयन्त अतर्पयन्।

साधव उपकर्तुम(२)कृत्यमपि कुर्वन्तीत्याह—

अकृत्यमपि कुर्वन्ति परकार्याय साधवः।
दीर्घजिव्हीं मनुष्येभ्यः कुत्सो हत्वा जयं ददौ॥२४॥

साधवः सत्पुरुषाः परकार्याय परोपकारार्थम् अकृत्यमपि निषिद्धाचरणमपि कुर्वन्ति। कुत्सवत्। यथा कुत्सऋषिः 'न हिंस्यात्सर्वा भूतानी' त्येवं धर्मं परित्यज्य मनुष्येभ्योऽभयं ददौ। किं कृत्वा दीर्घजिव्हीं राक्षसीं हत्त्वा। इति कुत्सेन साधुना मनुष्यार्थं निषिद्धाचरणमपि कृतम्। कृत्वा च 'अप नः शोशुचदघम्' (ऋ० १. ९७) इत्यनेन पापं क्षालितम्।

तत्रेतिहासः—दीर्घजिव्ही नाम राक्षसी सर्वान् यज्ञान् बबाधे। एतां हन्तुमिन्द्रो शक्तः सन् सर्वस्य मित्रभूतं कुत्समब्रवीत्। एषा हन्तव्येति। स चावधीत्। तं वागभ्यवदद् अनुचितं त्वयाऽऽचरितम् यस्त्वं सर्वेषां मित्रभूतः सन् क्रूरमकार्षीरिति। स ऋषिः शोकं प्राप्नोत् स ऋषिः 'अप नः' (ऋ० १. ९७.) इत्यनेन सूक्तेनाग्निं स्तुत्वा शोकमपागमयत्।

सौमित्रं(३) भवति दीर्घजिव्ही वा इदं रक्षो सर्वहा यज्ञभवलिहन्त्य-

---

(१) 'अवानयन्' इति वे० भा०।

(२) 'ग' पुस्तकेऽवतरणिका त्वेवम्—साधूनां परकार्यं प्रधानमित्याह। श्लोकश्च—अकृत्यमपि कुर्वन्ति परकार्येषु साधवः।
कुत्सस्तुष्टाव शुच्यग्निं दीर्घजिव्ह्या वधे कृते॥ इति।

(३) तथा च ताण्डकम्—दीर्घजिव्ही नाम राक्षसी यज्ञानवलिहन्त्यचरत्। तामिन्द्रः कया च मायया हन्तुं नाशंसत। अथ ह सुमित्रः कुत्सः कल्याण आस तमब्रवीदिति। तस्मादेतत्सूक्तं शुगपनयनाय विनियोज्यम्। अत एव हि सूत्रकारेण भारद्वाजेन दशमेऽहनि कर्तव्ये शान्तिकर्मणि यजुर्वेदे पठितमेतत्सूक्तं विनियुज्यते—'नव च स्रुवाहुतरप नः शोशुचदघमिति'॥ वे० भा०। (ऋ० १।९७)

चरत्तामिन्द्रः कयाचन मायया हन्तुं नाशंसतेत्यादि'—छान्दोग्यपञ्चविंशं ब्राह्मणम् ( १३. ६. ९.)

'तथा ऋग्विधानम्'—अनेन सूक्तेन मध्याह्ने स्नात्वा शुचिकामो घृतं प्रत्यृचं जुहुयात् । अथवा अष्टौ समिधः प्रत्यृचं जुहुयात् ।

'अप नः शोशुचदिति' स्नात्वा मध्यन्दिने रवौ ।

शुद्धिकामो (१)यताहारः प्रत्यृचं जुहुयाद्घृतमिति ॥ (श्लो० ११९)

कुत्सो गायत्र्याऽग्निं तुष्टाव । आग्रायण्यां धूमशातने विनियुक्तं महाव्याहृतीः सावित्रीं चोदाहृत्याप नः शोशुचदघमिति, एतेन सूक्तेनेति गृह्ये ।

तत्र ऋक्—( ऋ० १. ९७. १. )

**अप नः शोशुचदघमग्ने शुशुग्ध्यारयिम् ।**

**अप नः शोशुचदघम् ।**

**अप । नः । शोशुचत् । अघम् । अग्ने । शुशुग्धि ।**

**आ । रयिम् । अप । नः । शोशुचत् । अघम् ॥ २६ ॥**

हे अग्ने नोऽस्माकम् अघं पापं अपशोशुचत्(२) शोकग्रस्तं सद्विनश्यतु । यद्वा अस्मदीयं शत्रुं शोचयतु । अपि चास्माकं रयिमासमन्ताच्छुशु(३)ग्धि प्रकाशितं (४)कुरु । शुच दीप्तौ—द्विरुक्तिरादरातिशयद्योतनाय ।

इति कुत्सेन परार्थमकृत्यं कृतमिति दर्शितम् ।

---

( १ ) 'शुचिकामो जिताहारः' इत्यपि पाठः ।

( २ ) शोशुचदिति—शुच शोके । अस्माद्यङ्लुगन्तात् लेट्यडागमः ( पा० ३. ४. ९४ ) अदादिवच्चेति वचनाच्छपो लुक् । 'अभ्यस्तानामादिः, ( पा० ६. १. १८९ ) इति आद्युदात्तत्वम् । 'अघं शोचुचच्च रयिं शुशुग्धि च' इति चार्थप्रतीतेः 'चादि लोपे विभाषा' (पा० ८.१.६३) इति निघातप्रतिषेधः ।

( ३ ) शुशुग्धि—शुच दीप्तौ लोटि बहुलं छन्दसीति शपः श्लुः । हुझल्भ्यो हेर्धिः (पा० ६.४.१०१) चोः कुः (पा० ८.२.३०)इति कुत्वम् ।

( ४ ) उक्तार्थमपि वाक्यमादरातिशयद्योतनाय पुनः पठ्यते । अवश्यमस्माकमघं विनश्यत्विति । वे० भा०

∴ उक्तं कर्तव्यमित्याह—

उक्तं चैव प्रकर्तव्यं हिंसायुक्तं भवेद्यदि ।
पश्चादिहिंसनं कुत्स ऋषिराह तमध्वरम् ॥ २५ ॥

यदि हिंसायुक्तं वधयुक्तं भवेत्तर्हि यदुक्तं श्रुतिस्मृत्युक्तं तत्पुरुषेणावश्यमेव कर्तव्यम् । 'सोम एवैष प्रत्यक्षं यत्पशुरुदकपेयमिव ह स्याद्यदेष आलभ्येतेति' (कौ० ब्रा० १२।६) यदुक्तं तत्कर्तव्यमेवेति । यस्मिन्यज्ञे पश्वादीनां पशुपलाशाश्वत्थवरणकादीनां हिंसनं भवति तथापि कुत्स ऋषिस्तं हिंसायुक्तं यज्ञं—'यद्वा मरुत्वः' इत्यस्याम् अध्वरं ध्वरतिर्हिंसा तद्रहितमाह—

तत्र ऋक्—( ऋ० १. १०१. ८ )

यद्वा मरुत्वः परमे सधस्थे यद्वाऽवमे वृजने मादयासे ।
अत आयाह्यध्वरं नो अच्छा त्वाया हविश्चकृमा सत्यराधः॥

यत् । वा । मरुत्वः । परमे । सधऽस्थे । यत् । वा । अवमे । वृजने । मादयासे । अतः । आ । याहि । अध्वरम् । नः । अच्छ । त्वाऽया । हविः । चकृम । सत्यऽराधः॥ २७॥

कुत्सस्त्रिष्टुभा इन्द्रं तुष्टाव । उत्तमे छन्दोमे मरुत्वनीये विनियुक्तम् । अष्टाचत्वारिंशत्खण्डे गायत्साम [ ऋ० १. १७३ ] प्रमन्दिन । [ ऋ० १. १०१ ] इति सूत्रितम् ( सां० श्रौ० सू० १०. ११. ६ )।

ऋचोऽयमर्थः । हे मरुत्वः । मतुवसोरिति [ पा० ८.३.१ ] सम्बुद्धौ नस्य रुत्वम् । मरुद्भिर्युक्तेन्द्र परमे उत्कृष्टे सधस्थे सहस्थाने गृहे—सधमादस्थयोरिति [ पा० ६.३.९६ ] सहस्य सधादेशः । यद्वा यदि वा अवमे अर्वाचीने नीचीने वृजने—वृज्यते रिक्तीक्रियते धनमऽस्मान्निति वृजनं गृहम् । तस्मिन्मादयासे तृप्तो(१) वर्त्तसे । मद तृप्तौ—अतोऽस्मादुभय-

(१) मद तृप्तियोगे इति धातुपाठः ।

विधात्स्थानात् नो ऽस्माकमध्वरं हिंसारहितं यज्ञम् । तथा यास्कः—'अध्वर इति यज्ञनाम ध्वरतिर्हिंसाकर्मा—तत्प्रतिषेध [ नि० १.८ ] इति । तथा दीर्घतमाश्च व्यर्थहिंसाया अभावान् 'न वा उ एतन्म्रियसे'० [ ऋ० १.१६२.२१ ] इति जीवन्तमिव स्तौति । तस्मादध्वरं हिंसारहितं यज्ञं अच्छ आभिमुख्येन आयाहि आगच्छ । अच्छाभेराप्तुमिति शाकपूणे र्मतम् [ नि० ५. २८ ] हे सत्यराधः सत्यधन त्वाया त्वत्कामनया वयं हविश्चकृम कृतवन्तः।

चकृम-दाधिम मदतादित्वाद् [ ऋ० प्रा० ८.१५ ] दीर्घः ।

'अथ सर्वा ह वै देवताः पशुमालभ्यमानं समुपगच्छन्ते मम नामेति' ( कौ० ब्रा० १०।६ ) । 'अत्रैव पशवो हिंस्या' इत्यादि श्रुतिस्मृत्युदितं मारणमपि हिंसा नेति सिद्धम् ।

द्वेषदुष्टं मनो न (१)कार्यमित्याह—

द्वेषदुष्टं मनः कार्यं पुंसा नात्महितैषिणा ।
इन्द्रोऽवधीद्द्विषः पिप्रुकुयवशुष्णशम्बरान् ॥ २६ ॥

आत्महितमिच्छतीति आत्महितैषी तेन आत्महितैषिणा पुंसा द्वेषेण दुष्टं मनो न कार्यम् । पिप्रुकुयवादीनां द्विषां दृष्टान्तेन दृढयति । यथा पिप्रुकुयवशुष्णशम्बरादीन् इन्द्रोऽवधीत्—हनो वध लिङि [पा० २.४.४२] 'लुङि च' [पा० २.४.४३] इति वधादेशः । यतः एतान् द्विषः एतेषां केषामित्याह । ऋजिश्वनः पिप्रुर्द्विट्—कुयवशुष्णौ कुत्सस्य द्विषौ । शम्बरो दिवोदासस्यातिथिग्वस्य । यो दिवोदासः सोऽतिथिग्वः ।

त्वं पिप्रो र्नृमणः प्रारुजः पुरः [ ऋ०१.५१.५ ]
त्वं पिप्रुं मृगयं शूशुवांसमृजिश्वने [ऋ० ४.१६.१३]

---

( १ ) यद्यपीयमवतरणिका 'क' 'ख' पुस्तकयोर् 'अनुक्तं सुखरूपम्' इत्यास्यानन्तरं दत्तास्ति तथाप्यस्या ऋचः संहिताक्रमानुसारेण पूर्ववर्त्तित्वादियमेवाऽत्र प्रथमतया निर्दिष्टा ज्ञातव्या । 'ग' पुस्तके त्वियमवतरणिका नास्त्येव ।

इति पिप्रो द्वैट्त्वे निगमौ ।

त्वं ह त्यदिन्द्र कुत्समावः ( ऋ० ७. १९. २२ )

स रन्धयत्सदिवः सारथये शुष्णमशुषं कुयवं कुत्साय ( ऋ० २. १९. ६ )

इति शुष्णस्य कुवयस्य द्विट्त्वे निगमौ ।

दिवोदासाय शम्बरम् ( ऋ० ९. ६१. २. )

अरन्धयोऽतिथिग्वाय शम्बरम् । ( ऋ० १.५१.६)

इति शम्वरस्य द्विटत्वे निगमौ ।

अनुक्ता अन्ये बहवः । इन्द्र एतेभ्यो ऋजिश्वादिभ्यो एतान् पिप्र्वादीन् द्विषोऽवधीत् ।

तत्र ऋक् [ ऋ० १. १०३. ८ ]

शुष्णं पिप्रुं कुयवं वृत्रमिन्द्र यदाऽवधी र्वि पुरः शम्बरस्य तन्नो मित्रो वरुणो मामहन्तामदितिःसिन्धुःपृथिवी उत द्यौः

शुष्णम् । पिप्रुम् । कुयवम् । वृत्रम् । इन्द्र । यदा । अवधीः । वि । पुरः । शम्बरस्य । तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥ २९ ॥

कुत्सस्त्रिष्टुभा इन्द्रं स्तौति । उत्तमे छन्दोमे विनियुक्तम् । तत्त इन्द्रियम् ( ऋ० १.१०३ ) अहं भुवम् ( ऋ० १०.४८ ) इति सूत्रम् । ( सां० श्रौ० सू० १०. ११. ७ )

ऋचोयमर्थः । हे इन्द्र त्वं शुष्णादीन् चतुरो द्विषः असुरान् यदा ऽवधीः हतवानसि । तदानीं शम्बरस्यासुरस्य पुरः नगराणि विदारित(१)वानसि । यदनेन सूक्तेन उक्तं प्रार्थितं तन् नोऽस्माकं

---

( १ ) 'असुराणां मुख्येषु हतेषु अन्यान्यपि असुरपुराणि विदीर्णान्यासन्नित्यर्थः । इति वेदभाष्ये ।

मित्रादयो देवाः ममहन्तां पूजितं कुर्वन्तु ।

मामहन्ताम्—मह पूजायां । अन्येषामपि दृश्यत इति दीर्घः (ऋ० प्रा०९.३१) इति इन्द्रेण द्विषो हतास्तस्माद्द्वेषो न कर्तव्य इत्युक्तम् ।

अनुक्तं(१) सुखरूपमपि हिंसेत्याह—

अनुक्तं च न कर्त्तव्यं सुखरूपं भवेद्यदि ।
परस्त्रीणां हि संभोगात्कुत्स आहेति निष्षपी ॥ २७ ॥

यत्कर्म अनुक्तं श्रुतिस्मृत्योर्निषिद्धं तत्सुखरूपमपि यदि हिंसा न भवेत् तन्न कर्तव्यम् । कुतः । परस्त्रीणां सम्भोगाद्धि यस्मात्कुत्सः निष्षपी स अस्पृश्य इत्याह—

तत्र ऋक्—( ऋ० १. १०४. ५. )

प्रति यत्स्या नीथाऽदर्शि दस्योरोको नाच्छा सदनं जानती गात् ।
अध स्मा नो मघवञ्चर्कृतादिन्मा नो मघेव निष्षपी परा दाः ॥

प्रति । यत् । स्या । नीथा । अदर्शि । दस्योः । ओकः । न । अच्छ । सदनम् । जानती । गात् । अध । स्म । नः । मघऽवन् । चर्कृतात् । इत् । मा । नः । मघाऽइव । निष्षपी । परा । दाः ॥ २८ ॥

परस्मै सुखं दत्वा पुण्यवान्, परस्मै दुःखं दत्त्वा पापवान् इति यदुक्तं तदत्र विपरीतं भवति । उक्तत्वात् । यदुक्तमग्नीषोमीयं पशुमालभेत इत्यादिभि र्वाक्यै स्तद् दुःखरूपमपि स्वर्गसाधनं भवति । यद्यन्निषिद्धं परस्त्रीसंभोगजनितसुखादि तत्सुखरूपमपि नरकाय भवति—इत्येतत्सम्यगुक्तम् ।

कुत्सस्त्रिष्टुभा इन्द्रं तुष्टाव । ऋचोऽयमर्थः—

---

(१) 'ग' पुस्तकेऽवतरणिका त्वेवम्—
परस्त्रीपरं पापं नास्तीत्याह—
अनुक्तं च न कर्त्तव्यं सुखरूपं भवेद्यदि ।
परस्त्रीणाञ्च सम्भोगात्कुत्सः प्राह स निष्षपी ॥ १ ॥ इति ।

हे मघवन् धनवन्निन्द्र । यत् यदा नीथा(१) नयनहेतुभूता स्या सा पदवी अस्माभिः प्रत्यदर्शि दृष्टाऽभूत्—सा च पदवी दस्योः उपक्षपयितुः कुयवस्य असुरस्य सदनं गृहं अच्छ आभिमुख्येन (२)गात्–गता–प्राप्ता । तत्र दृष्टान्तः । जानती स्वकीयं वत्समभिजानती गौः ओको न । ओकः निवासस्थानं स्वकीयं गोष्ठम् । ओ-(३)क इति निवासनाम ( नि० ३।३ ) इति यास्कः । यथा प्राप्नोति तद्वन्मार्गोऽप्यसुरस्य गृहं प्राप्तः । अथानन्तरमेव चर्कृ-(४)तात् पुनः पुनस्तेनासुरेण कृतात् उपद्रवात् नोऽस्मान् रक्षेति शेषः । इत् पूरणार्थः । मिताक्षरेष्वनर्थकाः कमीमिद्विति ( नि० १।९ )। रक्षयित्वा नोऽस्मभ्यं निष्षपी स्त्रीकामो भवति तस्य मघेव धनानि इव परा(५) दाः स निष्षपी अस्पृश्यो जारो भूत्वा धनानि विनाशयति । यथा अस्थाने परित्यजति तद्वत् ।

मा परा दाः—डुदाञ् दाने–गातिस्थेति ( पा०२।४ ) सिचो लुक् । वहुलं छन्दस्यमाङ्योगेपि ( पा०६।४।७५ ) इत्यडभावः ।

(६)निष्षपी स्त्रीकामो भवति विनिर्गतसपः । सपः सपतेः

---

( १ ) नीथा–णीञ प्रापणे । 'हनिकुषिनीरामिकाशिभ्यः क्थन् ( उणादि सू० १६७ ) इति करणे क्थन् प्रत्ययः ।

( २ ) गात्—एते लुङि 'इणो गा लुङि' ( पा० २।४।४५ ) इति गादेशः । 'गातिस्थाघुपा० ( पा० २।४।७७ ) इति सिचो लुक् । 'बहुलं छन्दस्यमाङ्योगेऽपि ( पा० ६।४।७५ ) इत्यडभावः ।

( ३ ) 'अथ स ओकः पुनरेव तदेति यत आगतो भवति'।
ओक इति निवासनामोच्यते । इति निरुक्तम् ॥

( ४ ) चर्कृतात्—करोते र्यङ्लुगन्तात् 'निष्ठा' ( पा० ३।२।१२ ) इति 'क्त' प्रत्ययः ।

( ५ ) परा दाः परित्याक्षीः । अस्माभि र्ज्ञातेन मार्गेण गत्वा अस्मदुपद्रवकारिणमसुरं जहीति तात्पर्यार्थः ।

( ६ ) निष्पपी-षप समवाये । सपति समवैति योन्या सङ्गच्छत इति सपः शेपः । पचाद्यच् ( पा० ३।१।१३४ ) । निर्गतो नित्योद्धृतः सपः शेपो यस्य स स्त्रीव्यसनी निष्षपः । वर्णव्यापत्त्या ईकारः ।

स्पृशतिकर्मणः। इति यास्कः ( नि० ५।१६ )।

अच्छेति 'सुतायाहीति ( ऋ० प्रा० ७।६ ) दीर्घः।

स्म-दधिममदतेति ( ऋ० प्रा० ८।१५ ) दीर्घः।

अनुक्तं सुखरूपमपि न कार्यमिति निष्षपीदृष्टान्तेन दर्शितम्।

यदि(१) भ्राता द्विट् स शत्रुरित्याह—

अन्यः सुहृज्जनो भ्राता शत्रु भ्राता सहोदरः।
अश्विभ्यां तारितो भुज्युस्त्रितः कूपे निपातितः ॥२८॥

अन्यो यः सुहृज्जनः प्रीतिकरः स एव भ्राता। सहोदरोऽपि समानोदरोपि यद्यप्रीतिकरः द्विट् स एव भ्राता शत्रुः। एतमर्थमुदाहरणतया दृढयति। यथाऽश्विभ्यां सुहृद्भ्यां प्रीतिकराभ्यां भुज्युस्तौग्र्यस्तारितः समुद्रात्। भ्रातृत्वं कृतमित्यर्थः। तदग्रे तुग्रो ह भुज्युमिति (ऋ०१।११६।३) दर्शयिष्यते। अत्र तु भ्रातृभ्यां सहोदराभ्यां द्वितैकताभ्यां त्रितः कनीयान् कूपे निपातितः शत्रुत्वं कृतं तद्वदामः।

तत्र ऋक् ( ऋ० १.१०५.१७ )

त्रितः कूपेऽवहितो देवान्हवत ऊतये।
तच्छुश्राव बृहस्पतिः कृण्वन्नंहूरणादुरु वित्तं मे अस्य रोदसी

त्रितः। कूपे। अवऽहितः। देवान्। हवते।

---

(१) 'ग' पुस्तकेऽवतरणिका त्वेवम्-

भ्रातुः परं शत्रु र्नास्तीत्याह-

श्लोकश्च-

अन्यः सुहृज्जनो भ्राता शत्रुर्भ्राता सहोदरः।
अश्विभ्यां तारितस्तौग्र्यस् त्रितः कूपे निपातितः ॥ १५॥

इति। तुग्रस्यपुत्रो भुज्युस्तारितः समुद्रात् तन्नासत्याभ्यां ( ऋ० १. ११६.) सूक्ते दर्शयिष्यते। अत्र तु त्रित आप्त्यः सहोदराभ्यां भ्रातृभ्यां कूपे निपातित इत्युच्यते-इति।

ऊतये । तत् । शुश्राव । बृहस्पतिः । कृण्वन् । अंहूरणात् । उरु । वित्तम् । मे । अस्य । रोदसी इति ॥ ३० ॥

( उपरिष्टाद्वर्ण्यमान इतिहासो बृहद्देवतायां किञ्चिद्भेदेन परिदृश्यते । अतएव नीतिमञ्जर्यां हस्तलिखितपुस्तके नोल्लिखितः ) । स यथा—

बृहद्देवता—( अ०३ श्लो० १३२—१३७ )

त्रितं गास्त्वनुगच्छन्तं शूराः सालावृकीसुताः ।
कूपे प्रक्षिप्य गाः सर्वास्तत एवापजह्रिरे ॥ १३२ ॥
स तत्र सुषुवे सोमं मन्त्रविन्मन्त्रवित्तमः ।
देवांश्चावाहयत्सर्वास्तच्छुश्राव बृहस्पतिः ॥ १३३ ॥
आगच्छतोऽथ तान् दृष्ट्वा क्व वसत्यस्य तत्त्वतः ।
सर्वदृक्त्वश्च वरुणस्यार्यम्णश्चेत्युपालभत् ॥ १३४ ॥
कूपेष्टकाभि र्वणितान्यङ्गान्येवाभवन्मम ।
दृष्ट्वा सर्वानहं स्तौमि यद्यप्येको न पश्यति ॥ १३५ ॥
बृहस्पतिप्रचोदिता विश्वे देवगणास्त्रयः ।
जग्मुस्त्रितस्य तं यज्ञं भागांश्च जगृहुः सह ॥ १३६ ॥
बृहस्पति स्त्रितस्यैतज्ज्ञानं विज्ञानमेव च ।
तृचेनान्त्येन सूक्तस्य जगादर्षिरसा
(ऋ० १।१०५।१६–१८)विति ॥ १३७ ॥

तत्रे(१)तिहासः–एकतो द्वितस्त्रित इति पुरा त्रय ऋषयो भ्रातरो बभूवुः । ते कदाचिन्मरुभूमावरण्ये वर्त्तमाना पिपासासन्तप्तगात्राः सन्त एकं कूपमविन्दन् । तत्र त्रिताख्य एको जलपानाय कूपं प्राविशत् । स्वयं पीत्वा इतरयोश्च पानाय कूपादु ( दकमु ) द्धृत्य प्रादात् । तौ तदुदकं पीत्वा त्रितं कूपे पातयित्वा तदीयं धनं सर्वमपहृत्य कूपकं ( कूपञ्च ) रथचक्रेण पिधाय प्रास्थिषाताम् । ततः

( १ ) 'अत्र शाट्यायनिनः इतिहासमाचक्षते, इति वेदभाष्ये ।

कूपे पतितः सन् स त्रितः कूपादुत्तरीतुमशक्नुवन् सर्वे देवा मामुद्धरन्त्विति मनसा सस्मार तत स्तेषां स्तावकमिदं सूक्तं ददर्श। तत्र रात्रौ कूपस्यान्तश्चन्द्रमसो रश्मीन् पश्यन् परिदेवयते।

कुत्सः(१) त्रितो वाऽनेन सूक्तेन विश्वान्देवान् स्तौति तथा चानुक्रमणी—"चन्द्रमा एकोनाप्त्यस्त्रितो वा वैश्वदेवं हि पाङ्क्तमन्त्या त्रिष्टुबष्टमी महाबृहती यवमध्या" इति।

तत्र यास्कः ( नि० ४।६ ) "त्रितं कूपेऽवहितमेतत् सूक्तं प्रतिबभौ। तत्र ब्रह्मेतिहासमिश्रमृङ्मिश्रं गाथामिश्रं भवति। त्रितस्तीर्णतमो मेधया बभूव अपि वा सङ्ख्यानामैवाभिप्रेतं स्यादेकतो द्वितस्त्रित इति त्रयो बभूवुः" इति।

ऋचोऽयमर्थः। कूपे अवहितः पातितः त्रित एतत्संज्ञ ऋषिः ऊतये रक्षणाय देवान् हवते स्तुतिभिराकारयति। तदेतदा(२)ह्वानं बृहस्पतिर्देवः शुश्राव श्रुतवान्। किं कर्तुं शुश्राव। अंहूरणात् पापरूपादस्मात् कूपात्। अंहुरोंऽहस्वानंहूरण(३)मित्यप्येतस्य भवति इति यास्कः ( नि० ६।२७ )। उन्नीय उरु विस्तीर्णं शोभनं(४)

---

( १ ) चन्द्रमा ( ऋ० १. १०५ ) इत्येकोनविंशत्यृचं सूक्तं द्वादशम् अपां पुत्रस्य त्रितस्य कूपे पतितस्य कुत्सस्य वाऽऽर्षम्। तथा चोभयोः कूपनिपात आम्नायते।

त्रितः कूपेऽवहितो० ( ऋ० १. १०५. १७) इति, काटे निबाह्ळ ऋषिरह्वदूतये ( ऋ० १.१०६.६ ) इति च।

त्रितस्यापां पुत्रत्वं तैत्तिरीयाः स्पष्टमामनन्ति ( तै. ब्रा.३.२.८. ) तत एकतोऽजायत। स द्वितीयमभ्यपातयत्। ततो द्वितोऽजायत। स तृतीयमभ्यपातयत्। ततस्त्रितोऽजायत। यदद्भ्योऽजायन्त तदाप्यानामाप्त्यत्वमिति। तमेतमाप्त्यं 'त्रितस्तद्वेदाऽऽप्त्य' इति तकारोपजननेन वयमधीमहे इति। वेदभाष्यम्।

( २ ) 'तदेतत् त्रितस्याह्वानं बृहस्पति र्बृहतां महतां देवानां पतिः रक्षक एतत्संज्ञको देवः शुश्राव श्रुतवान्' इति भाष्ये।

( ३ ) अन्धकूपः अंहूरणः इति दुर्गाचार्यकृतनिरुक्तवृत्तौ।

( ४ ) 'विस्तीर्णं त्राणं कुर्वन्' इति दुर्गः।

कृण्वन्–कुर्वन्–रोदसी द्यावापृथिव्यौ मे मम अस्य कूपपतितस्य यदुःखं तद्वित्तं जानीतम् ।

कूपेऽवहितः–यकाराद्यक्षरं परं वकाराद्यपीति ( ऋ० प्रा० २।१४ ) वपरत्वात् पूर्वरूपम् ।

इति भ्रातृभ्यां शत्रुत्वं कृतमित्युक्तम् ।

श्रुतिस्मृत्युक्ते कृते देवत्वं प्राप्नोतीत्याह—

श्रुतिस्मृत्युक्त आचारः कर्तव्योऽमृतिमिच्छता ।
नरोऽमृतत्वमापन्ना ऋभवः कर्मणा तयोः ॥ २९ ॥

अमृतिम् अमरणं देवत्वमिच्छता पुंसा श्रुत्युक्तोऽग्निहोत्रादिः आचारः स्मृत्युक्तः शौचाचमनाद्याचारः कर्तव्यः ऋभुवत् । यथा ऋभवो नरो मनुष्याः सन्तः तयोः श्रुतिस्मृत्योः कर्मणा अमृतत्वं देवत्वमापन्नाः ।

तदर्थेयमृक् [ ऋ० १. ११०. ४ ]

विष्ट्वी शमी तरणित्वेन वाघतो
मर्तासः सन्तो अमृतत्वमानशुः ।
सौधन्वना ऋभवः सूरचक्षसः
संवत्सरे समपृच्यन्त धीतिभिः ॥

विष्ट्वी । शमी । तरणिऽत्वेन । वाघतः । मर्तासः । सन्तः । अमृतऽत्वम् । अनशुः । सौधन्वनाः । ऋभवः । सूरऽचक्षसः । संवत्सरे । सम् । अपृच्यन्त । धीतिऽभिः ॥३१॥

कुत्सस्त्रिष्टुभा ऋभूंस् तुष्टाव । आभिप्लविके पञ्चमेऽहनि विनियुक्तम् । आयुः पञ्चमिति खण्डे 'ततं मे अपस्तदु तायते पुन' ( ऋ० १. ११०. १ ) रित्यार्भवम् ( सां० श्रौ० सू० १।५।४ ) ।

ऋचोऽयमर्थः । वाघतः(१) ऋत्विग्रूपास्ते ऋभवः । तरणि-

(१) 'वाघतः–ऋत्विङ् नामैतत् । अत्र च सामर्थ्यात्तद्वन्तो वक्ष्यन्ते । ऋत्विग्भिरुपेता ऋभवः' । इति वेदभाष्ये ।

त्वेन(१) क्षिप्रत्वेन (२)विष्ट्वी-(३)शमी ( निघण्टु २।१ ) एते कर्मनामनी। विपॢ व्याप्तौ-स्नात्व्यादयश्च ( पा० ७।१।४९ ) इति क्त्वा प्रत्ययस्य ईकारान्तादेशः। ते सर्वकर्माणि व्याप्य मर्त्तासः मनुष्याः सन्तः अमृतत्वं देवत्वम् आनशुः। कृतैः कर्मभिर्देवत्वमानशिरे। देवत्वं प्राप्य सौधन्वनाः सुधन्वन आङ्गिरसस्य त्रयः पुत्राः ऋभुर्विभ्वा वाज इति। एतेन ऋभवः सूरचक्षसः सूर्यसमान(४)प्रकाशाः संवत्सरे-संवत्सरावयवभूते वसन्तादिकाले धीतिभिरनुष्ठेयैर्ज्योतिष्टोमादिभिः कर्मभिः समपृच्यन्त। संपृक्ता अभवन्। देवैः सह यज्ञभागार्हा बभूवुरित्यर्थः।

अत्र निरुक्तम् ( नि० ११।१६ ) "कृत्वा कर्माणि क्षिप्रत्वेन वोढारो मेधाविनो वा मर्त्तासः सन्तो अमृतत्वमानशिरे सौधन्वना ऋभवः सूरख्याना वा, सूरप्रज्ञा वा, संवत्सरे समपृच्यन्त धीतिभिः कर्मभिः" इति।

अथा॑ दे॒वेष्व॑मृत॒त्वमा॑नश ( ऋ० ४. ३६. ४ )

इति निगमः।

ते शोभनकर्मकरणेन सुहस्ता उक्तास् तद्यथा—

शं न॑ ऋ॒भवः॑ सु॒कृतः॑ सु॒हस्ताः॑ ( ऋ० ७. ३५. १२ )

ग॒णं दे॒वाना॑मृभवः सुहस्ताः ( ऋ० ४. ३५. ३ )।

---

( १ ) तरणित्वेन-तरणिरिति क्षिप्रनाम ( निघण्टु २।१५ )। क्षिप्रत्वेन शैघ्र्येण। इति वेदभाष्यम्।

( २ ) विष्ट्वी-यद्यप्येतत्कर्मनाम। तथाप्यत्र क्रियापरम्। व्याप्य कृत्वेत्यर्थः। एवं कर्माणि कृत्वा। वे० भा०।

( ३ ) शमी-कर्मनामैतत्। यागदानादीनि कर्माणि। अन्यान्यपि एकं॑ च॒मसं॑ च॒तुरं॑ कृणोतन॒ ( ऋ० १.१६१.२ ) इत्यादिना देवैरुक्तानि कर्माणि। वे० भा०।

( ४ ) 'सूर्यसदृशप्रज्ञाना वा' इति भाष्ये।

कर्मणा सुहस्ता निविशत्—इत्येवमादयः ।
तस्मादुक्तं देवत्वे हेतुरिति ॥

सन्त (१)उपकारनिरता इत्याह—

सन्तः प्रभुत्वमापन्ना नोपकारं त्यजन्ति हि ।
ऋभवः प्राप्य देवत्वमृषेर्वत्समजीवयन् ॥ ३० ॥

त एव सन्तो नान्ये ये प्रभुत्वमापन्नाः महत्त्वं प्राप्य उपकारं सत्कारं न त्यजन्ति । ऋभुवत् । यथा ऋभवो देवाः कर्मणा देवत्वं प्राप्य उपकारं न तत्यजुः । कुतः । कस्यचिदृषेर्वत्सं (२)मृतायाः अजीवयन् ।

तदाह—( ऋ० १. ११०. ८ )

निश्चर्मण ऋभवो गामपिंशत सं वत्सेना सृजता मातरं पुनः ।
सौधन्वनासः स्वपस्यया नरो जिव्री युवाना पितराऽकृणोतन ।

निः । चर्मणः । ऋभवः । गाम् । अपिंशत । सम् । वत्सेन । असृजत । मातरम् । पुनरिति । सौधन्वनासः । सुऽअपस्यया । नरः । जिव्री इति । युवाना । पितरा । अकृणोतन ॥ ३२ ॥

तत्रेतिहासः । पुरा कस्यचिदृषेर्धेनुर्मृता । स ऋषिस्तस्या धेनोर्वत्सं दीनं दृष्ट्वा ऋभूंस्तुष्टाव । ऋभवस्तादृशीमन्यां धेनुं कृत्वा तदीयेन चर्मणा सं(३)वार्य तेन वत्सेन समयोजयन्निति । ऋष्यादि पूर्ववत् ।

---

(१) 'ग' पुस्तकेऽवतरणिका त्वेवम्-
सन्त उपकारं न त्यजन्तीत्याह--
श्लोकश्च--
सन्तः प्रभुत्वमापन्ना नोपकारं त्यजन्ति ये ।
वत्सेन गां समं चक्रु ऋभवः पितरौ नवौ ॥
इति । अत्राख्यानम्-पुरा०-इत्यादि ।
(२) अत्र 'कस्यचिदृषेर्मृताया धेनोर्वत्सम्' इत्यनेन भवितव्यम् ।
(३) 'संवीय' इति 'ग' पुस्तके तथा वेदभाष्ये पाठः ।

ऋचोऽयमर्थः हे ऋभवः यूयं चर्मणः। तृतीयार्थे षष्ठी। चर्मणा त्वचा गां धेनुं निरपिंशत। निःशेषेण (१)संयुक्तामकुरुत तदनन्तरं मातरं गां पुनर्वत्सेन समसृजत(२)। संश्लिष्टामकुरुत। अपि च—हे सौधन्वनासः सुधन्वनः पुत्राः नरः नेतारः स्वपस्यया शोभनं अपः कर्म स्वपः तदिच्छा स्वपस्या(३) तया शोभनकर्मेच्छया(४)। जि(५)व्री जीर्णौ वृद्धौ पितरा मातापितरौ युवाना पुनः यौवनोपेतौ अकृणो(६)तन। तप्तनप्तेति (पा० ७।१।४५) तनबादेशः। यूयमकुरुत्वम्।

तथा निगमाः।

निश्चर्मणो गामरिणीत धीतिभिः (ऋ० १.१६१.७)।

यया धिया गामरिणीत चर्मणः (ऋ० ३.६०.२)।

इत्येवमादयः।

पुनर्—वारपुनः पुनरिति (ऋ० प्रा० १।११७) रेफः।

---

(१) 'निःशेषेणाश्लिष्टां संयुक्ताम्' इति वेदभाष्ये 'ग' पुस्तके च।

(२) 'संमृष्टामकुरुत' इति 'ग' पुस्तके। समगमयतेति यावत्' इति 'ग' पुस्तके वेदभाष्ये च।

(३) स्वपस्या—सुप आत्मनः क्यच् (पा०३।१।८)। 'अ प्रत्ययात्' (पा० ३।३।१०२) इति भावे अकारप्रत्ययः। वे० भा०

(४) 'यागदानाद्याचरणेनेति यावत्' इति 'ग' पुस्तके भाष्ये च।

(५) जिव्री—जॄष् वयोहानौ। जॄशॄस्तृजागृभ्यः क्विन् (उ०सू०५०३) ऋत इद्धातोः (पा० ७।१।१००) इति इत्वम्। रेफवकारयोः स्थानविपर्ययः। बहुलवचना'द्धलि च' (पा०८।२।७७) इति दीर्घाभावः। नित्वात् (पा० ६।१।१९७) आद्युदात्तत्वम्।

(६) अकृणोतन—कृवि हिंसाकरणयोश्च। इदित्वान् (पा०७।१।५८) नुम्। धिन्वि कृण्व्योर च (पा० ३।१।८०) इत्युप्रत्ययः। तत्सन्नियोगेन वकारस्य चाकारः। अतो लोपे (पा० ६।४।४८) सति स्थानिवद्भावाल्लघूपधगुणाभावः (पा० १।१।५६)। लङ्मध्यमबहुवचनस्य 'त' शब्दस्य तप्तनप्तनथनाश्च (पा०७।१।४५) इति तनबादेशः, तस्य पित्वेन ङित्वाभावाद्गुणः। वे० भा०।

असृजता मातरम्—(ऋ०प्रा०८।३१) इति पूर्वपदान्तदीर्घः।
इति ऋभुभिर्देवत्वेपि उपकारो न त्यक्त इत्युक्तम्।

सन्तो लीलया उपकुर्वन्तीत्याह—

दृष्ट्वा परव्यथां सन्त उपकुर्वन्ति लीलया।
(१)दितेर्गर्भव्यथां हृत्वा रुद्रोऽभून्मरुतां पिता ॥३१॥

सन्तः सत्पुरुषाः परव्यथां परपीडां दृष्ट्वा लीलया हेलया उपकुर्वन्ति। रुद्रस्य(२) यथा—रुद्रः ईश्वरः दितेर्मातुः गर्भव्यथां गर्भपीडां हृत्वा तद्गर्भो मरुतः देवविशेषाः तेषां मरुतां पिता पालकोऽभूत्।

तदर्थमियमृक्—( ऋ० १. ११४. ६ )।

इदं पित्रे मरुतामुच्यते वचः स्वादोः स्वादीयो रुद्राय वर्धनम्।
रास्वा च नो अमृत मर्तभोजनं त्मने तोकाय तनयाय मृळ॥

इदम्। पित्रे। मरुताम्। उच्यते। वचः। स्वादोः। स्वादीयः। रुद्राय। वर्धनम्। रास्व। च। नः। अमृत मर्तऽभोजनम्। त्मने। तोकाय। तनयाय। मृळ ॥३३॥

तत्र कथा—पुरा कदाचिदिन्द्रोऽसुराञ् जिगाय। तदानीं दितिरसुरमाता इन्द्रहननसमर्थं पुत्रं कामयमाना तपसा भर्तुः सकाशाद् गर्भं लेभे। इदं वृत्तान्तमवगच्छन्निन्द्रो वज्रहस्तः सन् सूक्ष्मरूपो भूत्वा तस्या उदरं प्रविश्य तं गर्भं सप्तधा बिभेद। पुनरप्येकैकं सप्तखण्डमकरोत्। ते सर्वे गर्भैकदेशा योनेर्निर्गत्यारुदन्। एतस्मिन्नन्तरे (अवसरे) लीलार्थं गच्छन्तौ पार्वतीपरमेश्वरौ इमान् ददृशतुः। महेश्वरं प्रति पार्वती एवमवोचत्। इमे मांसखण्डा यथा

---

( १ ) 'दीनां दृष्ट्वा दितिं रुद्रो गौर्यै जा मरुतो ददौ॥
जाः अपत्यानि। अत्राख्यानमाह—'पुरा कदाचित्० इत्यादि'। इति 'ग' पुस्तके।

( २ ) 'रुद्रो यथा' इत्येव साधु।

प्रत्येकं तव पुत्राः सम्पद्यन्तां एवं त्वया कार्यं मयि चेत्प्रीतिरस्तीति। स च महेश्वरस्तान्समानरूपान् समानवयसः समानालङ्कारान् पुत्रान्कृत्वा गौर्यै प्रददौ। तवेमे पुत्राः सन्त्विति। अतः सर्वेषु मारुतेषु सूक्तेषु मरुतो रुद्रपुत्रा इति स्तूयन्ते। रौद्रेषु च मरुतां पिता रुद्रः। इति।

केचिच्(१) श्लोकैर्वर्णयन्ति—

कथं ह्यभून्मरुतां वै पितृत्वं जगद्गुरोर्देवदेवस्य शम्भोः।
यथा रुद्रो मरुतां वै पिताऽऽसीत्तथेतिहासः प्रदर्श्य(२)तेऽधुना ॥१॥
शतक्रतोरसुरारेर्वधार्थं दितिस्तु गर्भं लभते स्म भर्तुः।
शुश्रूषमाणः किल तामथेन्द्रो मायाविदामग्रणी रन्ध्रदर्शी ॥ २॥

---

(१) षड्गुरुशिष्यविरचितकात्यायनसर्वानुक्रमणीवृत्तौ वेदार्थदीपिकायां ऋग्वेदीयद्वितीयमण्डलस्थत्रयस्त्रिंशसूक्तानुक्रमव्याख्यानावसरे विंशतिः श्लोकाः कुत्रत्याः सङ्गृहीता दृश्यन्ते। तेषामाद्यषट्कंविहायोत्तरचतुर्दशश्लोका अत्र नीतिमञ्जर्यामुद्धृताः। आद्याः षड् ये तत्र सन्ति ते यथा—

अन्नादिमोक्षान्तफलप्रसिद्ध्यै तुष्टो मुनिर्गृत्समदाभिधानः।
त्रिष्टुप्छन्दः पञ्चदशर्चकेन भिषक्तमं रुद्रमस्तौन्महात्मा ॥ १ ॥
आ ते पितीयं (ऋ०२-३३) यदि रुद्रसूक्तं मरुद्गणः कीर्त्यते द्विःकिमत्र।
त्रयोदश्यामाद्यमन्त्रे च रुद्रः सर्वत्र वा मारुते स्तूयते किम्॥ २॥
निपातभाजो मरुतो न चात्र प्रायेणैन्द्रे मरुतः सूत्रदृष्टेः।
नैतद्रुद्रो मरुतां यत्पिताऽऽसीन्निपातभाजो मरुतस्ततोऽत्र ॥ ३ ॥
निपातभाङ् मारुते न तु रुद्रः प्रायेणैन्द्रेत्यादि सूत्रं च तत्र।
इन्द्रेण सख्यतिशयादनुक्तं तेषां च तस्यापि च सख्यमेतत् ॥ ४ ॥
हनिष्यन्तं वृत्रमन्ये पुरेन्द्रं हित्वा जहुर्मरुतोऽवर्धयंस्तम्।
प्रायेणैन्द्रेत्यादिसूत्रेऽपि वाच्यं रौद्रे चेति खलु किं तत्र नोक्तम्॥५॥
प्रायग्रहो बहुलार्थे यतोऽत्र तस्मादैन्द्रे बहुशो योग एषाम्।
अनैन्द्रेषु त्वल्पशो योग एषामित्येषोऽर्थो वेदितव्यो हि तत्र ॥ ६॥

(२) 'प्रतिदर्श्यतेऽत्र' इति वे० दीपिका।

प्रकीर्णकेशीं च दितिं प्रसुप्तामवे(१)क्ष्य वज्री ह्यणुमात्ररूपः ।
प्रविश्य कुक्षिं प्रविभेद गर्भं मा रोद रोदेति वदंस्तु गर्भम् ॥ ३ ॥
भित्वा गर्भं निर्गते वै महेन्द्रे प्रबु(२)द्धा सा रोदिति स्मार्त्तरूपा ।
अत्रान्तरे त्वन्तरिक्षे तदासीज्जगज्जनित्री त्व(३)खिलेशपत्नी ॥४॥
वृषेन्द्रमारुह्य गिरीन्द्रपुत्री सुरेन्द्रवृन्दैरभिवन्द्यमाना ।
नद्याहृतैः पंकजकुण्डलाद्यैर्हारेण सम्भूषितसर्वदेहा ॥ ५ ॥
संसारवृक्षस्य कुठारकेण शशाङ्कचूडामणिमण्डितेन ।
देवेन सार्द्धं सुरसिद्धसङ्घैः स(४)स्त्रीगणैश्चाप्यभिपूज्यमाना ॥ ६ ॥
गर्भस्य मातुश्च तदार्त्तनादं शुश्राव चाकाशगता यदृच्छया ।
सुराङ्गनानामवलोक्य वृन्दं कृपापरा साथ हरं ययाचे ॥ ७ ॥
वज्रेण रु(५)ग्णानि रुषातिदेव खण्डानि गर्भस्य तनूनि चापि ।
सप्तात्मके सप्तकभेदनेन बहूनि खण्डानि बहूनि चापि(६) ॥ ८ ॥
एकैकमेषां लभतां शरीरं मदर्थमेतत् क्रियतां महेश ।
स्युश्चैव सर्वे तरुणाः सदैव स्वलङ्कृतास्ते(७) मरुतस्तवैव ॥ ९ ॥
मा रोद दाना(८)न्मृतियोगतो वा ख्यातास्तु लोके मरुत(९)स्तु नाम्ना ।
स(१०)ख्यं च तैरस्तु महेश्वरस्य सुरैश्च तुल्यं मरुतां महेश ॥ १० ॥
न ज्येष्ठता नापि कनिष्ठतैषां वेषो वयश्चैव समानमेषां ।
(घृणा(११)ब्धित्वं व्यक्तमेवं तव स्यान्मयि प्रीतिश्चातुला वै महेश)॥११॥
पादादिकेशान्तमलङ्कृताश्च भवन्त्वेते सर्वमेतन् ममास्तु ।
तथेति देवः प्रतिपन्नवाक्यो देव्या यथोक्तं प्रचकार सर्वम् ॥१२॥

---

(१) 'प्रसुप्तामालक्ष्य' वे० दी० । (२) 'प्रबुद्धय' ।
(३) 'ह्यखिलेशपत्नी' । (४) स्त्रीणां गणैश्चाभि० ।
(५) वज्रेण भिन्नानि तु यानि देवखण्डानि गर्भस्य तनूनि चापि इति वे० दी० ।
(६) सन्ति । (७) 'स्वलङ्कृतास्तव पुत्रा भवन्तु' ।
(८) वादान् । (९) मरुतश्च ।
(१०) 'सख्यञ्च तैरस्तु सुरेश्वरस्य सुरैस्तुल्यं नियतं महेश' ।
(११) इयं पङ्क्ति नीतिमञ्जर्यां न दृश्यते ।

तथेति देवः प्रतिपन्नवाक्यो देव्या यथोक्तं प्रचकार सर्वम् ॥१२॥
इत्थन्तु सिद्धं मरुतां पितृत्वं जगद्गुरोर्देवदेवस्य शम्भोः।
अथापरे वर्णयन्तीतिहासं यथा रुद्रो मरुतां वै पिताऽऽसीत् ॥१३॥
इमां हि गोरूपधरां तु पृश्निं वृषोऽथ भूत्वा रमयन् महेशः ।
अजीजनन्मरुतः पृश्निपुत्रा रुद्रस्य पुत्रा अपि ते बभूवुः ॥१४॥ इति।

पुरा कदाचिद्देवासुरसङ्ग्रामे अग्न्यात्मको रुद्रो देवैर्निक्षिप्तं धनमपहृत्य निरगात्। असुराञ् जित्वा देवा एनमन्विष्य दृष्ट्वा धनं चापाहरन्। तदानीमरुदत् तस्माद्रुद्रस्य (१)रुद्रत्वम्।

अत्र यास्कः ( नि० १०।६ )–'रुद्रो रौतीति सतः। रोरूयमाणो द्रवतीति वा रोदयते र्वा । 'यदरुदत्तद्रुद्रस्य रुद्रत्वम्' इति काठकम्! 'यदरोदीत्तद्रुद्रस्य रुद्रत्वम्' इति हारिद्रविकम्—इति।

कुत्सस्तादृशं रुद्रं जगत्या स्तौति। शूलगवे पशौ उपस्थाने विनियुक्तम्। इदं पित्र [ऋ-१-११४-६] इति। 'भूपत' इति खण्डे

---

( १ ) अत्र वेदभाष्ये रुद्रशब्दस्य व्याख्यानमेवमास्ति-(ऋ० १.११४.१)
रोदयति सर्वमन्तकाले इति रुद्रः।

यद्वा--रुत् संसाराख्यं दुःखं तद्द्रावयति अपगमयति विनाशयतीति रुद्रः।

यद्वा--रुतः शब्दरूपा उपनिषदः ताभिर्द्रूयते गम्यते प्रतिपाद्यते इति रुद्रः।

यद्वा--रुत् शब्दात्मिका वाणी तत्प्रतिपाद्याऽऽत्मविद्या वा। तामुपासकेभ्यो राति ददातीति रुद्रः।

यद्वा--रुणद्धि आवृणोतीति रुद् अन्धकारादिः। तं दृणाति विदारयतीति रुद्रः।

यद्वा--कदाचिद्देवासुरसङ्ग्रामे अग्न्यात्मको रुद्रः देवैर्निक्षिप्तं धनमपहृत्य निरगात्। असुराञ् जित्वा देवा एनमन्विष्य दृष्ट्वा धनमहरन्। तदानीमरुदत्। तस्माद्रुद्र इत्याख्यायते। तथा च तैत्तिरीयकम् ( तै० सं० १. ५.१ )
'सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वम्' इति।

सूत्रितं 'कद्रुद्राय' [ऋ० १.४३] इमा रुद्राय [ऋ० १-११४] इति। (सां० श्रौ० सू० ४।२०।२)

ऋचोऽयमर्थः। इदम् एवं स्तुतिलक्षणं वचः मरुतां एकोनपञ्चाशत्संख्याकानां देवविशेषाणां पित्रे जनकाय रुद्राय उच्यते उच्चार्यते। कीदृशम्। स्वादोः स्वादीयः रसवतो मधुघृतादेरपि स्वादुतरम्। अतिशयेन हर्षजनकमित्यर्थः। पुनः कीदृशम्। वर्धनम् स्तुत्यस्य प्रवर्धकम्। स्तोत्रेण हि देवता हृष्टा सती प्रवर्धते। अमृत मरणरहित रुद्र मर्त्तभोजनं—मर्त्यानां मनुष्याणां धनं यत्तन्नोऽस्मभ्यं रास्व प्रयच्छ। तथा त्मने आत्मने। मन्त्रेष्वाङ्यादे० [पा० ६।४।१४१] इत्यालोपः। द्वितीयार्थे चतुर्थी—मां तोकाय तोकं पुत्रं तनयाय तनयं पौत्रं च मृळ सुखय। मृड सुखने। एतयोरपत्यनामसु (निघण्टु २।२)। पाठे सति 'मा नस्त्वं पुत्रेषु च पोत्रेषु च रीरिषः [नि० १०।७]। इति यास्केन विशेष उक्तः।

रास्व—रास्वा चोरू न शग्धी नः [ऋ० ग्रा० ७-५१] इति दीर्घः।

इत्येवं सतां लक्षणमुक्तम्।

महता(१)मुदयः सुखकर इत्याह—

महतामुदयो धन्यो येन विश्वं प्रकाश्यते।
पूर्यते तेजसा विश्वमुदये जगदात्मनः॥ ३२॥

महतां तेषाम् उदयो धन्यो भवति येनोदयेन विश्वं सर्वं जगत् प्रका-

(१) 'ग' पुस्तकेऽवतरणिका त्वेवम्।
परमात्मा गहनो विद्यते इत्याह—
"न जज्ञुः परमात्मानमृषयस्तपसाऽपि तम्।
आत्मनि वामदेवस्तु कुत्सः सूर्ये ददर्श तम्॥ १॥
वामदेव आत्मनि शरीरे तं परमात्मानं ददर्श। तदग्रे 'गर्भे नु सन्नि'त्यस्याम् (ऋ० ४. २७. १) ऋचि तृतीयेऽष्टके दर्शयिष्यते। अत्र कुत्सस्त्रिष्टुभा सूर्यं स्तौति 'चित्रं देवानाम्' इति।

श्यते दीप्यते। काशृ दीप्तौ। जगदात्मवत्। यथा जगदात्मनः। सूर्योदये सति तेजसा विश्वं जगत् पूर्यते। सूर्यस्य जगदात्मत्वं—'चित्रं देवानाम् (ऋ० १-११५-१) इत्यस्यां प्रतिपादितम्।

तत्र ऋक्—( ऋ० १-११५-१ )

**चित्रं देवानामुदंगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः।**
**आऽप्रा द्यावांपृथिवी अन्तरिक्षं सूर्यं आत्मा जगंतस्तस्थुषश्च॥**

**चित्रम्। देवानाम्। उत्। अगात्। अनीकम्। चक्षुः। मित्रस्य। वरुणस्य। अग्नेः। आ। अप्राः। द्यावांपृथिवी इति। अन्तरिक्षम्। सूर्यः। आत्मा। जगंतः। तस्थुषः। च॥ ३४॥**

कुत्सस्त्रिष्टुभा सूर्यं स्तौति। विषुवति सूर्यषड्के तथा स्तोत्रियायाम्। एकविंशस्तोमं बृहत्पृष्ठमिति खण्डे चित्रं देवानामिति पुरोनुवाक्येति ( सां० श्रौ० सू० ११।१३।९ )। चित्रं देवानामिति स्तोत्रियः ( सां० श्रौ० सू० १२।९।१३ )। सौर्ये क्रतौ उदु त्यं जातवेदसं [ऋ-१-५०-१] चित्रं देवानामिति [ऋ०१ ११५-१] इति॥ ( सां० श्रौ० सू० ९।२०।२१,२२ )।

उत्सर्गे सूर्योपस्थाने चित्रं देवानां नमो मित्रस्य [ ऋ० १० ३७-१ ] इति गृह्ये।

तथा ऋग्विधानम्—चित्रमित्युपतिष्ठेत सूक्तेनानेन भास्कर(१) मिति ( श्लो० १३४ )।

ऋचोऽयमर्थः। दे(२)वानां देवजनानां मध्ये अनीकं तेजः समूह-

---

( १ ) अयं पूर्णश्लोक ऋग्विधानस्थ एवम्—
"तिष्ठन्नुद्यन्तमादित्यं समित्पाणिः शुचिः सदा।
चित्रमित्युपतिष्ठेत सूक्तेनानेन भास्करम्'॥ इति।

( २ ) दीव्यन्तीति देवा रश्मयः तेषाम्। देवजनानामेव वा। इति वेदभाष्ये 'ग' पुस्तके च।

रूपं चि(१)त्रं चायनीयं सूर्यमंडलम् उदगाद् उदयाचलं प्राप्तमासीत्। कीदृशम्। मित्रस्य वरुणस्याग्नेश्चोपलक्षणमेतत्। एतदुपलक्षितानां जगतां चक्षुः प्रकाशकम्। चक्षुरिन्द्रियस्थानीयं वा। उदयं प्राप्य द्यावापृथिवी। दिवं च पृथिवीं च अन्तरिक्षं च आप्राः। स्वकीयेन तेजसा आसमन्तादपूपुरत्। इदृग्भूतमण्डलवर्ती सूर्यः जगतो जङ्गमस्य तस्थुषो स्थावरस्य च आत्मा। इति सूर्यस्य जगदात्मत्वमुक्तम्।

तत्र निरुक्तम्–[ नि० १२।१६ ] "चायनीयं देवानामुदगमदनीकं ख्यानं मित्रस्य वरुणस्याग्नेश्चापूपुरद् द्यावापृथिव्यौ चान्तरिक्षं च महत्त्वेन तेन सूर्य आत्मा जङ्गमस्य च स्थावरस्य च"। इति।

इति महतां विश्वप्रकाशकत्वं सूर्योपस्थानेनोक्तम्।

उपकारात्समृद्धिं (२)सार्थकीकुर्यादित्याह—

समृद्धिं सार्थकीकुर्यात्सूपकारेण सत्यवान्।
वैमद्याज्जाहुषाज्जातं नासत्याऽनो हि सार्थकम् ॥३३॥

यः सत्यवान् तस्य या समृद्धिः तां समृद्धिं सूपकारेण शोभनो य उपकारः तेन सार्थकीं नासत्यवत्कुर्यात्। यथा नासत्याऽनः नासत्ययोः अनः रथः वैमद्याः विमदस्त्रियाः सकाशात् सार्थको जातः। जाहुषाच्च। हि यस्मात् नासत्यौ सत्यरूपौ। नासत्याभ्यां विमदीजाहुषयोः वहनेन स्वरथः सार्थकः कृतः इत्यर्थः। जाहुषवहनं अग्रे परिविष्टमित्यस्यां ( ऋ० १-११६-२० ) दर्शयिष्यते। इदानीं नासत्याभ्यां बर्हिरिवेति–[ ऋ० १-११६-१ ]–नासत्ययोः वैमदीवहनं वदामः।

तत्र ऋक्–[ ऋ० १-११६-१ ]

नासत्याभ्यां बर्हिरिव प्र वृञ्जे स्तोमाँ इयर्म्यभ्रियेव वातः।
यावर्भगाय विमदाय जायां सेनाजुवा न्यूहतू रथेन ॥

---

( १ ) आश्चर्यकरं चायनीयं वा इति 'ग' पुस्तके।
( २ ) 'सार्थकीं' 'सार्थिकीं, कुर्याद् इत्यपि पाठः।

नासत्याभ्याम् । बर्हिःऽइव । प्र । वृञ्जे । स्तोमान् । इयर्मि । अभ्रियाऽइव । वातः । यौ । अर्भगाय । विऽमदाय । जायाम् । सेनाऽजुवा । निऽऊहतुः । रथेन ॥ ३५ ॥

कक्षीवांस् त्रिष्टुभा अश्विनौ स्तौति । प्रातरनुवाके आश्विने क्रतौ नासत्याभ्यामिति त्रीणि ॥ ( सां० श्रौ० सू० ६।६।६ ) ।

ऋचोऽयमर्थः । अहं नासत्याभ्यां सत्यरूपाभ्यां अश्विभ्यां स्तोमान् स्तुतीः प्रेयर्म्मि सम्पादयामि । तत्र दृष्टान्तः । बर्हिरिव । यथा कश्चिद्यजमानो यागार्थं बर्हिः प्रवृञ्जे प्रकर्षेण यागार्थं दर्भमन्यू-(१)नानतिरिक्तं वृंक्ते छिनत्ति सम्पादयति तद्वत् । अभ्रियेव—यथा अभ्रियाणि अभ्रेषु मेघेषु अवस्थितान्युदकानि वातो वायुः बहुशः प्रेरणार्थं बहुशः प्रेरयति एवमहम् अश्विभ्यां स्तोत्राणि इयर्मि बहुशः प्रेरयामि । यौ अश्विनौ अर्भ(२)गाय तरुणाय विमदाय ऋषये जायां स्वकीयेन रथेन न्यूहतुः तदीयं गृहं प्रापयामासतुः । कीदृशेन रथेन । सेनाजुवा शत्रुसेनायाः प्रेरकेण—

एवं वैमदीवहनेन नास(३)त्याभ्यां रथसमृद्धिः सार्थीकृतेत्याह ।

---

( १ ) 'अन्यूनानतिरिक्तं यागाय पर्याप्तम्' इति वेदभाष्ये ।

( २ ) अर्भगाय बालाय स्वयंवरलब्धभार्याय विमदाय एतत्संज्ञाय राजर्षये मध्येमार्गं स्वयंवरार्थमागतैस्तामलभमानै रन्यै र्नृपैः सह योद्धुमशक्नुवतेऽपि तस्मै सेनाजुवा शत्रुसेनायाः प्रेरकेण शत्रुभिर्दुष्प्रापेण रथेन यावश्विनौ जायां भार्यां परैरनाक्रान्तां न्यूहतुः शत्रून्निहत्य तदीयं गृहं प्रापयामासतुः ताभ्यामित्यर्थः । ( वे० भा० )

( ३ ) नासत्याभ्याम्—सत्सु भवौ सत्यौ न सत्यौ असत्यौ न असत्यौ नासत्यौ । नभ्राण् नपादित्यादिना ( पा० ६।३।७५ ) नञः प्रकृतिभावः । अव्ययपूर्वपदप्रकृतिस्वरत्वम् ।

वृञ्जे—वृजी वर्जने । आदादिकः । इदित्वान्नुम् ( पा० ७।१।५८ ) । 'लोपस्त आत्मनेपदेषु' ( पा० ७।१।४१ ) इति तलोपः ।

इयर्मि—ऋ गतौ । जौहोत्यादिकः ।

तथा निगमाः—

युवं शचीभि र्विमदाय जायां० ( ऋ. १-११७-२० )

युवं रथेन विमदाय शुन्ध्युवं न्यूहथुः (ऋ. १०.३९.७)

कमद्युवं विमदायोहथुर्युवं ( ऋ. १०.६५.१२ )

इत्येवमादयः ।

अन्यः सुहृज्जनो भ्राता इति पूर्वमुक्तम् (पृ० ५५) तत्प्रदर्शनायेतिहासपूर्विका ऋक् ( ऋ० १. ११६. ३ )

तुग्रो ह भुज्यु मश्विनोदमेघे रयिं न कश्चिन्ममृवाँ अवाहाः ।

तमूहथु र्नौभि रात्मन्वतीभिरन्तरिक्षप्रुद्भि रपोदकाभिः ॥

तुग्रः । ह । भुज्युम् । अश्विना । उदऽमेघे । रयिम् । न । कः । चित् । ममृऽवान् । अव । अहाः । तम् । ऊहथुः नौभिः । आत्मन्ऽवतीभिः । अन्तरिक्षप्रुत्ऽभिः । अपऽउदकाभिः ॥ ३६ ॥

---

अर्त्तिपिपर्त्त्योश्च ( पा० ७।४।७७ ) इति अभ्यासस्येत्वम् । 'अभ्यासस्यासवर्णे ( पा० ६।४।७८ ) इतीयङ् ।

अभ्रियाऽइव-'समुद्राभ्राद्घः' ( पा० ४।४।११८ ) इति भवार्थे घः । घस्य इयादेशः ( पा० ७।१।२ ) । छन्दसि बहुलम् ( पा० २।४।७३ ) । इति शेर्लोपः ।

अर्भगाय-अर्तिगृभ्यां भन् ( उ० सू० ४४० ) इति अर्तेर्भन् । अर्भ एव अर्भकः । संज्ञायां कन् ( पा० ४।३।१४७ ) । छान्दसो गकारः । अपर आह-अर्भमल्पं गायतीति अर्भगः । कै गै शब्दे । गापोष्टक् ( पा० ३।२।८ ) । आतो लोप इटि च ( पा० ६।४।६४ ) इत्याकारलोपः । तदेतत्पदकृतः शाकल्यस्याभिमतम् ।

सेनाजुवा-जु इति सौत्रो धातुर्गत्यर्थः । अस्मादन्तर्भावितण्यर्थात् क्विब्वचिप्रच्छ्या० ( पा० वा० ३।२।१७८ ) इत्यादिना क्विब् दीर्घो तन्वादित्वादुवङ् ( पा० वा० ६।४।८६ )

न्यूहतुः-वह प्रापणे । लिट्यतासि यजादित्वात् ( पा० ६।१।१५ ) सम्प्रसारणम् यद्वृत्तान्नित्यम् । (पा०८।१।६६) इति निघातप्रतिषेधः ।

तुग्रो नाम कश्चिदश्विनोः प्रियो राजर्षिः । स च द्वीपान्तरवर्त्तिभिः शत्रुभिरत्यन्तमुपद्रुतः सन् तेषां जयाय स्वपुत्रं भुज्युं सेनया सह नावा प्राहैषीत् । सा च नौर्मध्येसमुद्रमतिदूरं गत्वा (–ता) वायुवशेन भिन्नाऽऽसीत् । तदानीं स भुज्युः शीघ्रमश्विनौ तुष्टाव । स्तुतौ च तौ सेनया सहितमात्मीयासु चतसृषु नौष्वारोप्य त्रिभी रथैः षळश्वैः शतपाद्भिः सह पितुस्तुग्र्यस्य समीपं त्रिभिरहोरात्रैः प्रापयामासतुरिति ।

अयमर्थः इदमादिकेन तृचेन [ऋ० १. ११६. ३–५] प्रतिपाद्यते । 'ह' शब्दः प्रसिद्धौ । तुग्रः खलु पूर्वं शत्रुभिः पीडितः सन् तज्जपार्थं उद(१)मेघे उदकैर्मिह्यते सिच्यत इति उदमेघः समुद्रः तस्मिन् समुद्रे भुज्युमेतत्संज्ञं प्रियं पुत्रं अ(२)वाहाः नावा गन्तुं पर्यत्याक्षीत् । तत्र दृष्टान्तः । (३)ममृवान् म्रियमाणः सन् धनलोभी कश्चिन्मनुष्यः रयिं न यथा धनं परित्यजति तद्वत् । हे अश्विनौ तं च भुज्युं मध्ये समुद्रं निमग्नं नौ(४)भिः पितृसमीपं ऊहथुः युवां प्रापितवन्तौ ।

---

(१) उदमेघे—मिह सेचने । कर्मणि घञ् [ पा० ३।३।१९ ] न्यङ्क्वादीनाञ्च ( पा० ७।३।५३ ) इति कुत्वम् । उदकस्योदः संज्ञायाम् (पा० ६।३।५७) इति उदकस्योदादेशः । थाथादिना ( पा० ६।२।१४४ ) उत्तरपदान्तोदात्तत्वम् ।

(२) अवाहाः—अव-अहाः । ओहाक् त्यागे । लुङि तिपि च्लेः सिच् । आगमानुशासनस्यानित्यत्वात्सगिटौ न क्रियेते । बहुलं छन्दसीति ( पा० २।४।३९ ) इति ईडभावः हल्ङ्याभ्यो० इति तिलोपः । रुत्वविसर्गौ ॥

यद्वा—मन्त्रे घसह्वरणश० ( पा० २।४।८० ) इति च्लेर्लुक् । च्लेर्लुप्तत्वादिण् न क्रियते ।

(३) ममृवान्—मृङ् प्राणत्यागे । लिटः क्वसुः ( पा० ३।२।१०७ ) क्रादिनियमप्राप्तस्येटो वस्वेकाजाद्घसाम् (पा० ७।२।६७) इति नियमादभावः ।

(४) नौभिः—'सावेकाचस्तृतीयादिर्विभक्तिः' ( पा० ६।१।१६८ ) इति विभक्तेरुदात्तत्वम् ।

कीदृशीभिः आत्म(१)न्वतीभिः आत्मीयाभिः युवयोः स्वभूताभि-रित्यर्थः । यद्वा धृतिरात्मा धारणवतीभिरित्यर्थः । अन्तरिक्ष(२)प्रुद्भिः अतिस्वच्छत्वादन्तरिक्षे जलस्योपरिष्टादेव गन्त्रीभिः अपोद-काभिः सुश्लिष्टत्वादपगतोदकाभिः अप्रविष्टोदकाभिरित्यर्थः ।

मम्रुवान्—नकार आकारोपध० ( ऋ० प्रा० ४।६४ ) इति न्लोपः ।

तथा निगमाः—

अव विद्धं तौग्र्यमप्स्व१न्तर० [ ऋ० १.१८२.६ ]

ता भुज्युं विभिरद्भ्यः समुद्रात्० [ ऋ० ६-६२-६ ],

निष्टौग्र्यं पारयथः समुद्रात्० [ ऋ० १-११८-६ ]

इत्येवमादयः ।

यादृशः पिता तादृशः पुत्र इत्याह—

यादृशा(३)ज्जायते जन्तुर्नाम कर्म्मास्य तादृशम् ।
अश्विनावश्वजावश्वं ददतुः पेदवे सितम् ॥ ३४ ॥

यादृशात्पितुः प्राणी जन्तुः जायते अस्य जन्तोर्नामाभिधानं कर्म च तादृशं भवति । यथा अश्वजौ अश्वाज्जातौ तस्मादाश्विनौ नामतः पेदवे राजर्षये श्वेतम् अश्वं ददतुः ॥ कर्मापि तादृग् अश्वदानम् ।

---

( १ ) आत्मन्वतीभिः—आत्मनो मतुप् । मादुपधायाश्च मतोर्० ( पा० ८।२।९ ) इति वत्वम् । अतो नुट् ( पा० ८।२।१६ ) इति नुट् । नलोपः । ( पा० ८।२।७ ) । ह्रस्वनुड्भ्यां मतुप् ( पा० ६।१।१७६ ) इति मतुप उदात्तत्वम् ।

( २ ) अन्तरिक्षप्रुद्भिः—प्रुङ गतौ क्विप् च (पा० ३।२।७६) इति क्विप्

( ३ ) 'ग' पुस्तकेऽयं श्लोक एवं पठितः—

"यादशाज्जायते जन्तुर्नाम कर्मास्य तादृशम् ।
यथाऽश्विनौ पेदवे तु ददतुः श्वेतमश्वकम् ॥ १ ॥ इति ।
( अयमेव पाठः समीचीनो दृश्यते )

तदर्थैयमाख्यानपूर्विका ऋक्—( ऋ० १.११६.६ )

यमश्विना ददथुः श्वेतमश्वमघाश्वाय शश्वदित्स्वस्ति ।
तद्वां दात्रं महि कीर्तेन्यं भूत्पैद्वो वाजी सदमिद्धव्यो अर्यः ॥

यम् । अश्विना । ददथुः । श्वेतम् । अश्वम् । अघऽअश्वाय । शश्वत् । इत् । स्वस्ति । तत् । वाम् । दात्रम् । महि । कीर्तेन्यम् । भूत् । पैद्वः । वाजी । सदम् । इत् । हव्यः । अर्यः ॥ ३७ ॥

पेदुर्नाम कश्चित्सोऽश्विनौ तुष्टाव । तस्मै प्रीतौ कंचित् श्वेत-( वर्ण ) मश्वं दत्तवन्तौ । स चाश्वः प्रौढं जयं चकारेति एतदत्र प्रतिपाद्यते ।

अथाश्विनोरश्वादुत्पत्तिः । तत्र बृहद्देवता–अ० ६ श्लो० १६२। १६३, तथा अ० ७ श्लो० १-७ ।

अभवन्मिथुनं त्वष्टुः सरण्यूस्त्रि(१)शिराविह ।
स वै सरण्यूं प्रायच्छत्स्वयमेव विवस्वते ॥ ( १६२ )
ततः सरण्य्वां जज्ञाते यमयम्यौ विवस्वतः ।
तौ चाप्युभौ यमावेव ज्यायांस्ताभ्यां तु वै यमः ॥ ( १६३ )
(२) दृष्ट्वा भर्तुः परोक्षं तु सरण्यूः सदृशीं स्त्रियम् ।
निक्षिप्य मिथुनौ तस्यामश्वा भूत्वाऽपचक्रमे ॥ १ ॥
अविज्ञानाद्विवस्वान् हि(३) तस्यामजनयन्मनुम् ।
राजर्षि(४)रासीत्स मनुर्विवस्वानिव तेजसा ॥ २ ॥
स विज्ञाय त्वपक्रान्तां सरण्यूमश्वरूपिणीम् ।
त्वाष्ट्रीं प्रतिजगामाशु वाजी भूत्वा सलक्षणः ॥ ३ ॥

---

( १ ) 'त्रिशिराः सह' इत्यपि पाठः । ( २ ) 'सृष्ट्वा' इत्यपि पाठः ।
( ३ ) 'विवस्वांस्तु' इत्यपि ।
( ४ ) 'राजर्षिरभवत्सोऽपि विव० इत्यपि पाठः ।

सरण्यू(१)स्तं विवस्वन्तं विज्ञाय हयरूपिणम् ।
मिथुनायोपचक्राम तां च तत्रारुरोह सः ॥ ४ ॥
ततस्तयोस्तु वेगेन शुक्रं तदपतद् भुवि ।
उपाजिघ्रच्च सा त्वश्वा तच्छुक्रं गर्भकाम्यया ॥ ५ ॥
आघ्रातमात्राच्छुक्रात्तु कुमारौ संबभूवतुः ।
नासत्यश्चैव दस्रश्च यौ सुतावश्विनाविति ॥ ६ ॥
इतिहासमिदं यास्कः सरण्यूदेवते द्वृचे ।
विवस्वतश्च त्वष्टुश्च त्वष्टेति सह मन्यते ॥ ७ ॥

अथ यास्कः ( नि० १२।१० )—

"तत्रेतिहासमाचक्षते-(२)त्वाष्ट्री सरण्यूर्विवस्वत आदित्याद्यमौ मिथुनौ जनयाञ्चकार । सा सवर्णामन्यां प्रतिनिधायाश्वं रूपं कृत्वा प्रदुद्राव, स विवस्वानादित्य आश्वमेव रूपं कृत्वा तामनुसृत्य सम्बभूव । ततोऽश्विनौ जज्ञाते सवर्णायां मनुः" ॥ इति ।

"अश्वैरश्विनावित्यौर्णवाभः" ( नि० १२।१ ) इति च ।

इत्यश्विनोरश्वादुत्पत्तिः ।

ऋचोऽयमर्थः । हे (अश्विना) अश्विनौ युवाम् अघाश्वाय अहन्तव्याश्वाय पेदुनाम्ने राजर्षये यं श्वेतं श्वेतवर्णम् अश्वं ददथुः दत्तवन्तौ सोऽश्वस्तस्मै स्वस्तिजयलक्षणं मङ्गलं शश्वदित् नित्यमेव चकार । वां युवयो स्तद्दा(३)त्रं दानं म(४)हि महद् अतिगम्भीरम्

---

( १ ) 'सरण्यूश्च विवस्वन्तं विदित्वा हयरूपिणम्' इत्यपि ।

( २ ) हस्तलिखितपुस्तकेषु 'त्वाष्ट्री सरण्यूरित्यादि, इति प्रतीकेनैव कथेयं सूचिता ।

( ३ ) दात्रम्—ददातेर्भावे औणादिकस्त्रप्रत्ययः ( उ० सू० दादिभ्यश्छन्दसि ६१९ )

( ४ ) महि--मह पूजायाम् । 'इन् सर्वधातुभ्यः' ( उ० सू० ५६७ ) इति इन् ।

अतएव कीर्तें(१)न्यं सर्वैः कीर्तनीयं प्रशस्यं भू(२)त् अभूत् । तस्मात् पै(३)द्वः पेदोः सम्बन्धी पतनशीलः शीघ्रगामी वा । अर्यः शत्रूणां प्रेरयिता युद्धे प्रेरयितव्यो वा वाजी वेजनवान् सोऽश्वः सदमित् सदैव ह(४)व्यः अस्माभिराह्वातव्यः ।

तथा निगमाः ।

'युवं श्वेतं पेदवेऽश्विनाऽश्वं० ( ऋ० १०.३९.१० ) ।

युवं पेदवे पूरुवारमश्विना० ( ऋ० १.११९.१० ) ।

नि पेदवं ऊहथुराशुमश्वम्' ( ऋ० १.११७.९ ) ।

इत्यादयः ।

इति यादृशाज्जायते जन्तुर्नाम कर्मास्य तादृशमिति सिद्धम् ।

विदुषां स्तुत्या वैदुष्यं भवतीत्याह—

वैदुष्यमिच्छता कार्यं विदुषां गुण[५] कीर्तनम् ।
अश्विनोर्विदुषोः कीर्त्त्या कक्षीवानभवत्सुधीः ॥३५॥

विद्वत्त्वमिच्छता पुंसा विद्वज्जनानां गुणकीर्तनं कक्षीवत्-कुर्यात् । यथा कक्षीवान् ऋषिः तिरोहितज्ञानः अश्विनोर्विदुषोः ।

अश्विनोर्विद्वत्त्वं मन्त्रान्तरे प्रतिपादितम्—

ता विद्वांसा हवामहे वां० [ ऋ० १-१२०-३ ] ।

---

( १ ) कीर्तेन्यम्—कृत संशब्दने । 'कृत्यार्थे तवैकेन्केन्यत्वनः ( पा० ३।४।१४ ) इति केन्य प्रत्ययः । ऋत इद्धातोः ( पा० ७।१।१०० ) इतीत्वम् ।

( २ ) भूत्—बहुलं छन्दस्यमाङ्योगेऽपि (पा०६।४।७५) इत्यडभावः ।

( ३ ) पैद्वः—तस्येदम् ( पा० ४।३।१२० ) इत्यण् प्रत्ययः । छान्दसो वर्णलोपः ।

( ४ ) हव्यः—ह्वयतेरचो यत् ( पा० ३।१।९७ ) इति यत् । बहुलं छन्दसीति सम्प्रसारणम् । गुणः [ पा० ७।३।८४ ] धातोस्तन्निमित्तस्यैव [ ६।१।८० ] इत्यवादेशः ।

( ५ ) 'गुणवर्णनम्' इत्यपि पाठः ।

विद्वांसा विदुदुरः पृच्छेद० [ ऋ-१-१२०-२ ]।

यद्विद्वांसा निधिमिवापगूह्ळ० [ ऋ-१-११६-११ ]।

इत्यादयः

नासत्याभ्यामिति कीर्त्त्यां [ ऋ० १-११६ ] सुधीः शोभनबुद्धियुक्तोऽभवत्।

तदर्थेयमाख्यानपूर्विका ऋक् ( ऋ० १-११६-७ )।

युवं नरा स्तुवते पज्रियाय कक्षीवते अरदतं पुरंन्धिम्।
कारोतराच्छफादश्वस्य वृष्णः शतं कुंभाँ असिञ्चतं सुरायाः॥

युवम्। नरा। स्तुवते। पज्रियाय। कक्षीवते। अरदतम्। पुरम् ऽधिम्। कारोतरात्। शफात्। अश्वस्य। वृष्णः। शतम्। कुम्भान्। असिञ्चतम्। सुरायाः॥३८॥

कक्षीवान् पुरा तमसा तिरोहितज्ञानः सन् ज्ञानार्थमश्विनाऽऽजुहाव तस्मै अश्विनौ प्रभूतां धियं दत्तवन्तौ। तदाह। हे नरा नेतारावश्विनौ युवं युवां स्तु(१)वते युवयोः स्तुतिं कुर्वते पज्रि(२)याय पज्रा इत्यङ्गिर(३)सामाख्या। तेषां कुले जाताय कक्षी(४)वते कक्ष्या रज्जुरश्वस्य तद्वते एतत्संज्ञाय पुरंधिं प्रभूतां धियं बुद्धिम् पुरंधिर्बहुधीरिति यास्कः [ नि० ६।१३ ]। अरदतं व्यलिखतम्। यथा सर्वार्थगोचरा भवति तथा कृतवन्तावित्यर्थः। अपि च कारोतरो नाम वैदलश्चर्मवेष्टितो भाजनविशेषः तस्मिन्सुरायाः स्रावणं

(१) स्तुवते–स्तौतेर्लटः शतृ। अदादित्वाच्छपो लुक् ( पा० २।४।७२ )। शतुरनुमो० ( पा० ६।१।१७३) इति विभक्तेरुदात्तत्वम्।

(२) पज्रियाय पज्रशब्दात् शैषिको घच्।

(३) तथा च शाट्यायनिभिराम्नातम् 'पज्रा वा अङ्गिरसः पशुकामास्तपोऽतप्यन्त' इति वेदभाष्ये ( ऋ० १. ५१. १४ )

(४) कक्षीवते–आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवद् (पा० ८।२।१२) इति निपातनात् 'कक्ष्य' शब्दस्य सम्प्रसारणं वत्वं च।

क्रियते लुप्तोपमानमेतत् । सुरायाः स्रावकाः कारोतरात् यथा सुरां स्रावयन्ति एवमेव युवां वृष्णः सेचनसमर्थस्य युष्मदीयस्याश्वस्य शफात् खुरात् सुरायाः शतकुम्भान् असंख्यातान् सुराघटान् असिञ्चतम् अक्षार(१)यतम् ।

तद्वां नरा शंस्यं पज्रियेण० [ ऋ० १-११७-६ ] ।

यया वाचा यजति पज्रियो वाम् [ऋ० १-१२०-५] ।

पज्रेषु स्तोमो दुर्यो न यूपः [ ऋ० १-५१-१४ ] ।

इति निगमान्तराणि ।

ब्राह्मणान्न पीडयेदित्याह—

विप्रपीडाकरो दैत्यो विप्ररक्षाकरः सुरः ।
दैत्यैर्बद्धस्तमस्यत्रिरश्विभ्यां मोचितो वधात् ॥ ३६ ॥

यो विप्रपीडाकरः स एव दैत्यः । यो विप्ररक्षाकरः स एव सुरो देवो भवति । यथा पूर्वं ये दैत्यास्तैरत्रिर्विप्रस्तमसि ऋबीसे अपगतप्रकाशे बद्धः । ते पीडां चक्रुः । तस्मादिदानीं यः पीडाकरः स दैत्यः । अश्विभ्यां देवाभ्यां स एवंविधाद्दैत्यवधान्मोचितः । तस्माद् इदानीं यो ब्राह्मणं पीडितं रक्षति स देव इत्यर्थः ।

तदर्थेयमाख्यानपूर्विका ऋक् [ ऋ० १-११६-८ ]

हिमेनाग्निं घ्रंसमवारयेथां पितुमतीमूर्जमस्मा अधत्तम् ।
ऋबीसे अत्रिमश्विनावनीतमुन्निन्यथुः सर्वगणं स्वस्ति ॥

हिमेन । अग्निम् । घ्रंसम् । अवारयेथाम् । पितुऽमतीम् । ऊर्जम् । अस्मै । अधत्तम् । ऋबीसे । अत्रिम् ।

---

( १ ) यद्वा सिञ्चतिः पूरणार्थः कारोतरस्थानीयात् युष्मदीयाश्वखुराद्या सुरा प्रवहति तयाऽसंख्यातान् घटान् असिञ्चतम् अपूरयतम् ये जनाः सौत्रामण्यादिकर्मणि युष्मद्यागाय सुरां याचन्ते तेषामित्यर्थः— सायणभाष्यम् ।

अश्विना । अवऽनीतम् । उत् । निन्यथुः । सर्वऽगणम् । स्वस्ति ॥ २१ ॥

अत्राख्यानम् । अत्रिम् ऋषिम् असुराः शत(१)द्वारपीडायन्त्रगृहे प्रवेश्य तुषाग्निना अबाधि(२)षत । तदानीं तेन ऋषिणा स्तुतावश्विनौ अग्निमुदकेनोपशमय्य तस्मात्पीडायन्त्रगृहाद् अविकलेन्द्रियवर्गं सन्तं निरगमयतामिति ।

ऋचोऽयमर्थः–अश्विना हे अश्विनौ हिमेन हिमवच्छीतलेनोदकेन घ्रंसं दीप्यमानं अत्रेर्बन्ध[३]नार्थमसुरैः प्रक्षिप्तं तुषाग्निमवारयेथां युवां निवारितवन्तौ । शीतीकृतवन्ता(४)वित्यर्थः । अपि चास्मै [असुरपीडाकार्श्यं प्राप्ताय] अत्रये पितुमतीम् । पितुरित्यन्ननाम [निघण्टु २।७] अन्न[५]युक्ताम् ऊर्जं बलप्रदं रसात्मकं क्षीरादिकमधत्तं पुष्ट्यर्थं प्रायच्छतम् । ऋबीसे अपगतप्रकाशे पीडायन्त्रगृहे अवनीतं अवाङ्मुखतया असुरैः प्रापितम् अत्रिं सर्वगणं ( गणः समूहः सर्वेषां इन्द्रियाणां पुत्रादीनां वा गणेनोपेतं ) पुत्रादिगणोपेतं स्वस्ति अविनाशो यथा भवति तथा उन्निन्यथुः तस्माद्गृहादुद्गमय्य युवां स्वगृहे प्रापितवन्तौ ।

यद्वा हिमेन शीतेन वृष्ट्युदकेन अग्निम् अग्निवत्तीक्ष्णम् । घ्रंसं अहर्नामैतत् [ निघण्टु १।९ ] सामर्थ्यान्निदाघकालीनमहः अवारयेथां तस्याह्नस्तैक्ष्ण्यं निवारितवन्तौ । अपि चास्मै अग्नये पितुमतीं चरुपुरोडाशादिलक्षणान्नोपेतम् ऊर्जं बलकरं रसात्मकम् उपस्तरणाभिघारणात्मकं घृतमधत्तम् । वृष्ट्युत्पादनेनाग्ने र्यागार्थं हवींषि निष्पादितवन्तावित्यर्थः । (६)ऋबीसे अपगततेजस्के पृथिवीद्रव्ये अवनी-

---

( १ ) 'शरद्वारे' इति 'ग' पुस्तके पाठः । ( २ ) 'अबाधन्त,
( ३ ) 'बाधनार्थम्' ( ४ ) शान्तं कृतवन्तावित्यर्थः ।
( ५ ) 'अन्नयुताम्' ।
( ६ ) ऋऽबीसे–ऋबीसमपगतभासम्, अपचितभासम्, अपहृतभासम् अन्तर्हितभासम्, गतभासं वा इति यास्कः ( नि० ६।३५ )

(१)तम् ओषधीनामुत्पादनाय अवस्तान्नीतम् । पार्थिवाग्निना परिपक्वा उदकेन क्लिन्ना ह्योपधिवनस्पतयो विरोहन्ति । (२)अत्रिं हविषामत्तारं ओषधिवनस्पत्यादीनां वा एवंविधम् अग्निं सर्वगणं व्रीह्यादिओषधिगणोपेतं हे अश्विनौ युवां स्व(३)स्ति अविनाशो यथा भवति तथा उन्निन्यथुः । व्रीह्यादिओषधिवनस्पतिरूपेण भूमेरुपरिष्टान्नीतवन्तौ । कारणात्मना पार्थिवाग्नौ वर्तमानं सर्वमोषधिवनस्पत्यादिकम् अश्विनौ प्रवर्षणेन व्यक्तीकृतवन्तावित्यर्थः ।

अयं पक्षो यास्केन हिमेनोदकेनेत्यादिनोक्तः(४) (नि०६।३६)

पितुमतीम्—ह्रस्वनुड्भ्यां मतुबिति ( पा० ६।१।१७६ ) मतुप उदात्तवम् ।

तथा निगमाः—

अत्रिर्यद्वामवरोहन्नृबीसम्० ( ऋ० ५.७८.४. ) ।

युवमृबीसमुत तप्तमत्रय० ( ऋ० १०.३९.९ ) ।

ऋबीसादत्रिं मुञ्चथो गणेन ( ऋ० १।११७।३ )।

इत्येवमादयः ।

एवं विप्रपीडाकरो दैत्य इत्युक्तं भवति ।

---

( १ ) अवनीतम्-'गतिरनन्तरः' ( पा० ६।२।४९ ) इति गतेः प्रकृतिस्वरत्वम् ।

( २ ) अत्रिम्-अद भक्षणे । अदेस्त्रिनिश्च ( उ० सू० ५१७ ) इति चात्रिप् ।

( ३ ) स्वस्ति-अस भुवि । भावे क्तिन् । 'छन्दस्युभयथा' ( पा०६।४।८६ ) इति सार्वधातुकत्वादस्तेर्भूभावाभावः ।

( ४ ) 'हिमेनोदकेन ग्रीष्मान्तेऽग्निं घ्रंसमहरवारयेथाम् अन्नवतीं चास्मा ऊर्जमधत्तमग्नये योऽयमृबीसे पृथिव्यामग्निरन्तरौषधिवनस्पतिष्वप्सु तमुन्निन्यथुः सर्वगणं सर्वनामानम् । गणो गणनाद्गुणश्च । यद्दृष्ट ओषधय उद्यन्ति प्राणिनश्च पृथिव्यां तदश्विनो रूपं तेनैतौ स्तौति । स्तौति । इति यास्कः ( नि० ६।३६ )

योऽम्बुदः स सत्यवान् भवतीत्याह—

नासत्यं विद्यते तस्य योऽम्बु दद्यात् पिपासते ।
नासत्यौ ददतुः कूपाद्गोतमाय शराय वाः ॥ ३७ ॥

यः पुमान् पिपासते पातुमिच्छते जनाय अम्बु उदकं दद्यात् तस्य असत्यं न विद्यते । किन्तु असत्योऽपि उदकदानात्सत्यवान् भवतीत्यर्थः । यथा नासत्यौ सत्यरूपौ अश्विनौ कुपाद्गोतमाय ऋषये शराय च ऋषये वा उदकं ददतुः । तस्मान्नासत्यौ नामश्विनौ ।

शरस्योदकदानेन नासत्यत्वमग्रे शरस्य चिदार्चत्कस्येति ( ऋ-१-११६-२२ ) शयवे चिन्नासत्येति० ( ऋ-१-११६-२२ ) दर्शयिष्यते ।

अत्र तु ( ऋ-१-११६-९ )

परावतं नासत्या नुदेथामुच्चाबुध्नं चक्रथुर्जिह्मबारम् ।
क्षरन्नापो न पायनाय राये सहस्राय तृष्यते गोतमस्य ॥

परा । अवतम् । नासत्या । अनुदेथाम् । उच्चाऽबुध्नम् । चक्रथुः । जिह्मऽबारम् । क्षरन् । आपः । न । पायनाय । राये । सहस्राय । तृष्यते । गोतमस्य ॥४०॥

इति गोतमस्योदकदानमश्विनोर्वदामः ।

कदा(१)चिन्मरुभूमौ वर्त्तमानस्य स्तोतुर्गोतमस्य ऋषेः समीपं देशान्तरे वर्त्तमानं कूपमुत्खाय अश्विनौ प्रापयेतां प्रापय्य च कूपं स्नानपानादिसौकर्य्याय उपरिमूलमधोबिलमवस्थापयताम् ।

ऋचोऽयमर्थः हे नासत्यौ(२) सत्यस्य नेतारौ अश्विनौ युवां अव(३)तं कूपं गोतमस्य ऋषेः समीपं परानुदेथां प्रेरिषाथाम् । तदनन्तरं तं कूपम् उच्चाबुध्नम् उच्चै रुपरिष्टात् बुध्नं मूलं यस्य तम् ।

( १ ) 'अत्रेदमाख्यानम्' इति वेदभाष्ये ।
( २ ) 'हे नासत्या सत्यस्वभावौ वा एतत्संज्ञावश्विनौ' इति वे०भा०
( ३ ) 'कूपनामैतत् ( निघण्टु ३।२३ ) अवस्तात्ततम्' इति वे०भा०

( तथा च ) जिह्मवारं(१) जिह्ममधस्ताद्वर्तमानम् ( तथा वक्रं ) वारं द्वारं यस्य ( तथोक्तः ) तम् एवंविधं(२) चक्रथुः युवामकृषाथाम्। तस्मात्कूपात् तृष्यते पिपासतो गोतमस्य पायनाय(३) पानार्थम् आपो न आपः(४) सम्प्रति तदानीमेव क्षरन्(५) ( प्रवाहरूपेण निरगमन् )। अयं नकारः सम्प्रत्यर्थः अस्त्युपमानस्य सम्प्रत्यर्थे प्रयोग इति यास्कः। कीदृशस्य–राये षष्ठ्यर्थे चतुर्थी–हवींषि दत्तवतः। पुनः कीदृशस्य–सहस्राय सहनशीलाय। षह मर्षणे। रा दाने। ऊडिदमिति ( पा० ६।१।१७१ ) विभक्तेरुदात्तत्वम्। यद्वा सहस्रसंख्याय राये धनाय एतत्संख्यधनलाभार्थं च क्षरन्।

एवं गोतमायाश्विभ्यां जलं दत्तमित्युक्तम्।

जरया सर्वं पीड्यत इत्याह—

सर्वेषामेव जन्तूनां सर्वदुःखाधिका जरा।
च्यवनोऽप्यश्विनौ स्तुत्वा ययार्त्तोऽभूत्पुनर्युवा॥ ३८॥

सर्वेषामुत्तममध्यमाधमानां जरायुजां जन्तूनां प्राणिनां जरा सर्वदुःखाधिका सर्वेभ्यो दुःखेभ्योऽधिका भवति च्यवनवत्–यथा च्यवन ऋषिरपि जरया आर्तः ( र्त्तः ) पीडितः सन् अश्विनौ देवौ स्तुत्वा पुनर्युवाऽभवत्।

तत्राख्यानपूर्विका ऋक्–( ऋ. १.११६.१० )–

जुजुरुषो नासत्योत वव्रिं प्रामुञ्चतं द्रापिमिव च्यवानात्।
प्रातिरतं जहितस्यायुर्दस्रादित्पतिमकृणुतं कनीनाम्॥

---

( १ ) द्वारशब्दस्य पृषोदरादित्वाद् वारादेशः

( २ ) 'एवं गुणविशिष्टम्' इति वे० भा०।

( ३ ) पायनाय–हेतुमति णिच् ( पा० ३।१।२६ ) शाच्छासाह्वाव्यावे० ( पा० ७.३।३७ ) इति युक्। भावे ल्युट् ( पा० ३।३।१३५ )

( ४ ) आपश्च। अयं 'न' शब्दश्चार्थे। इति वे० भा०।

( ५ ) क्षरन्–क्षर सञ्चलने। बहुलं छन्दस्यमाङ्योगेऽपि ( पा० ६।४।७५ ) इत्यडभावः। शपः पित्वादनुदात्तत्वम् ( पा० ३।१।४ ) तिङो लसार्वधातुकस्वरेण धातुस्वरः ( पा० ६।१।१८८ )

जुजुरुषः । नासत्या । उत । वव्रिम् । प्र । अमुञ्चतम् । द्रापिम् ऽइव । च्यवानात् । प्र । अतिरतम् । जहितस्य आयुः । दस्रा । आत् । इत् । पतिम् । अकृणुतम् । कनीनाम् ॥ ४१ ॥

अत्रेदमाख्यानम्-वलीपलितादिभिरुपेतो जीर्णाङ्गः पुत्रादिभिः परित्यक्तश्च्यवनाख्य ऋषिः अश्विनौ तुष्टाव (स्तु) तावश्विनौ तस्मै ऋषये जरामपगमय्य पुनर्यौवनमकुरुतामिति ।

तथा एतं भवति(१) (तां० ब्रा० १४।६।११)–"च्यवनो ह वै दाधीचोऽश्विनोः प्रिय आसीत् सोऽजरत्तं पुनर्युवानमकुरुताम्" । इति

ऋष्यादिपूर्ववत् । ऋचोऽयमर्थः ।

नासत्यौ अश्विनौ जुजुरुषः(२) जीर्णात्-ज्या वयोहानौ च्यवानात् च्यवनाख्यस्य(३) ऋषेः सकाशाद् वव्रिं–वृञ् वरणे आदृगमहन० (पा० ३।२।१७१) इति किप्रत्ययः । वव्रिरिति रूपनाम वृणोतीति सतः इति यास्कः । (नि० २।९)–कृत्स्नं शरीर माश्रित्य ( आवृत्य वा ) स्थितां जरां प्रामुञ्चतम् प्रकर्षेण अमोचयतम्–तत्र दृष्टान्तः– द्रापिमिव । द्रापिरिति कवचस्याख्या यथा कश्चित् कवचं कृत्स्नशरीरव्यापकं धृत्वा पश्चात् शरीरात्पृथक्करोति तद्वत् । उत अपिच हे दस्रौ दर्शनीयौ । 'अन्नं दुहन्तौ मनुष्याय दर्श-

(१) ताण्डयब्राह्मणे वचनमिदमेवं भवति (तां० ब्रा० १४।६।१०) "च्यवनो वै दाधीचोऽश्विनोः प्रिय आसीत् । सोऽजीर्यत्तमेतेन साम्नाऽप्सु व्यैङ्कयताम् । तन्तु पुनर्युवानमकुरुतां तद्वाव तौ तर्ह्यकामयेताम्–" इति । ( व्यैङ्कयताम् = व्यचलयताम् )

(२) जुजुरुषः—जॄष् वयोहानौ । लिटः क्वसुः ( पा० ३।२।१०७ ) । बहुलं छन्दसीत्युत्वम् । द्विर्भावः ( पा० ६।१।८ ) । पञ्चम्येकवचने वसोः सम्प्रसारणम् ( पा० ६।४।१३१ ) इति सम्प्रसारणम् । शासिवसिघसीनाञ्च ( पा० ८।३।६० ) इति षत्वम् ।

(३) 'च्यवनाख्यादृषेः सकाशात्' इति वे० भा० ।

नीया ' विति यास्कः ( नि० ६।२६ )। जहितस्य(१) पुत्रादिभिः परित्यक्तस्य ऋषेः। ओहाक् त्यागे–आयुर्जीवनं प्रातिरतम् प्रावर्धयतम्। प्रपूर्वस्तिरति(२)र्वर्धनार्थः। प्रवर्धय च न आयुरिति (नि० १०।४०) यास्कदर्शनात्। आदिद् अनन्तरमेव युवानं सन्तं कनीनां(३) कन्यानां पतिं भर्त्तारम् अकृणुतम् अकुरुतम्। जारः कनीनां जारयिता कन्यानामिति यास्कदर्शनात् ( नि० १०।२१ ) कनीनशब्दः कन्यावाची।

तथा निगमाः–

युवं च्यवानं सनयं यथा रथं० ( ऋ० १०।३९।४ )।

युवं च्यवानमश्विना जरन्तं० ( ऋ० १।११७।१३ )।

पुनश्च्यवानं चक्रथुर्युवानम्। ( ऋ० १।११८।६ )

---

( १ ) जहितस्य–ओहाक् त्यागे। कर्मणि निष्ठा ( पा० ३।४।७० ) तस्य छन्दस्युभयथा ( पा० ३।४।११७ ) इति सार्वधातुकत्वाद्यक्। तस्य बहुलं छन्दसि ( पा० २।४।७६ ) इति श्लुः। जहातेश्च ( पा० ४।६।११६ ) इतीत्वम्।

( २ ) 'प्र ण आयूंषि तारिषत्' ( ऋ० १०।१८६।१ ) 'प्रवर्द्धयतु च न आयुः' ( नि० १०।३५ );।

'प्र चन्द्रमास्तिरते दीर्घमायुः' ( ऋ० १०।८५।१९ ) 'प्रवर्द्धयते चन्द्रमा दीर्घमायुः' ( नि० ११।६ );

'प्र ण आयूंषि तारिषः' ( वा० सं० ३४।८ ) 'प्रवर्द्धय च न आयुः' ( नि० ११।३० );।

'प्रोर्वशी तिरत दीर्घमायुः' ( ऋ० १०।९५।१० ) 'अथोर्वशी प्रवर्द्धयते दीर्घमायुः' ( नि० ११।३६ );

'देवा न आयुः प्रतिरन्तु जीवसे' ( ऋ० १।८९।२ ) 'देवा न आयुः प्रवर्द्धयन्तु चिरञ्जीवनाय' ( नि० १२।३९ )

'सोम राजन्प्र ण आयूंषि तारीः' ( ऋ० ८।४८।७ ) 'प्रवर्द्धय च न आयूंषि सोम राजन्' ( नि० ४।७ ) इत्यादिषु।

( ३ ) कनीनाम्–रयेर्मतौ बहुलम् ( पा० ६।१।३४ ) इति बहुलवचनात् कन्याशब्दस्यात्र सम्प्रसारणम्।

इत्येवमादयः ।

च्यवन ऋषिर्वेदे—"च्यवानमित्यप्यस्य निगमा भवन्ति" इति यास्कः(१) ( निं० ४।१९ ) ।

दोषयुक्तस्याश्रयो न कर्त्तव्य(२) इत्याह—

न दद्याद्दोषशीलानामाश्रयं ( यः ? ) क्रूरकर्मणाम् ।
दैत्या दत्ताश्रयाः कूपे प्राक्षिपन् रेभवन्दनौ ॥ ३९॥

दोषयुक्तानां क्रूरकर्मरतानां पुंसामाश्रयं नैव दद्यात् । कुतः । रेभवन्दनयोर्दृष्टान्तेन दृढयति । यथा रेभवन्दनौ दैत्याः कूपे प्राक्षिपन् । कीदृशाः दैत्याः दत्ताश्रयाः दत्तः आश्रयो येभ्यस्ते दत्ताश्रयाः ॥ पूर्वं रेभवन्दनाभ्यां दैत्येभ्यो दोषशीलेभ्यः क्रूरकर्मभ्यो येभ्य आश्रयो दत्तः । तैस्तौ कूपे निपातितावित्यर्थः । रेभश्च वन्दनश्च—अल्पाच्तरमिति ( पा० २।२।३४ ) रेभस्य पूर्वनिपातः । पूर्वं वन्दनः पातितः सोऽश्विभ्यामुद्धृतः । रेभोद्धरणं दशरात्रीरित्यग्रे ( ऋ० १।११६।२४ ) दर्शयिष्यते । अत्र तु वन्दनोद्धरणं वदामः।

तत्रर्चमाह—( ऋ० १.११६.११ )

तद्वां नरा शंस्यं राध्यं चाभिष्टिमन्नासत्या वरूथम् ।
यद्विद्वांसा निधिमिवापगूह्ळमुद्दर्शतादूपथुर्वन्दनाय ॥

तत् । वाम् । नरा । शंस्यम् । राध्यम् । च । अभिऽष्टिऽमत् । नासत्या । वरूथम् । यत् । विद्वांसा । निधिम्ऽइव । अपऽगूह्ळम् । उत् । दर्शतात् । ऊपथुः । वन्दनाय ॥ ४२ ॥

---

(१) 'च्यवन ऋषिर्भवति च्यावयिता स्तोमानां च्यवानमित्यप्यस्य निगमा भवन्ति' ( नि० ४।१९ )

(२) 'ग' पुस्तकेऽस्त्ववतरणिकेयं त्वेवम्—दोषयुक्तस्याश्रयो न दातव्य इत्याह—

श्लोकश्च—न दद्याद्दोषशीलानामाश्रयं क्रूरकर्मणाम् ।
दैत्या दत्ताश्रयौ कूपे प्राक्षिपन् रेभवन्दनौ ॥ इति

( अत्रेदमाख्यानम् )-वन्दनो नाम कश्चिदृषिः दैत्याश्रमं गत्वा कंचित्कालं स्थितः। कस्मिंश्चिद्दिवसे तैः कूपे निपातितः उत्तरीतुमशक्नुवन् अश्विनावस्तौत्। तमश्विनौ कूपादुन्निन्यतुरिति-

ऋष्यादिकं पूर्ववत्-ऋचोऽयमर्थः।

हे नरा-सुपां सुलुगित्यौकारस्यात्वम् ( पा० ७।१।३९ )-आरोग्यस्य नेतारौ हे नासत्या अश्विनौ वां युवयोः तत्कर्म शंस्यमस्माभिः(१) प्रशंसनीयम् राध्यम् आराधनीयं च अभिष्टिमत् (२) आभिमुख्येन प्राप्तव्यम् वरूथं(३) वरणीयं कामयितव्यं यत्कर्म (४) विद्वांसा जानन्तौ युवां निधिमिव निक्षिप्तधनमिव(५) अपगूह्ळम् (६) अरण्ये निर्जनदेशे कूपस्य मध्ये असुरैर्निगूढं वन्दनाय वन्दनमृषिम्

---

( १ ) शंस्यम्—शंसु स्तुतौ। अस्माण्ण्यन्ताद् 'अचो यत्' ( पा० ३।१।९७ ) इति यत्। 'यतोऽनावः' ( पा० ६।१।२१३ ) इत्याद्युदात्तत्वम्।

( २ ) अभिष्टिमत्—अभ्येषणयुक्तम्। 'अभि' पूर्वादिष गतावित्यस्माद्भावे क्तिन् ( पा० ३।३।९४ )। 'मन्त्रे वृषेषपचमन० ( पा० ३।३।९६ ) इत्यादिना क्तिन उदात्तत्वम्। कृदुत्तरपदप्रकृतिस्वरत्वेन स एव शिष्यते। शकन्ध्वादित्वात् ( पा० १।१।६४ वा० ) पररूपम्। तादौ च निति० ( पा० ६।२।५० ) तु गतिस्वरस्य सर्वविधीनां छन्दसि विकल्पितत्वादप्रवृत्तिः। ततो मतुप् (पा० ५।२।९४) अन्तोदात्तादुत्तरस्य तस्य 'ह्रस्वनुड्भ्याम्' ( पा० ६।१।१७६ ) इति मतुप उदात्तत्वम्।

( ३ ) वरूथम्—जॄवृञ्भ्यामूथन् ( उ० सू० १७१ ) 'ऊधन्' इत्यपि पाठः।

( ४ ) 'किं पुनस्तत्कर्म' इति वे० भा०

( ५ ) निक्षिप्तं धनमिव वे० भा०

( ६ ) अपगूह्ळम्-गुहू संवरणे। कर्मणि निष्ठा ( पा० ३।४।७० ) यस्य विभाषा (पा० ७।२।१५) इतीट् प्रतिषेधः। ढत्व (पा० ८।२।३१) धत्व ( पा० ८।२।४० ) ष्टुत्व ( पा० ८।४।४१ ) ढलोप (पा० ८।३।१३) ढ्रलोपदीर्घाः ( पा० ६।३।१११ )। गतिरनन्तरः (पा० ६।२ ४९) इति गतेः प्रकृतिस्वरत्वम्।

कर्मणः सम्प्रदानत्वाच्चतुर्थी । दर्शताद्(१) अध्वगैः पिपासुभिः द्रष्टव्यात्कूपात् उदूपथुः उदहार्ष्टम् (एवं यदेतत्कूपादुद्धरणं तदित्यर्थः)

तथा निगमाः

शुभे रुक्मं न दर्शतं निखातम् ( ऋ० १।११७।५ )।

युवं वन्दनं निर्ऋतं जरण्यया ( ऋ० १।११९।७ )।

युवं वन्दनमृश्यदादुदूपथुः ( ऋ० १०।३९।८ )।

इत्येवमादयः ।

अपगूढ़ळम्—ढ्ळकारतामेति स एव चास्य०(ऋ०प्रा० १।६७) इति ढकारस्य ढ्ळकारत्वम् ।

विद्या देयेत्याह—

शीर्ष्णोऽपि कर्त्तनं सह्यं विद्या दातुं प्रबुद्धिभिः ।
दध्यङ् मधुप्रदानार्थं तत्याज शिरसो द्वयम् ॥४०॥

प्रकृष्टबुद्धिभिर्नरैर्विद्यां दातुं शिरसोऽपि छेदनं सह्यम् दध्यङ्वत्—यथा दध्यङ् ऋषिः मधुप्रदानार्थं अश्विभ्यां मधुविद्यां दातुं शिरसो द्वयं तत्याज त्यक्तवान् ।

तदर्थेयमृक् ( ऋ० १.११६.१२ )

तद्वां नरा सनये दंसं उग्रमाविष्कृणोमि तन्यतुर्न वृष्टिम् ।
दध्यङ् ह यन्मध्वाथर्वणो वामश्वस्य शीर्ष्णा प्र यदीमुवाच ॥

तत् । वाम् । नरा । सनये । दंसः । उग्रम् । आविः । कृणोमि । तन्यतुः । न । वृष्टिम् । दध्यङ् । ह । यत् ।

(१) दर्शतात् भृमृदृशियजि० ( उ० सू० ३६७ ) इत्यादिना अतच् ।

(२) ऊपथुः-टुवप् बीजतन्तुसन्ताने लिट्यथुसि (पा० ३।४।८२) यजादित्वात् ( पा० ६।१।१५ ) सम्प्रसारणम् । द्विर्वचनादि ( पा० ६।१।१७ )

मधु॑ । आ॒थ॒र्व॒णः । वा॒म् । अश्व॑स्य । शी॒र्ष्णा । प्र । यत् । ई॒म् । उ॒वाच॑ ॥ ४३ ॥

ऋष्यादि पूर्ववत् ( अत्राख्यानम् १ )—

"इन्द्रो दधीचे प्रवर्ग्यविद्यां मधुविद्यां चोपदिश्य यदीमामन्यस्मै वक्ष्यसि शिरस्ते छेत्स्यामीत्युवाच । ततोऽश्विनावश्वस्य शिरश्छित्त्वा दधीचः शिरः (२)प्रच्छिद्यान्यत्र निधाय तत्राश्व्यं शिरः प्रत्यधत्ताम् । तेन च दध्यङ् ऋचः सामानि यजूंषि च प्रवर्ग्यविषयाणि मधुविद्याप्रतिपादकं ब्राह्मणं चाश्विनावध्यापयामास । तदिन्द्रो ज्ञात्वा वज्रेण तच्छिरोऽच्छिनत् । अथाश्विनौ ( तस्य ) स्वकीयं मानुषं शिरः प्रत्यधत्ताम् (३)इति ।

तथा च बृहद्देवता ( अ० ३—श्लो० १८-२४ )

प्रादादिन्द्रोऽ(४)पि सुप्रीतः सुताय (५) तदथर्वणः ।
[ सचाभवद्दषिस्तेन ब्रह्मणा दीप्तिमत्तरः(६) ] ॥ १८ ॥
तमृषिं(७) निषिषेधेन्द्रो मेदं(८) वोचः क्वचिन्मधु ।
न हि प्रोक्ते मधुन्यस्मिन् जीवन्तं त्वोत्सृजाम्यहम् ॥१९॥
तमृषिं त्वश्विनौ देवौ विविक्ते(९) मध्वयाचताम् ।
स च ताभ्यां तन्नाचष्टे(१०) यदुवाच शचीपतिः ॥ २० ॥

---

( १ ) 'अत्रेयमाख्यायिका' इति वेदभाष्ये ।

( २ ) 'प्राच्छिद्य' इति 'ग'.पुस्तके ।

( ३ ) 'इति शाट्यायनवाजसनेययोः प्रपञ्चेनोक्तम्' इति वे० भा० ।

( ४ ) 'ब्रह्मापि' इति मुग्धानल ( Macdonell ) सं० बृहद्देवतायाम् ।

( ५ ) 'सुधत्तायमथर्वणः' इत्यपि पाठः 'क' 'ख' पुस्तकयोः ।

( ६ ) इदं श्लोकार्धं नीतिमञ्जर्या हस्तलिखितपुस्तके नास्ति । अतोऽत्र बृहद्देवताया उद्धृतमस्ति ।

( ७ ) 'सिषिधे चेन्द्रो' इति 'क' 'ख' पुस्तकयोः ।

( ८ ) 'मैवम्' इति मु० बृ० पाठः ।

( ९ ) 'भिषजौ' इत्यपि पाठः 'क' 'ख' पुस्तकयोः ।

(१०) 'तदाचष्टे, इति मुग्धानलपाठस्तु न सम्यक्

तमब्रूतां तु नासत्यावाश्व्येन शिरसा भवान् ॥
मध्वाशु(१) ग्राहयत्वावां मेन्द्रश्च त्वावधीत्ततः ॥२१॥
आश्व्येन(२) शिरसा तौ तु दध्यङ्ङाह यदश्विनौ ।
तदस्येन्द्रो(३) हरद्धन्यन्न्यधत्तामस्य यच्छिरः ॥२२॥
दधीचश्च(४) शिरश्चाश्व्यं कृत्तं वज्रेण वज्रिणा ।
पपात सरसो मध्ये पर्वते शर्यणावति ॥२३॥
( तदश्वयस्तु(५) समुत्थाय भूतेभ्यो विविधान्वरान् ।
प्रादाय युगपर्यन्तं तास्वेवाप्सु निमज्जति ) ॥२४॥ इति

तथा शतपथे ( श० ब्रा० १४।४।५।१.३ ) "इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच। तदेतदृषिः पश्यन्नवोचत्" ।इति।

ऋचोऽयमर्थः । ( नरा ) हे नरौ अश्विनौ वां युवयोः सम्बन्धि–युष्मदस्मदोः षष्ठीचतुर्थी० ( पा० ८।१।१।२० ) इति द्विवचनस्यानुदात्तो वामादेशः। उग्रम् उद्गूर्णं ( अन्यैः दुःशकं ) दंसः कर्म ( कर्मनामैतत् निघण्टु २।१ ) युवाभ्यां पुरा कृतं ( तत् कर्म ) सनये(६) लाभाय ( धनलाभार्थम् ) आविष्कृणोमि प्रकटी-

---

( १ ) 'अस्मासु ग्राहय त्वञ्च दध्यङ् मध्वब्रवीत्ततः' ॥ इत्यपि पाठः 'क' पुस्तके।

( २ ) 'आश्वेन' इत्यपि पाठः 'क' पुस्तके ।

( ३ ) अनेकेषु पाठेष्वयमेव मयादृतः । तदस्येन्द्रोऽहरत्स्वन्तर्दधातामस्य यच्छिरः' इति हस्तलिखित 'क' 'ख' पुस्तकयोः ।

'तदस्येन्द्रोऽहरत् स्वं तन्( ? )न्यधत्तामस्य यच्छिरः' इति मुग्धानलविरचितबृहद्देवतायाम् ।

( ४ ) दधीचाऽश्वशिरश्चाश्वं छिन्नं वज्रेण वज्रिणा इति 'क' 'ख' पुस्तकयोः पाठः ।

( ५ ) श्लोकश्चायं बृहद्देवताया अत्रोद्धृतोऽस्ति ।

( ६ ) सनये-षणु दाने । खनिकष्यज्यसिवसिवनिसनिध्वनि० (उ० सू० ५.८९) इत्यादिना इप्रत्ययः 'सनिर्भक्तिर्दानञ्च' इति सि० कौ० ।

करोमि। तत्र दृष्टान्तः। तन्यतु(१) र्न यथा मेघस्थः शब्दो(२) वृष्टिं ( मेघान्तर्वर्तमानमुदकं प्रवर्षणेन ) सर्वत्र प्रकटयति तद्वत्। किं तत्कर्म आथर्वणः(३) अथर्वणः पुत्रो दध्यङ्। एतत्संज्ञ ऋषिः। अश्वस्य शीर्ष्णा(४) युष्मत्सामर्थ्येन प्रतिहितेन शिरसा वां युवाभ्यां ईं इमां मधुविद्यां यद्ध-यदा खलु प्रोवाच प्रोक्तवान् तदानीम् अश्वस्य शिरसः सन्धानलक्षणं पुनर्मानुषस्य शिरसः प्रतिसंधानलक्षणं च यद्भवदीयं कर्म तदाविष्कृणोमीत्यर्थः। एतेन दध्यङ् मधुविद्याप्रदानार्थं शिरसो द्वयं तत्याजेति सिद्धम्।

आविष्कृणोमि-आविर्हविर्ज्योतिरिरिति ( ऋ० प्रा० ४।४६ ) षत्वम्।

तथा निगमाः—

आथर्वणायाश्विना दधीचे० ( ऋ० १।११७।२२ )।

युवं दधीचो मन आविवासथो ( ऋ० १।११९।९ )।

अहमिन्द्रो रोधो वक्षो अथर्वणः० (ऋ० १०।४८।२)।

इत्येवमादयः।

---

( १ ) तन्यतुः-तनु विस्तारे। ऋतन्यञ्जिवन्यञ्ज्यर्पि० ( उ० सू० ४५० ) इत्यादिना तनोते र्यतुच्। तन्यतुर्वायू रात्रिश्च। यद्वा स्तन शब्दे वाहुलकाद्यतुच्। छान्दसः सलोपः।

( २ ) वृष्टिम्-वृष्यते सिच्यते ऽनेनेति वृष्टिः। 'मन्त्रे वृषेषपच ( पा० ३।३।९६ ) इत्यादिना क्तिन उदात्तत्वम्।

( ३ ) अथर्वणः—अपत्यार्थे अणि ( पा० ४।१।९२ ) 'अन्' (पा० ६।४।१६७ ) इति प्रकृतिभावात् टिलोपो न।

( ४ ) शीर्ष्णा—'शीर्षंश्छन्दसि ( पा० ६।१।६० ) इति शिरः शब्दपर्यायः शीर्षन् शब्दोऽन्तोदात्तो निपात्यते। अल्लोपे सति ( पा० ६।४।१३४ ) उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम्।

रूपादिपञ्चकं(१) सत्कारार्थं भवतीत्याह—

रूपर्द्धिकुलविद्यत्तं सत्कारात्सार्थमश्विवत् ।
विश्वके वध्रिमत्यां यत् पुत्रदानात्स्वभूत्तयोः ॥४१॥

नरस्य रूपर्द्धिकुलविद्यत्तम् रूपश्च ऋद्धिश्च कुलश्च विद्या च ऋतश्च—सर्वो द्वन्द्वो विभाषा एकवद्भवतीत्येकवद्भावः (म० भाष्य पा० १।२।६३)। यत्रैकत्वं तत्र नपुंसकमिति नपुंसकत्वम्। एतद्रूपादिपञ्चकं सत्कारात्सार्थकं भवति। आश्विवत्। यथा अश्विनोर्यद्रूपादिपञ्चकम् । विश्वके विष्णाप्वपुत्रदानात् । वध्रिमत्यां हिरण्यहस्तपुत्रदानात् एवंविधात्सत्कारात् सुशोभनमभूत्। तथाऽन्यस्यापीत्युक्तम्। विश्वके पुत्रदानम् 'अवस्यते स्तुवते०' (ऋ० १. ११६. २३) इत्यस्यां दर्शयिष्यते। अत्र तु वध्रिमत्यां पुत्रदानरूपं सत्कारं वदामः।

तत्र ऋक् (ऋ० १. ११६. १३)

अजोहवीन्नासत्या करा वां महे यामन्पुरुभुजा पुरंन्धिः।
श्रुतं तच्छासुरिव वध्रिमत्या हिरण्यहस्तमश्विनावदत्तम् ॥

अजोहवीत्। नासत्या। करा। वाम्। महे। यामन्। पुरुऽभुजा। पुरम्ऽधिः। श्रुतम्। तत्। शासुः। इव। वध्रिऽमत्याः। हिरण्यऽहस्तम्। अश्विनौ। अदत्तम् ॥ ४४ ॥

अत्रेदमाख्यानम्—वध्रिमती नाम (स्त्री) कस्यचिद्राजर्षेः पुत्री सा नपुंसकभर्तृका पुत्रलाभायाश्विनावाजुहाव। तदाह्वानं श्रुत्वाऽश्विनावागत्य तस्यै हिरण्यहस्ताख्यं पुत्रं ददतुः। इति।

ऋचोऽयमर्थः। ऋष्यादि पूर्ववत्। हे नासत्यौ करा करौ

---

(१) 'ग' पुस्तकेऽवतरणिकेयं त्वेवम्—रूपादिपञ्चकं सत्कारात्सार्थकं भवतीत्याह—

श्लोकश्च—रूपर्द्धिकुलविद्यत्तं सत्कारात्सार्थमश्विवत् ।
विश्वके वध्रिमत्याञ्च पुत्रदानात्स्वभूत्तयोः ॥ १ ॥ इति।

अभिमतकर्तारौ करोतेः पचाद्यच् ( पा० ३।१।१३४ ) पुरुभुजा (१) बहुभुजौ महे महनीये पूजनीये यामन् यामनि-याति गच्छतीति याम स्तोत्रं तस्मिन्सति । आतो मनिन्० ( पा० ३।२।७४ ) इति मनिन् । सुपां सुलुगिति ( पा० ७।१।३९ ) सप्तम्या लुक् । वां युवां पुरन्धिर्बहुधीः वध्रिमती ( वध्रिः पुत्रोत्पादनाशक्तः पण्डकः तद्वती ) एतत्संज्ञा राजपुत्री अजो(२)हवीत् पुनः पुनः स्तुत्या पुत्रलाभार्थम् आहूतवती । युवां वध्रिमत्यास्तदाऽऽह्वानं श्रुतम् (३) आशृणुतम् । तत्र दृष्टान्तः शासुरिव(४) यथा शासुराचार्यस्य वचनं शिष्योऽवहितः सन् ऐकाग्र्येण (एकाग्रमनाः)। शृणोति तद्वत् श्रुत्वा च हे अश्विनौ तस्यै हिरण्यहस्तं सुवर्णमयपाणिं(५)पुत्रम् अदत्तम् प्रायच्छतम् ।

हिरण्यहस्तमश्विना रराणा० ( ऋ० १।११७।२४ ) ।

इति निगमान्तरम् ।

एवं वध्रिमत्यै पुत्रं दत्त्वाऽश्विभ्यां रूपादि सार्थं(६) कृतमित्यर्थः ।

साधवो निर्गुणेष्वपि दयां कुर्वन्तीत्याह—

निर्गुणेष्वपि सत्त्वेषु दयां कुर्वन्ति साधवः ।
अश्विभ्यां(७)मोचिता ग्रस्ता पक्षिणी वर्त्तिका शुभा ॥४२॥

---

( १ ) 'बहूनां पालकौ प्रभूतहस्तौ वा' इति वे० भा० ।

( २ ) अजोहवीत्—ह्वयतेर्यङ्लुगन्ताल्लङ् । यङो वा ( पा० ७।३।९४ ) इति तिप ईडागमः ।

( ३ ) श्रुतम्-बहुलं छन्दसीति ( पा० २।४।७६ ) विकरणस्य लुक् । बहुलं छन्दस्यमाङ्योगेऽपि ( पा० ६।४।७५ ) इत्यडभावः ।

( ४ ) शासुः—शास्तुः । शासु अनुशिष्टौ । शंसिशसिशासि० इत्यादिना संज्ञायां वुन् । इडभावश्छान्दसस्तलोपश्च ।

( ५ ) 'हितरमणीयं पाणिं वा, एतत्संज्ञम्' इति वेदभाष्ये ।

( ६ ) 'सार्थकम्' इति 'ग' पुस्तके ।

( ७ ) 'अश्विभ्यां मोचिता ग्रस्ता पक्षिणी वर्तिका शुना' इति 'ग' पुस्तके ।

साधवः सत्पुरुषाः निर्गुणेष्वपि गुणरहितेष्वपि सत्त्वेषु जीवेषु दयामश्विवत् कुर्वन्त्येव । यथाऽश्विभ्यां साधुभ्यां पक्षिणी वर्त्तिका निर्गुणाऽपि अरण्ये वर्त्तमाना शुना ग्रस्ता सती मोचिता ।

तदर्थेयमृक् ( ऋ० १. ११६. १४ )

**आस्नो वृकस्य वर्त्तिकामभीके युवं नरा नासत्याऽमुमुक्तम् ।**
**उतो कविं पुरुभुजा युवं ह कृपमाणमकृणुतं विचक्षे ॥**

**आस्नः । वृकस्य । वर्त्तिकाम् । अभीके । युवम् । नरा । नासत्या । अमुमुक्तम् । उतो इति । कविम् । पुरुऽभुजा । युवम् । ह । कृपमाणम् । अकृणुतम् । विऽचक्षे ॥ ४९ ॥**

तत्राख्यानम्—वर्त्तिका चटकसदृशस्य पक्षिणः स्त्री ताम् अरण्ये वर्त्तमानेन शुना ग्रस्ताम्(१) अश्विनाव् अमोचयतम् । इति ॥

ऋचोऽयमर्थः । हे नरा नरौ(२) नासत्या अश्विनौ वृकस्य विकर्त्तकस्य शुनः आस्नः(३) आस्याद् युवं युवां अभीके अभिगते वृकवर्त्तिकयोः सङ्ग्रामे वार्त्तिकां चटकसदृशीं अमुमुक्तम्(४) अमोचयतम्(५) । उतो अपि च कविमृषिं हे पुरुभुजा बहुपालकौ

---

(१) 'ग्रस्तां पुरा किल अश्विनौ' इति वे० भा० ।

(२) 'नेतारौ' इति वे० भा० ।

(३) आस्नः—पद्दन्नो० ( पा० ६।१।६३ ) इत्यादिना आस्यस्यासन्नादेशः । अल्लोपोऽनः ( पा० ६।४।१३४ ) इत्यकारलोपे उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् ।

(४) अमुमुक्तम्—मुचेरन्तर्भावितण्यर्थात् लङि बहुलं छन्दसि ( पा० २।४।७६ ) इति विकरणस्य श्लुः ।

(५) अतोऽनन्तरं वेदभाष्ये व्याख्यातम्—'यास्कस्त्वाह–( नि० ५।२१ ) पुनः पुनर्वर्तते प्रतिदिवसमावर्तते इति वर्तिका उषाः । तां वृकेणावरकेण सर्वजगत्प्रकाशेनाच्छादयित्रा सूर्येण ग्रस्ताम्' इति । वस्तुतस्तु भावार्थ एवायं निरुक्तस्थवचनस्य । अक्षरशस्तु 'आदि-

( युवं ह युवामेव ) युवं युवां कृपमाणं(१) स्तुत्यं ( कृपमाणं सन्तं ) विचक्षे(२) विविधं द्रष्टुं अकृणुतम् अकुरुतम्। तुमर्थे० ( पा० ३।४।९ ) इति सेन्।

( कृपमाणम्-कृपिः स्तुतिकर्मा तुदादिषु द्रष्टव्यः। कृपायति कृपण्यति अर्चतिकर्माणौ-निघण्टु ३।१४ )।

**अजोहवीदश्विना वर्त्तिका वाम्०** ( ऋ० १।११७।१६ )।

**वृकस्य चिद्वर्त्तिकामन्तरा स्या०** ( ऋ० १०।३९।१३ )।

**याभिर्वर्त्तिकां ग्रसितामभुञ्चतम्०** ( ऋ० १।११२।८ )

इत्येवमादयो निगमाः॥

रात्रौ निःशङ्कमनसा न सञ्चरेदित्याह—

**न सञ्चरणशीलः स्यान्निशि निःशङ्कमानसः।**
**विश्पला छिन्नपादाऽऽसीत् खेलस्याजौ यतो निशि॥४३॥**

निशि रात्रौ निःशङ्कमानसः निःशङ्कं मनः कृत्वा विचक्षणः सञ्चरणशीलो न स्यात्। यदि सञ्चरेत्तर्हि विश्पलाया इव विघ्नं जायते। यतः कारणात् विश्पला काचित् स्त्री खेलस्य राज्ञः आजौ सङ्ग्रामे रात्रौ मनसो निःशङ्कत्वात्। छिन्नपादाऽऽसीत्। तस्याः छिन्नपादायाः अश्विनौ आयसीं जंघां समधत्तम्—तत् 'चरित्रं हि' इत्याख्यानपूर्विकयाऽऽह।

तत्र ऋक् ( ऋ० १.११६.१९ )

---

त्योऽपि वृक उच्यते यदावृङ्क्ते'। 'अजोहवीदश्विना वर्तिका वामास्नो यत्सीममुञ्चतं वृकस्य' ( ऋ० १।११७।१६ ) 'आह्वयदुषा अश्विनावादित्येनाभिग्रस्ता, तामश्विनौ प्रमुमुचतुरित्याख्यानम्' इति।

( १ ) कृपमाणम्-कृपिः स्तुतिकर्मा। तुदादिषु द्रष्टव्यः। विकरणस्वरे प्राप्ते 'वृषादीनाञ्च' ( पा० ६।१।२०३ ) इत्याद्युदात्तत्वम्।

( २ ) विचक्षे-तुमर्थे सेसेनसेऽसे० ( पा० ३।४।९ ) इति सेन्प्रत्ययः। स्कोः संयोगाद्योरन्ते च ( पा० ८।२।२९ ) इति सलोपः।

चरित्रं हि वेरिवाच्छेदि पर्णमाजा खेलस्य परितक्म्यायाम्।
सद्यो जङ्घामायसीं विश्पलायै धने हिते सर्त्तवे प्रत्यधत्तम्॥

चरित्रम्। हि। वेःऽइव। अच्छेदि। पर्णम्। आजा। खेलस्य। परिऽतक्म्यायाम्। सद्यः। जङ्घाम्। आयसीम्। विश्पलायै। धने। हिते। सर्तवे। प्रति। अधत्तम् ॥ ४६ ॥

(अत्राख्यानम्) अगस्त्यपुरोहितः खेलो नाम राजा तस्य सम्बन्धिनी विश्पला नाम स्त्री सङ्ग्रामे शत्रुभिश्छिन्नपादाऽऽसीत्। पुरोहितेनागस्त्येन स्तुतावाश्विनौ रात्रावागत्य तस्या अयोमयं पादं समधत्ताम्। इति

ऋष्यादि पूर्ववत् ऋचोऽयमर्थः। आजा (१) आजौ सङ्ग्रामे परितक्म्यायां(२) रात्रौ अगस्त्यपुरोहितस्य खेलस्य राज्ञः सम्बन्धिन्याः विश्पलायाः चरित्रं चरणम्—अर्त्तिलूधूसूखनसहचर इत्रः (पा० ३।२।१८४) इति करणे इत्रः। वेः पक्षिणः पर्णं प (त) त्रमिव अच्छेदि हि पुरा छिन्नमभूत् (खलु)। हे अश्विनौ युवां (अगस्त्येन स्तुतौ सन्तौ) सद्यस्तदानीमेव हिते शत्रुषु निहिते धने जेतव्ये विषयभूते सति सर्तवे सर्त्तुं गन्तुं विश्पलायै आयसीं(३) अयोमयीं जङ्घां जङ्घोपलक्षितं पादं प्रत्यधत्तम् सन्धानमेकीकरणं कृतवन्तावित्यर्थः।

तथा निगमाः—

अगस्त्ये ब्रह्मणा वावृधाना० (ऋ० १।११७।११)।

प्रतिजङ्घां विश्पलाया अधत्तम्।(ऋ० १।११८।८)।

---

(१) आजा-सुपां सुलुगिति (पा० ७।१।३९) विभक्तेर्डादेशः।

(२) परितक्म्यायाम् परितक्म्या रात्रिः। परित एनां तकतीति यास्कः (नि० ११।२५)। एतामुभयतः सूर्यो गच्छतीति तस्यार्थः इति वेदभाष्ये।

(३) आयसीम्—अयःशब्दाद्विकारार्थे प्राणिरजतादिभ्योऽञ् (पा० ४।३।१५४) टिड्ढाणञ् (पा० ४।१।१५) इति ङीप्।

युवं सद्यो विश्पलामेतवे कृथः ( ऋ० १०।३९।८ ) ।
याभिर्विश्पलां धनसामथर्व्यं० ( ऋ० १।११२।१० ) ।
इत्येवमादयः ।

इत्येवं निःशङ्कमनसा रात्रौ गमनं विश्पलादृष्टान्तेन निषिद्धम् ।

हितकारी पितेत्याह—

योहितोऽन्यः पिता ज्ञेयो ह्यहितोऽपि पिताऽपिता ।
ऋज्राश्वोऽन्धः कृतः पित्रा नासत्याभ्यां सुलोचनः ॥४४॥

योऽन्यो हितः हितकारी स पिता ज्ञेयः । यः पिता अहितः अहितकारी सोऽपिता यथा ऋज्राश्वः पित्रा वृषागिरा अहितेन अन्धः कृतः शापात् सोऽन्धत्वं प्राप्तः । नासत्याभ्यामश्विभ्यां पितृरूपाभ्यां हितकारिभ्यां सुलोचनः कृतः । तौ पितरौ जानीयात् ।

तदाख्यानपूर्विकया शतंमेषानित्येतयाह—( ऋ० १.११६.१६ )

शतं मेषान्वृक्ये चक्षदानमृज्राश्वं तं पिताऽन्धं चकार ।
तस्मा अक्षी नासत्या विचक्ष आधत्तं दस्रा भिषजावनर्वन् ॥

शतम् । मेषान् । वृक्यै । चक्षदानम् । ऋजूऽअश्वम् । तम् । पिता । अन्धम् । चकार । तस्मै । अक्षी इति । नासत्या । विऽचक्षे । आ । अधत्तम् । दस्रा । भिषजौ । अनर्वन् ॥४७॥

तत्राख्यानम्—वृषागिरः पुत्रो ऋज्राश्वो ( नाम ) राजर्षिः । तस्य समीपे अश्विनोर्वाहनभूतो रासभो वृकी भूत्वाऽवतस्थे । स च तस्या आहारार्थम् एकोत्तरशतसंख्याकान् (१) मेषान् शकलीकृत्य स्वभूतजनानां पौरजनानां प्रददौ ।

( १ ) 'पौरजनानां स्वभूतान्मेषान्' इति वेदभाष्ये ।

( ऋज्राश्वः शतमेकं च मेषान् ( ऋ० १।११७।१८ )।

इति मन्त्रान्तरे दर्शनात् ) एवं पौराहिते(१) ( पौराणमहिते ) प्रवृत्तं पिता शापेन नेत्रहीनमकरोत्। तेन स्तूयमानावश्विनौ अस्मद्वाहननिमित्तमस्यान्धता जातेति जानन्तौ तस्मै अक्षिणी प्रायच्छतामिति।

ऋचोऽयमर्थः। यः ऋज्राश्वः वृक्ये(२) आत्मना पोषितायै वृकस्त्रियै शतं शतसंख्याकान् मेषान् शकलीकृत्य प्रादात् तं चक्षदानं(३) क्षदति ( रत्तिकर्मा ) रत्र शकलीकरणार्थः। शकलीकृत्य दत्तवन्तम् ऋज्राश्वं पिता शापेनाऽन्धं दृष्टिहीनं चकार कृतवान्। हे नासत्या(४) नासत्यौ दस्रौ भिषजौ देववैद्यौ(५) सुपां सुलुगिति ( पा० ७।१।३९ ) सर्वत्राकारः आमन्त्रितत्वात्सर्वानुदात्तत्वम् ( पा० ८।१।१९ )। तस्मै ऋज्राश्वाय अक्षी(६) चक्षुषी विचक्षे(७)

---

( १ ) 'पौरोहिते प्रवृत्तम्' इति 'क' 'ख' पुस्तकयोः पाठः।

( २ ) वृक्ये–वृकोऽरण्यश्वा तस्य स्त्री वृकी–'जातेरस्त्रीविषयादयो०' ( पा० ४।१।६३ ) इति ङीष्। 'जसादिषु छन्दसि वा वचनम्' ( पा० ७।३।१०७। वा० ) इति चतुर्थ्येकवचनस्याडभावे यणादेशे (पा० ६।१।७७) 'उदात्तस्वरितयोर्यणः०' ( पा० ८।२।४ ) इति परस्यानुदात्तस्य स्वरितत्वम्।

( ३ ) चक्षदानम्—क्षदेर्लिट्। कानच् चित्स्वरः। (अन्तोदात्तः)

( ४ ) 'सत्यस्वभावौ, सत्यस्य नेतारौ वा' इति वेदभाष्ये।

( ५ ) 'अश्विनौ देवानां भिषजाविति श्रुतेः। (तै० सं० २।३।११।१)

( ६ ) अक्षी –'ई च द्विवचने ( पा० ७।१।७७ ) इति परत्वादक्षशब्दस्य ईकारान्तादेशः। स चोदात्तः। तस्मिन्कृते 'सकृद्गतौ विप्रतिषेधः' इति परिभाषया पुनर्नुम् न भवति।

( ७ ) विचक्षे—वेदभाष्ये विशेषणमिदमक्षीशब्दस्य। ततस्तस्यार्थः 'विविधं द्रष्टुं समर्थे' इति कृतः। शब्दसाधुत्वञ्च–चक्षेः सम्पदादिलक्षणो भावे क्विप्। वस्तुतस्तु चक्षेः 'तुमर्थे सेसेनसे० ( पा० ३।४।९ ) इत्यादिनाऽसेन् प्रत्ययो विधातव्यः। तस्यार्थः यथाऽत्र 'विविधं द्रष्टु' मित्येव। नित्वादाद्युदात्तत्वञ्च।

विविधं द्रष्टुं आधत्तं व्यधत्तमकुरुतम्। कीदृशे आक्षिणी–अनर्वन् अनर्वणी (द्रष्टव्यं प्रति) पितृशापाद्गमनरहिते–ऋ गतौ–अन्येभ्य० (पा० ३।२।१७८) इति भावे वनिप्। अर्वं गमनं विषयं प्रति अनयोर्नास्तीति अनर्वन्–सुपां सुलुगिति (पा० ७।१।३९) द्विवचनस्य लुक् नलोपाभावश्छान्दसः। बहुव्रीहौ नञ्सुभ्याम् (पा० ६।२।१७२) इति उत्तरपदान्तोदात्तत्वम्।

शतं मेषान्वृक्यै मामहानम् (ऋ० १।११७।१७)
इति निगमान्तरम्।

एतेन हि यो हितः स पितेति सिद्धम्।

सत्येन जयतीत्याह—

प्राप्नुयाद्विजयं सत्यात्तस्मात्सत्यं समाचरेत्(१)।
नासत्यावाश्विनौ सूर्यां देवेभ्यो जिग्यतुः पुरा॥४५॥

पुमान् सत्यादेव विजयं प्राप्नुयात्। तस्मात्सत्यं समाचरेत्। नासत्यवत्। यदि आश्विनौ देवौ नासत्यौ सत्यरूपौ असत्यमनृतभाषणं तद्रहितौ नासत्यौ। सत्यावेव नासत्यावित्यौर्णवाभः। सत्यस्य प्रणेतारावित्याग्रायणः (नि० ६।१३) तर्हि पुरा देवेभ्यः सर्वेभ्यः पुरा अग्रे सूर्यां सूर्यपुत्रीं जिग्यतुः तस्मात्सत्यं समाचरेदित्युक्तम्।

तदावां रथं दुहितेत्याख्यानपूर्विकयाह–(ऋ० १.११६.१७)

आ वां रथं दुहिता सूर्यस्य कार्ष्मेवातिष्ठदर्वता जयन्ती।
विश्वे देवा अन्वमन्यन्त हृद्भिः समु श्रिया नासत्या सचेथे॥

आ। वाम्। रथम्। दुहिता। सूर्यस्य। कार्ष्मऽइव। अतिष्ठत्। अर्वता। जयन्ती। विश्वे। देवाः। अनु।

(१) 'समाश्रयेत्' इति 'ग' पुस्तके।

अमन्यन्त । हृत् ऽ भिः । सम् । ऊम् इति । श्रिया । नासत्या । सचेथे इति ॥ ४८ ॥

सविता स्वदुहितरं सूर्याख्यां सोमाय राज्ञे प्रदातुमैच्छत् । तां सूर्यां सर्वे देवा वरयामासुः । तेऽन्योन्यमूचुः । आदित्यमवधिं कृत्वाऽऽजिं धावाम योऽस्माकं मध्ये उज्जेष्यति तस्येयं भविष्यतीति । तत्राश्विनावुदजयताम् । सा च सूर्या जितवतोस्तयो रथमारुरोह । "अथ यत्र ह तत्सविता सूर्यां प्रायच्छत्सोमाय राज्ञे" इत्यादि ब्राह्मणम्(१) ( कौ० ब्रा० १८।१ )

ऋचोऽयमर्थः । हे अश्विनौ वां युवयोः रथं अर्वता (२) युष्मदीयेनाश्वेन (३) जयन्ती जीयमाना सूर्यस्य सवितुः दुहिता आतिष्ठत् आरूढवती । तत्र दृष्टान्तः । काष्र्मेव—काष्र्म शब्दः काष्ठवाची यथा काष्ठमाजिधावनस्यावधितया निर्दिष्टं लक्ष्यं आशुगामी कश्चित् सर्वेभ्यो धावद्भ्यः पूर्वं तिष्ठति (४) पश्चाद्विश्वेदेवाः एतदारोहणस्थानं हृद्भिः हृदयैः । पद्दन्निति (पा० ६।१।६३) हृदयस्य हृद्भावः । अन्वमन्यन्त अन्वजानन् । तदानीं हे नासत्यावश्विनौ श्रिया ऋकूसहस्रलाभरूपया ( सम्पदा ) कान्त्या वा युवां संसचेथे सङ्गच्छेथे । षच समवाये स्वरितेत्वादात्मनेपदम् ( पा०१।३।७२ ) जयन्ती—व्यत्ययेन कर्मणि शतृप्रत्ययः ।

युवो रथं दुहिता सूर्यस्य ( ऋ० १।११७।१३ )

इति निगमान्तरम् ।

---

(१) अथ प्रजापतिर्वै सोमाय राज्ञे दुहितरं प्रायच्छदित्यादिकं ब्राह्मणमनुसन्धेयम् ( ऐ० ब्रा० ४-७ ) । इदं चाख्यानं सूर्याविवाहस्य स्तावकेन सत्येनोत्तभिता भूमि ( ऋ० १०-८५ ) रिति सूक्तेन स्पष्टयिष्यते इति वे० भा० ।

(२) शीघ्रमवधिं प्राप्नुवता । इति वे० भा० ।

(३) करणभूतेन युवाभ्यां । इति वे० भा० ।

(४) प्राप्नोति एवमेव सर्वेभ्यो देवेभ्यः पूर्वम् इति वे० भा० ।

पूर्वं (पृ० ६८) वैमद्याज्जाहुषादश्विनो रथः सार्थको जात इत्युक्तम् तत्परिविष्टमित्यनया जाहुषदृष्टान्तेनाह(१)—

तत्र ऋक् (ऋ० १. ११६. २०)

**परिविष्टं जाहुषं विश्वतः सीं सुगेभिर्नक्तमूहथू रजोभिः।**
**विभिन्दुना नासत्या रथेन वि पर्वताँ अजरयू अयातम्॥**

**परि॑ऽविष्टम्। जाहुषम्। विश्वतः। सीम्। सुऽगेभिः। नक्तम्। ऊहथुः। रजःऽभिः। विऽभिन्दुना। नासत्या। रथेन। वि। पर्वतान्। अजरयू इति। अयातम्॥ ४९॥**

ऋचोऽयमर्थः। हे नासत्यावश्विनौ जाहुषो नाम कश्चिद् (राजा) तं विश्वतः सर्वतः परिविष्टं(२) शत्रुभिः परिवृतं राजानं नक्तं रात्रौ सुगेभिः(३) सुष्ठु गन्तुं शक्यैः रजोभिः रञ्जकैः मार्गैः विभिन्दुना(४) विशेषेण सर्वस्य भेदकेन आत्मीयेन रथेन ऊहथुः। तस्माच्छत्रुसमूहान्निरगमयतम्। सीमिति परिग्रहार्थीयो वा पद-पूरणो वा (नि० १।७) इति पादपूरणाय। हे अजरयू—न जरा अजरा तां आत्मनः इच्छतः। सुप आत्मनः क्यच् (५) (पा०

(१) (पूर्वं वैमद्या रथदानेन सार्थत्वमुक्तम्। अधुना जाहुषस्य रथदानेन सार्थत्वमुच्यते) इति 'ग' पुस्तके।

(२) परिविष्टम्-विश प्रवेशने। कर्मणि निष्ठा (पा० ३।४।७१) 'गतिरनन्तरः' (पा० ६।२।४९) इति गतेः प्रकृतिस्वरत्वम्।

(३) सुगेभिः-सुदुरोरधिकरणे (पा० ३।२।४८ वा०) इति गमेर्डः।

(४) विभिन्दुना—भिदिर् विदारणे। औणादिक उप्रत्ययो नुमागमश्च।

(५) न छन्दस्यपुत्रस्य (पा० ७।४।३५) इतीत्वदीर्घयोर्नि-षेधः इति वे० भा०

३।१।८ ) क्याच्छन्दसि ( पा० ३।२।१७० ) इति उः । ( जरारहितौ ) नित्यतरुणौ ( निर्गतेन ) तेन सह पर्वतान् शत्रुभिरारोढुमशक्यान् शिलोच्चयान् व्ययातं विशेषेणागच्छतम् ।

नि जाहुषं शिथिरे धातमन्तः ( ऋ० ७।७१।५ )

इति निगमान्तरम् ।

एवं जाहुषान्नासत्ययो रथः सार्थो जात इत्युक्तम् ।

नासत्ययोर्गोतमजलदानं परावतं० ( ऋ० १।११६।९ )

इत्यनयोक्तम्—

शरजलदानमाह—शरस्य चिदनया ऋचा० ( ऋ० १. ११६.२२ )

'पौरुषे कारणं बीजमित्युच्यते'—

**पौरुषे कारणं बीजं योनिरेव न कारणम् ॥**
**अश्विभ्यां नासिकाजाभ्यां(१) दोग्ध्री कृता शयोर्हि गौः ॥४६॥**

पौरुषे पुरुषार्थे कर्त्तव्ये केवलं बीजमेव रेतः कारणम् । कुतः । यथा नासत्यौ आश्विनौ नासिकोत्पन्नौ । नासिकाप्रभवौ बभूवतुरिति (नि० ६. १३) नासिकोत्पत्तिः प्रसिद्धाऽश्विनोः तथापि विवस्वतो रेतसो यतो जातौ तर्हि आश्विभ्यां नासिकाजाभ्यामपि पौरुषं कृतम् । शयोः ऋषेः गौः यतः दोग्ध्री कृता दुग्धपूर्णा कृता ।

तत्र ऋक्—( ऋ० १. ११६. २२ )

**शरस्य चिदार्चत्कस्यावतादा नीचादुच्चा चक्रथुः पातवे वाः।**
**शयवे चिन्नासत्या शचीभिर्जसुरये स्तर्यं पिप्यथुर्गाम् ॥**

**शरस्य । चित् । आर्चत्ऽकस्य । अवतात् । आ । नीचात् । उच्चा । चक्रथुः । पातवे । वारिति वाः । शयवे । चित् । नासत्या । शचीभिः । जसुरये । स्तर्यम् । पिप्यथुः । गाम् ॥ ५० ॥**

(१) 'नासत्याभ्यां नोजाताभ्याम्' इति 'ग' पुस्तके ।

ऋचोऽयमर्थः । हे नासत्या नासत्यौ सत्यरूपौ नासिकाप्रभवौ। त्वां युवां आर्चत्कस्य ऋचत्कपुत्रस्य शरस्य चिद् एतद् संज्ञस्यापि ( स्तोतुः ) पिपासितस्य पातवे पानाय—पा पाने—तुमर्थे० ( पा० ३।४।९ ) इति तवेन् । नीचाद् नीचीनाद् अवतात् कूपाद् उच्चा उच्चैः उपरिष्टाद् वाः उदकम् आचक्रथुः ( आभिमुख्येन ) कृतवन्तौ । तथा शचीभिः युष्मदीयैः कर्मभिः परिचरणैः जसुरये श्रान्ताय जसु हिंसायां। (१)शयवे चित् शयुनाम्ने ऋषये। स्तर्यं निवृत्तप्रसवाम्-स्तीर्यते आच्छाद्यते प्रसवसामर्थ्याभावेनेति स्तरीः (२) ताम् गां पिप्यथुः अग्निहोत्रार्थं पयसो दोग्ध्रीं पयसाऽऽपूरितवन्तौ। ओप्यायी वृद्धौ(३) । लिड्यङोश्च (पा० ६।१।२९) इति पी भावः वाः—वारपुनर् ( ऋ० प्रा० १।१०३ ) इति रेफः ।

अधेनुं दस्रा स्तर्यं१ विषक्ताम० ( ऋ० १।११७।२० )

इति निगमः ।

एवं नासत्याभ्यां नासिकायोनिभ्यां विवस्वद्बीजाभ्यां शयौ पुरुषार्थमुक्त्वा पौरुषे कारणं बीजमित्युक्तम् ।

विश्वके पुत्रदानाद्रूपादिपञ्चकं सार्थमभूदित्युक्तं पूर्वम् (पृ० ९०)

तदाह—( ऋ० १. ११६. २३ )

अवस्यते स्तुवते कृष्णियाय ऋजूयते नासत्या शचीभिः ।
पशुं न नष्टमिव दर्शनाय विष्णाप्वं ददथुर्विश्वकाय ॥

अवस्यते । स्तुवते । कृष्णियाय । ऋजुऽयते । नास-

---

( १ ) जसुसहोरुरिन् ( उ० सू० २४० ) इति वे० भा० ।

( २ ) अवितृस्तृतन्त्रिभ्य ईः ( उ० सू० ४४६ ) इतीकारप्रत्ययः । वा छन्दसि ( पा० ३।४।८८ ) इत्यमिपूर्वस्य विकल्पितत्वादभावे यणादेशः । उदात्तस्वरितयोर्यणः० ( पा० ८।२।४ ) इति परस्यानुदात्तस्य स्वरितत्वम् ।

( ३ ) लिटि व्यत्ययेन परस्मैपदम् इति वे० भा० ।

त्या । शचीभिः । पशुम् । न । नष्टम्ऽइव । दर्शनाय । विष्णाप्वम् । ददथुः । विश्वकाय ॥ ५१ ॥

अवस्यते (१) अवनं रक्षणमात्मन इच्छते–सुप आत्मनः० (पा० ३।१।८) इति क्यच्। स्तुवते स्तुतिं कुर्वते कृष्णियाय कृष्णपुत्राय छान्दसोऽपत्यार्थे घः। ऋजूयते आर्जवमिच्छते विश्वकाय एतत्संज्ञकाय ऋषये हे नासत्यौ युवां शचीभिः आत्मीयैः कर्मभिः विष्णाप्वं विष्णाप्वनामानं पुत्रं (२) दर्शनाय दर्शनार्थं ददथुः दत्तवन्तौ। तत्र दृष्टान्तः–पशुं न नष्टमिव (३) यथा कश्चिद्विनष्टं पशुं स्वामिनो दृष्टिपथं प्रापयति तद्वत्। ऋजूयते–पृशनाजिरर्ज्विति (ऋ० प्रा० ९।१६) दीर्घः।

युवं नरा स्तुवते कृष्णियाय विष्णाप्वं ददथुर्विश्वकाय (ऋ० १।११७।७)

इति निगमः।

रेभं कूपोद्धरणमश्विनो(४)र्वदामः—

तत्रर्चमाह—(ऋ० १.११६.२४)

दश रात्रीरशिवेना नव द्यूनवनद्धं श्नथितमप्स्व१न्तः।
विप्रुतं रेभमुदनि प्रवृक्तमुन्निन्यथुः सोममिव स्रुवेण॥

दश । रात्रीः । अशिवेन । नव । द्यून् । अवऽनद्धम् । श्नथितम् । अप्ऽसु । अन्तरिति । विऽप्रुतम् । रेभम् । उदनि । प्रऽवृक्तम् । उत् । निन्यथुः । सोमम्ऽइव । स्रुवेण ॥ ५२ ॥

---

(१) अवस्शब्दात्सुप आत्मनः क्यच् (पा० ३।१।८); शतुरनुमो० (पा० ६।१।१७३) इति विभक्तेरुदात्तत्वम्।

(२) विष्णाप्वं नाम विनष्टं पुत्रम् इति वे० भा०।

(३) एक उपमार्थीयः अपरः पूरकः इति वे० भा०।

(४) अश्विनोरुच्यते इति 'ग' पुस्तके।

पुरा खलु रेभमृषिं पाशैर्बद्ध्वा असुराः कूपे कस्यचिद्दिवसस्य सायंकाले प्रचिक्षिपुः। स चाश्विनौ स्तुवन् दशरात्रीर्नवाहानि च कूपमध्ये तथैवावतस्थे। दशमेऽहनि प्रातरश्विनौ तं कूपादुदतारयताम्।

ऋचोऽयमर्थः। दशरात्रीः दशसंख्याका निशाः। नव द्यून् नव संख्याकान्यहानि अत्यन्तसंयोगे द्वितीया ( पा० २।३।५ )। एतावन्तं कालम् अशिवेन दुःखहेतुना दाम्ना अवनद्धं बद्धं–णह बन्धने (१) श्नथितं शत्रुभिस्ताडितम् (२) श्नथ ताडने (३) श्नथतिर्वधकर्मा ( निघण्टु २।१९ )। अप्सु ( कूपान्तर्वर्तमानासु ) अन्तर्मध्ये असुरैः पातितं अत एव उदनि उदके–पद्दन्नोमा० (पा० ६।१।६३ ) इत्युदकस्योदादेशः। विप्रुतं (४) विप्लुतं व्याक्षिप्तसर्वाङ्गम प्रवृक्तं लुप्तोपमानमेतत्–प्रवृञ्जनेन सन्तप्तं घर्ममिव व्यथया सन्तप्यमानम् एवं–भूतं रेभं हे अश्विनौ युवां उन्निन्यथुः। तस्मात्कूपाद् उत्तीर्णं ( उन्नीतं ) कृतवन्तौ। तत्र दृष्टान्तः–यथा सोममिव यथा अग्निहोत्रहोमार्थम् अभिषुतं सोमरसं कूपसदृशे अग्निहोत्रस्थालीमध्ये वर्तमानं स्रुवेणाध्वर्युरुन्नयति तद्वत। अशिवेनेति एकादशिद्वादशिनोर्लघावष्टममक्षरमिति ( ऋ० प्रा० ८. ३६ ) दीर्घः।

युवं रेभं परिषूते रुरुष्यथो० ( ऋ १।११९।६ )।

इति निगमान्तरम्।

---

( १ ) कर्मणि निष्ठा ( पा० ३।४।७१ ) नहो धः ( पा० ८।२।३४ ) झषस्तथोर्धोऽधः ( पा० ८।२।४० ) इति निष्ठा तकारस्य धत्वम्। गतिरनन्तरः ( पा० ६।२।४९ ) इति गतेः प्रकृतिस्वरत्वम्।

( २ ) हिंसितम् इति वे० भा०।

( ३ ) श्नथ हिंसार्थः। निष्ठा ( पा० २।२।३६ )

( ४ ) प्रुङ् गतौ। अवनद्धवत् प्रत्ययस्वरौ। कपिलकादित्वाल्लत्वविकल्पः।

मनस्विनां लक्षणमाह—

स्वीयपीडामपि घ्नन्ति कृत्वाऽकार्यं मनस्विनः ।
चक्रतुः सुभगां घोषां प्रविश्य भगमश्विनौ ॥४७॥

मनस्विनः अस्मायामेधा०(पा० ५।२।१२१) इति विनिः । महान्तः अकार्यमपि निषिद्धाचरणमपि कृत्वा स्वीयपीडां स्वकीयाः स्वीयाः स्वीयानां पीडा स्वीयपीडा तां घ्नन्ति । अश्विवत् । यथा घोषाया भगं प्रविश्य अश्विनौ तां स्वीयां सुभगां सौभाग्यवतीं चक्रतुः । रोगमुक्तायै तस्यै भर्तारं ददतुः । पुरा कक्षीवानाश्विनोः प्रियः जीर्ण आसीत् । सोऽश्विभ्यां नवः कृतः । तत्—

'कक्षीवन्तं यदी पुना रथं न कृणुथो नवम्'
(ऋ० १०।१४३।१)

इति अत्रिणोक्तम् (सख्यपुत्रेण) । तस्य कक्षीवता दुहिता घोषा स्वीया ।

तदर्थेयमाख्यानपूर्विका ऋक्—(ऋ० १.११७.७)

युवं नरा स्तुवते कृष्णियाय विष्णाप्वं ददथुर्विश्वकाय ।
घोषायै चित्पितृषदे दुरोणे पतिं जूर्यन्त्या अश्विनावदत्तम्॥

युवम् । नरा । स्तुवते । कृष्णियाय । विष्णाप्वम् । ददथुः । विश्वकाय । घोषायै । चित् । पितृऽसदे । दुरोणे । पतिम् । जूर्यन्त्यै । अश्विनौ । अदत्तम् ॥ ५३ ॥

अत्राख्यानम् । घोषा नाम ब्रह्मवादिनी कक्षीवतो दुहिता सा कुष्ठिनी सती कस्मैचिद्वराय अदत्ता पितृगृहे निषण्णा जीर्णाऽऽसीत् । साऽश्विनोरनुग्रहान्नष्टकुष्ठा सती पतिं लेभे ।

तथा बृहद्देवता—(अ० ७ श्लो० ४२–४८)

आसीत्काक्षीवती घोषा पापरोगेण दुर्भगा ।
उवास षष्टिवर्षाणि(१) पितुरेव गृहे पुरा ॥ ४२ ॥
आतस्थे महतीं चिन्तां न पुत्रो न पतिर्मम ।
जरां प्राप्ता मुधा तस्मात् प्रपद्येहं शुभस्पती ॥ ४३ ॥
यथैतौ मामकस्तात आराध्यावाप यौवनम् ।
(आयुरारोग्यमैश्वर्यं सर्वभूतहने विषम्(२) ) ॥ ४४ ॥
रूपवत्तां च सौभाग्यमहं तस्य सुता यदि ।
ममापि मन्त्राः सिद्धाः(३) स्युर्यैस्तोष्येते मयाश्विनौ ॥४५॥
चिन्तयन्तीति सूक्ते द्वे यो वां परि (ऋ० १०।३९-४०) ददर्श सा।
स्तुतौ तावश्विनौ देवौ प्रीतौ तस्या भगान्तरम् ॥ ४६ ॥
प्रविश्य विजरारोगां सुभगां चक्रतुश्च तौ ।
भर्त्तारं ददतुस्तस्यै सुहस्त्यं च सुतं मुनेः (४) ॥ ४७ ॥

ऋचोऽयमर्थः । हे नरा नेतारावश्विनौ युवं युवां स्तुवते स्तोत्रं कुर्वते कृष्णियाय कृष्णाख्यस्य पुत्राय विश्वकाय विष्णाप्वं ददथुः । विष्णाप्वनामानं विनष्टं पुत्रं दत्तवन्तौ । हे आश्विनौ पितृषदे (५) पित्रा सम्बद्धे दुरोणे स्वकीये जनकगृहे कुष्ठरोगेण भर्त्तारमप्राप्य पितृषदे पितृसमीपे निषण्णायै । जूर्यन्त्यै (६) जरां

---

(१) षष्टिं वर्षाणि इति 'ग' मुग्धानलपुस्तकयोः ।
(२) इयं पङ्क्तिर्हस्तलिखितपुस्तकेषु न दृश्यते ।
(३) 'प्रादुः' इति मुग्धानलपुस्तके ।
(४) 'मनोः' इति 'ग' पुस्तके । 'मुनिम्' इति मुग्धानलपुस्तके ।
(५) पितृषदे-षद्लृ विशरणगत्यवसादनेषु । क्विप् च ( पा० ३।२।७६ ) इति क्विप् ।
(६) जूर्यन्त्यै-जूष वयोहानौ । लटः शतृ० ( पा० ३।२।१२४ ) दिवादित्वात् श्यन् ( पा० ३।१।६९ ) बहुलं छन्दसि ( पा० ३।२।८८ ) इत्युत्वम् । हलि च ( पा० ८।२।७७ ) इति दीर्घः। अदुपदेशाल्लसार्वधातुकानुदात्तत्वे श्यनो नित्वाद् आद्युदात्तत्वम् ( पा० ६।१।१९७ ) ।

प्राप्नुवत्यै घोषायै चिद् एतत्संज्ञायै ब्रह्मवादिन्यै अपि रोगोपशमनेन पतिं भर्त्तारम् अदत्तम् युवां दत्तवन्तौ । पितृषदे इति अन्यपूर्वैं० ( ऋ० प्रा० ५—२१ ) इति षत्वम् । एवमकार्यमपि कृत्वा स्वीयपीडाऽश्विभ्यां दूरीकृतेत्युक्तम् ।

कुलधर्मो न त्याज्य इत्याह—

कुलक्रमागतो (१) धर्मो न त्याज्यः प्रभुभिः सदा(२) ।
कण्वोऽश्विभ्यां भिषग्भ्यां हि सुत्वक् सुश्रुत कृतः सुदृक् ॥४८॥

कुलक्रमेण आगतो यो धर्मः स विगुणो गुणी वा प्रभुभिर्महद्भिः अश्विवन्न त्याज्यः कदापि । 'श्रेयान्स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात्' । इति भगवतोक्तत्वात् ( गी० ३।३५ ) । यथाश्विभ्यां भिषग्भ्यां भिषग्विद्या देवत्वेपि न त्यक्ता । कथम् । हि यस्मात् कण्व ऋषिः कुष्ठरोगात् सुत्वक् कृतः स बाधिरः सुश्रुत कृतः । तस्माद्भैषज्यं न त्यक्तम् ।

तदर्थेयमृक्—( ऋ० १.११७.८ )

युवं श्यावाय रुशतीमदत्तं महः क्षोणस्याश्विना कण्वाय ।
प्रवाच्यं तद्वृषणा कृतं वां यन्नार्षदाय श्रवो अध्यधत्तम् ॥

युवम् । श्यावाय । रुशतीम् । अदत्तम् । महः । क्षोणस्य । अश्विना । कण्वाय । प्र ऽ वाच्यम् । तत् । वृषणा । कृतम् । वाम् । यत् । नार्सदाय । श्रवः । अधि ऽ अधत्तम् ॥ ५४ ॥

हे अश्विनौ युवं युवां कण्वाय श्यावाय कुष्ठरोगेण श्यामवर्णाय ऋषये रुशतीं दीप्तित्वम् [ दीप्तत्वचम् (३) ] अदत्तं प्राय-

( १ ) 'कुलक्रमगतो०' इति 'क' 'ख' पुस्तकयोः ।
( २ ) 'सह' इति च 'क' 'ख' पुस्तकयोः ।
( ३ ) 'दीप्तत्वचं स्त्रियम्' इति वेदभाष्ये ।

च्छतम् । अपि च तस्मै कण्वाय क्षोणस्य (१) क्षोणाय-चतुर्थ्यर्थे षष्ठी । क्षि निवासे । पृषोदरादित्वात्क्षोणभावः । दृष्टिराहित्येन गन्तुमशक्तस्सन् एकस्मिन्नेव स्थाने निवसते निवासकाय इत्यर्थः । [ ऋषये ] महः (२) तेजः तैजसं चक्षुरिन्द्रियम् अदत्तमिति शेषः । [ तथा ] हे वृषणा कामानां वर्षितारौ वां युवयोः तत्कृतं कर्म अस्माभिः प्रवाच्यं [ प्रकर्षेण ] वाचनीयं शंसनीयम् । नार्षदाय नृषद्पुत्राय कण्वाय ऋषये [ बधिराय ] ऋष्यन्धक० [ पा० ४।१।११४ ) इत्यण्-

उत कण्वं नृषदः पुत्रमाहु० [ ऋ० १०. ३१. ११ ]

इति मन्त्रान्तरे उक्तम् । तस्मै श्रवः श्रवणेन्द्रियं यदध्यधत्तं दत्तवन्तौ स्थ ( इति यत् तादित्यर्थः ) ।

अपर (३) आह-ब्राह्मणस्य परीक्षार्थम् असुराः कण्वमृषिं गूढे तमसि निदधुः अत्रैव स्थितः सन् व्युष्टामुषसं विजानीहि यदि त्वं ब्राह्मणोसीति । तमश्विनावागत्योचतुः व्युष्टायां हर्म्यस्योपरि वीणां वादयन्तावावामागमिष्यावः । तं शब्दं श्रुत्वा व्युष्टामुषसं ब्रूहि तदेतत्प्रतिपाद्यते । हे वृषणा कामानां वर्षितारौ अश्विनौ वां युवयोः तत्कृतं कर्म प्रवाच्यं प्रशंसनीयं यत् नार्षदाय नृषदपुत्राय कण्वाय क्षोणस्य क्षोणः शब्दकारी वीणाविशेषः महो महतः क्षोणस्य श्रवः शब्दम् अध्यधत्तम् उषसो विज्ञानार्थमधिकमकुरुतम् । इति ।

---

( १ ) क्षोणस्य-क्षि निवासगत्योः । कृत्यल्युटो बहुलम् ( पा० ३।३।११३ ) इति कर्तरि ल्युट् । पृषोदरादित्वात् ( पा० ६।३।१०९ ) क्षोणभावः । तदुक्तं यास्केन-'क्षोणस्य क्षयणस्य' ( नि० ६।६ ) इति । पक्षान्तरे तु (टुक्षु) शब्दे इत्यस्मादौणादिको नप्रत्ययः ।

( २ ) महः-मह पूजायाम् । अस्मादौणादिकोऽसिप्रत्ययः । पक्षान्तरे तु महच्छब्दात् षष्ठ्येकवचने छान्दसो अल्लोपः । बृहन्महतोरुपसंख्यानम् इति विभक्तेरुदात्तत्वम् । यद्वा क्विबन्तात्षष्ठ्येकवचनम् ।

( ३ ) अत्र वेदभाष्ये आख्यानमिदं दृश्यते 'अपर आह' इति ।

गोष्ठादिवगोषतमा० [ ऋ० प्रा० ५. ३० ] इति निपातनान्नार्ष-दायेति षत्वम्। श्वो अधि-अयेऽयोऽवे० [ ऋ० प्रा० २।३७ ] इति अभिहिते प्राप्ते श्वो अधि सार्ज्ञयो० [ ऋ० प्रा० २।४९ ] इति निषेधान्न।

युवं कण्वायापिरिप्ताय चक्षुः० [ ऋ० १. ११८. ७ ]

इति निगमः।

एवमश्विनोः कर्माणि सङ्कीर्त्य ग्रन्थकृद् अश्विनौ अभीष्टमयाचत—

ये दानेषु प्रसत्कारा उक्ताः कक्षीवताश्विनोः।
नासत्याभ्याञ्च सूक्तैस्तैर्भवेम सुखिनो वयम् ॥ ४९॥

अश्विनोर्ये प्रकृष्टाः सत्कारा दानेषु (१) विभदभुज्युपैद्वादीनां (२) नासत्याभ्यां ( ऋ० १.११६–१२० ) सूक्तैः पञ्चभिः उक्ताः कक्षीवता ऋषिणा सत्कारैः कृत्वा तयोः प्रसादाद् वयं सुखिनो भवेम भूयास्म।

कक्षीवानपि आश्विनोः कर्मान्ते आशिषमाशास्ते तथा वयमपि तत्र ऋक् ( ऋ० १.११६.२५ )

प्र वां दंसांस्यश्विनाववोचमस्य पतिः स्यां सुगवः सुवीरः।
उत पश्यन्नश्नुवन्दीर्घमायुरस्तमिवेज्जरिमाणं जगम्याम् ॥

प्र। वाम्। दंसांसि। अश्विनौ। अवोचम्। अस्य। पतिः। स्याम्। सुऽगवः। सुऽवीरः। उत। पश्यन्। अश्नुवन्। दीर्घम्। आयुः। अस्तम्ऽइव। इत्। जरिमाणम्। जगम्याम् ॥ ५५ ॥

---

( १ ) 'दीनेषु' इत्यपि पाठः।

( २ ) 'पैद्वादि' इत्येव।

ऋचोऽयमर्थः । हे अश्विनौ वां युवयोः दंसांसि पुरा कृतानि कर्माणि दंसः वेशः (१) (निघटु० २।१) इति तन्नामानि प्रावोचं कक्षीवानहमुक्तवानस्मि । सुगवः शोभनगोयुक्तः सुवीरः शोभनवीरो भूत्वा अस्य (२)धनादेः पतिः स्याम् (३)। उतापि च पश्यन् अक्षिभ्यां पश्यन् । उपलक्षणमेतत् । सर्वैरिन्द्रियैः स्वस्वविषयदर्शनसमर्थैः दीर्घं वर्षशतरूपेणायतं आयुर्जीवितञ्चाश्नुवन् (४) प्राप्नुवन्नहम् अस्तमिवेत् यथा गृहं स्वामी निष्कण्टकं प्रविशति एवं निःशङ्केन जरिमाणं (५) जरां जगम्यां (६) ( कण्टकरा।हित्येन प्राप्नुयाम् ) वृद्धः सन् चिरकालं निवसेयमित्यर्थः । पतिः स्यामिति 'पदादयश्च स्यति०' ( ऋ० प्रा० ५।६ ) इति षत्वे प्राप्ते, पतिः स्यां दित्सासि० ( ऋ० प्रा० ५।१९ ) इति निषेधान्न ।

इति द्विवेदश्रीलक्ष्मीधरसूनुना सत्रयज्वना द्याद्विवेदेन विरचिते नीतिमञ्जरीभाष्ये प्रथमाष्टके नीतिवाक्यानि समाप्तानि । श्रीरस्तु ।

इति प्रथमाष्टकः समाप्तः ॥

---

( १ ) 'वेषः' इति निरुक्ते ।

( २ ) 'अस्य राष्ट्रस्य पतिरधिपतिः स्यां भवेयम्' इति वे० भा० ।

( ३ ) स्याम्-अस्तेः प्रार्थनायां लिङ् ( पा० ३।३।६१ ) यासुट् ( पा० ३।४।१०३ ) श्नसोरल्लोपः ( पा० ६।४।१११ ) इत्यकारलोपः ।

( ४ ) अश्नुवन्-अशू व्याप्तौ । व्यत्ययेन शतृ ।

( ५ ) जरिमाणम्-जॄष् वयोहानौ । अस्मादौणादिक इमनिच् प्रत्ययः ।

( ६ ) जगम्याम्-गमेः प्रार्थनायां लिङि ( पा० ३।३।६१ ) बहुलं छन्दसि ( पा० २।४।७६ ) इति विकरणस्य श्लुः ।

॥ श्रीः ॥

# अथ द्वितीयाष्टकः ॥

सरस्वतीमहं वन्दे सभाष्या नीतिमञ्जरी ।
द्याद्विवेदस्य चाङ्गस्य मुखे स्थित्वा कृता यया ॥ १ ॥
प्रथमे सेतिहासान्यो दर्शयित्वा सुभाषितान् ॥
द्वितीयेऽष्टक आहाथ तत्त्वविद् द्याह्वय (१) ऋचाम् ॥

स्त्रीषु विश्वासो (२) न कार्य इत्याह—

**विश्वासो नैव कर्तव्यो वल्लभाया अपि स्त्रियाः ।**
**महिष्याः प्राप विश्वासाद्दासीपुत्रं कलिङ्गजः ॥५०॥**

पुंसा वल्लभाया इष्टाया अपि स्त्रियाः भार्यायाः विश्वासो नैव कार्यः । अङ्गराजदृष्टान्तेन दृढयति यथा अङ्गराजः कलिङ्गाधिपतिः महिष्याः पट्टराज्ञ्याः विश्वासाद्दासीपुत्रम् औशिजं कक्षीवन्तं प्राप प्राप्तवान् ।

तत्राख्यानपूर्विका ऋक् ( ऋ० १.१२२.५ )

**आ वो रुवण्युमौशिजो हुवध्यै घोषेव शंसमर्जुनस्य नंशे ।**
**प्र वः पूष्णे दावन आँ अच्छा वोचेय वसुतातिमग्नेः ॥**

**आ । वः । रुवण्युम् । औशिजः । हुवध्यै । घोषाऽइव । शंसम् । अर्जुनस्य । नंशे । प्र । वः । पूष्णे । दावने । आ । अच्छ । वोचेय । वसुऽतातिम् । अग्नेः ॥ ५६ ॥**

**कक्षीवान् विराड्रूपया एकादशिनस्त्रयोष्टकश्चेत्येवंलक्ष ( क्ष्य ) लक्षणया (का० स० परिभाषा द्वादशकाण्डी ९।६) ऋचा विश्वान् देवांस्तुष्टाव ।**

---

(१) 'द्याह्वयम्' 'द्याह्वया' इत्यपि पाठभेदौ ।
(२) 'स्त्रीषु विश्वासं न कुर्यादित्याह–' इति 'ग' पुस्तके ।

कक्षीवानित्यन्वर्थसंज्ञा । कक्षीवान् कक्ष्यावानिति ( नि० ६।१० ) । कक्ष्या रज्जुरश्वस्येति यास्केनोक्ता ( नि० २।२ )

अत्राक्षेपः । नन्वश्वबन्धनं राज्ञ एवोचितम् । कक्षीवानिति राज्ञो नाम । अतोऽस्य राजत्वात् प्रातारत्नीयोक्तः (ऋ० १।१२५) प्रतिग्रहो नोपपद्यते । कुतः । 'याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः' इत्युक्तम् । ( तत्र ) ब्राह्मणस्यैवाधिकारो न क्षत्रियस्येति । नैष दोषोऽस्य । यद्यप्यसौ कलिङ्गाख्यस्य राज्ञः पुत्रस्तत्कथं कलिङ्गजेन स्वयं वृद्धत्वादपत्योत्पादनाय सामर्थ्यमलभमानेन तदुत्पादनाय याचितो दीर्घतमा ऋषिः अपत्योत्पादनाय प्रेषितया राजमहिष्याऽतिजरठेन महर्षिणा सह रन्तुं लज्जमानया स्ववस्त्राभरणैरलङ्कृत्य स्वप्रतिनिधित्वेन प्रेषितामुशिङ्नामिकां योषितं दासीमित्यवगत्य ऋषिणा स्वमन्त्रपूतेन जलेनाभिषिच्य ऋषिपुत्रीं कृत्वा तया सह रेमे । एतदुत्पन्नः कक्षीवान् राज्ञः पुत्रोऽभूत् । दासीपुत्रः औशिजः कक्षीवान् कलिङ्गस्य पुत्रोऽभूदिति तात्पर्यार्थः (१) ।

तथा बृहद्देवता—( अ० ४ श्लो० २४।२५ )

अङ्गराजगृहे दासीमुशिजं पुत्रकाम्यया ॥ २४ ॥

राज्ञा च प्रहितां मत्वा शुद्धां कृत्वाऽऽरमन्मुनिः ॥ इति ॥

व्याङ्परिभ्यो रमः ( पा० १।३।८३ ) इति रमतेराङ्पूर्वत्वात्परस्मैपदम् ।

ऋचोऽयमर्थः । हे अश्विनौ औशिजः उशिक्पुत्रः कक्षीवानहम् । आहुवध्यै युष्मदाह्वानाय । वः युष्मत्सम्बन्धिनं रुवण्युं रवणीयं शब्दनीयं शंसं स्तोत्रम् अच्छ आभिमुख्येनाप्तुं वोचेय ब्रवीमि । बहुवचनं पूजार्थम् । लिङ्याशिष्यङ् (पा० ३।१।८६) इति अङ् । वच उम् ( पा० ७।४।२० ) इति वचेरुम् । केव

---

( १ ) अतोऽस्य क्षत्रियसम्बन्धात् कक्षीवानिति नामोपपन्नम् । दीर्घतमसः परमर्षेरुत्पन्नत्वेन ब्राह्मणत्वात्प्रतिग्रहोऽप्युपपन्न एव । वे० भा० ।

घोषेव—यथा घोषा अस्मत्पुत्री ब्रह्मवादिनी सा यथा अर्जुनस्य श्वेतवर्णस्य शरीरगतत्वग्रोगस्य नंशे नाशनाय युवयोः शंसं स्तोत्रमकार्षीव तद्वदहमपीत्यर्थः । हे देवाः वो युष्मत्सम्बन्धिने दावनेऽभीष्टदात्रे पूष्णे पोषकाय एतन्नामकाय अच्छाभि प्राप्तुं शंसं वोचेय स्तौमि । किञ्च अग्नेर्वसुतातिं तत्सम्बन्धि वसुदानमपि वोचेय स्तौमि । दावन आँ अच्छेति 'एकारान्तं मित्रयोर्०' ( ऋ० प्रा० २।८१ ) इति सचादित्वाद् ( ऋ० प्रा० २।८७ ) प्रकृतिभावानुनासिकोपधात्वम् । आङोऽनुनासिकश्छन्दसीति ( पा० ६।१।१२६ ) सुतायाहीत्यन्यत्वाव ( ऋ० प्रा० ७।८ ) अच्छेति सामवशसन्धिः ।

अदाता दुःखी भवतीत्याह—

दाता सुख्यजरः सूरिर्दुःख्यदाता सदाऽस्तु हि ।
मा पृणन्त इति प्राह कक्षीवान् स्वनयस्तुतौ ॥ ५१ ॥

कक्षीवान् स्वनयस्य राज्ञः स्तुतौ प्रातारत्नं सप्त स्वनयस्य दानस्तुतिरित्युक्तायाम् ( का० स० ऋ० १.–१.२५ ) मा पृणन्तो दुरितमेन० ( प्रा० ऋ० १।१२५।७ ) एतदृगर्थश्लोकार्थमाह—

दाता सदा सर्वदा सुखी दानादस्तु । सूरिर्विद्वानजरो युवा सदाऽस्तु । अदाता जनः दुःखी शोकवानस्तु हि निश्चयेन ।

स्वनयस्य दानस्तुत्युत्पत्तये इतिहासः—

दीर्घतमसः पुत्रः कक्षीवान्नाम ऋषिः ब्रह्मचर्यं (१) चरन् वेदाभ्यासाय गुरुकुले बहुतरकालं स्थित्वा वेदान्सम्यगधीत्य व्रतानि ( च ) चरित्वा तेनानुज्ञातः स्वगृहं प्रति ( प्र ) यास्यन् मध्येमार्गे (२) रात्रौ विश्रान्तः ( सुष्वाप ) । प्रभाते भावयव्यस्य पुत्रः स्वनयो नाम राजा सानुचरः (३) सङ्क्रीडमाणः अकस्मात्-

( १ ) 'चरिष्यन्' इति 'ग' पुस्तके वेदभाष्ये च ।
( २ ) 'मध्येमार्गम्' इति 'ग' पुस्तके ।
( ३ ) 'अनुचरैः सह क्रीडमानः' इति वे० भा० ।

कक्षीवतोऽन्तिकमागतः। स च रभसात् (१) प्रतिबुद्धः सहसोत्तस्थौ। तं च राजा पाणौ(२)गृहीत्वा स्वकीयमासन(३)मुपवेश्यास्य सौन्दर्यमवगत्य स्वकन्याप्रदानमनाः पप्रच्छ। भगवन् कस्य पुत्रः किन्नामा त्वमिति। स च पृष्टो मातरं पितरं स्ववृत्तान्तं च आचष्टे स्म (४)। (स च) राजा संभाव्य इति अवगत्य मुदितमनाः स्वगृहं प्राप्य (५) तस्मै मधुपर्कमाचरिष्यन् (६) वस्त्रमाल्यादिभिः पूजयित्वा सरथा दश कन्या निष्कशतमश्वशतं पुंगवानां शतं (७) गवां षष्ट्युत्तरसहस्रं पुनरेकादश रथांश्च प्रादात्। स च सर्वमनुक्रमेण प्रतिगृह्य दीर्घतमसोऽन्तिकमागत्य तस्मै प्रादर्शयत्। दर्शयित्वा (८) परोक्षं प्रातारत्नमिति (ऋ० १।१२५) अनेन प्रशंसति राजानं स्वनयम्।

तथा बृहद्देवता (अ० ३ श्लोक० १४०–१५०)–

ऋषिर्दानं तु भाव्यस्य प्रातरित्यत्र (ऋ० १।१२६) शंसति॥ १४०॥

[ काक्षीवतं (९) कदित्थेति (ऋ० १।१२१) यदैन्द्रमुपदिश्यते।

परोक्षं वैश्वदेवं तत् प्रदिष्टं स्वरसामसु (१०) ]॥ १४१॥

अधिगम्य गुरोर्विद्यां गच्छन् स्वं निलयं प्रति (११)।

कक्षीवानध्वनि श्रान्तः सुष्वापारण्यगोचरः॥ १४२॥

---

(१) 'रभसा प्रतिबुद्धः' इत्यपि 'ग' पुस्तके वेदभाष्ये च पाठः।

(२) 'पाणिं गृहीत्वा' इति 'ग' पुस्तके वेदभाष्ये च पाठः।

(३) 'स्वकीये आसने' इति 'ग' पुस्तके।

(४) 'आचख्यौ' इति 'ग' पुस्तके। 'आचचक्षे' इति वे० भा०।

(५) 'प्राप्य' इति (वे० भा०)

(६) 'आरचय्य' इति 'ग' पुस्तके वे० भाष्ये च।

(७) 'शतं निष्कान्' इत्यपि 'ग' पुस्तके।

(८) 'दर्शयित्वा च कक्षीवांस्त्रिष्टुभा स्तौति स्म' इति 'ग' पुस्तके।

(९) अयं श्लोकोऽत्राप्रकृत इति नीतिमञ्जर्या हस्तलिखितपुस्तकेषु नोद्धृतः सन्दर्भद्योतनायात्रास्माभिः क्रोडीकृत्यैव दत्तः।

(१०) (कौ० ब्रा० २४।६)।

(११) 'स्वनिलयं किल' इति मु० बृ०।

तं राजा स्वनयो नाम भावयव्यसुतो (१) व्रजन् ।
क्रीडार्थं सानुगोऽपश्यत् सभार्यः सपुरोहितः ॥ १४३ ॥
अथैनं(२) रूपसम्पन्नं दृष्ट्वा देवसुतोपमम् ।
कन्यादाने मतिं चक्रे वर्णगोत्राविरोधतः (३) ॥ १४४ ॥
सम्बोध्यैनं स पप्रच्छ वर्णगोत्रादिकं तथा (४) ।
राजन्नाङ्गिरसोऽस्मीति कुमारः प्रत्युवाच तम् ॥ १४५ ॥
पुत्रोऽहं दीर्घतमस औचथ्यस्य ऋषेर्नृप ।
अथास्मै स ददौ कन्या दशाभरणभूषिताः (५) ॥१४६॥
तावतश्च (६) रथान् श्यावान् वीड्वङ्गान्वै चतुर्युजः ।
वधूनां वाहनार्थाय (७) धनकुप्यमजाविकम् (८) ॥१४७॥
निष्काणां(९) वृषभाणां च शतं शतमदात्पुनः ।
एतत्तदुत्तरे सूक्ते(१०) शतमित्यादिषूच्यते (ऋ०१।१२६।२)॥१४८॥
शतमश्वाञ्छतं निष्कान् रथान् दश वधूमतः ।
चतुर्युजो गवां चैव सहस्रं षष्ट्यथाधिकम् (११) ॥१४९॥
स्वनयाद्भावयव्याद्यः कक्षीवान्प्रत्यपद्यत ।
प्रतिगृह्य च तुष्टाव ततः(१२) पित्रे शशंस च ॥१५०॥ इति ।

---

(१) 'भावयव्यस्ततो व्रजन्' इति 'क' 'ख' पुस्तकयोः ।
(२) 'अहैनं' इति 'क' पुस्तके ।
(३) 'गोत्राविरोधतः' इति 'क' 'ख' पुस्तकयोः ।
(४) 'ततः' इति मु० बृ० ।
(५) दशभारविभूषिताः इति 'क' पुस्तके ।
(६) 'तावतश्च रथांश्चास्य द्वीपिनोऽश्वैश्चतुर्युजः' इत्यपि 'क' पुस्तके ।
(७) 'वहनार्थाय' इति 'क' पुस्तके ।
(८) 'धनं कुप्यम्' इत्यपि 'क' पुस्तके ।
(९) 'निष्काणां शतमश्वानां' इति 'क' पुस्तके ।
(१०) 'शतमित्यादिनोदितम्' इत्यपि मु० बृ० ।
(११) 'षष्ट्युपाधिकम्' इति मुग्धानलपुस्तके ।
(१२) 'प्रातः' इति मुग्धानलः ।

तथा सूत्रम् (१) ( सा० श्रौ० सू० १६।११।४—६ )—

"कक्षीवन्तं द्वितीयं कक्षीवानौशिजः स्वनये भावयव्ये सनिं संसानोत्तमे सूक्ते नाराशंसे निगदेद्" । इति ।

" येन नराः प्रशस्यन्ते तत्सूक्तं नाराशंसम् । येन नराः प्रशसन्ते स नाराशंसो मन्त्रः " इति यास्कः ( नि० ९।९ ) । नाराशंसानि भवन्तीति सूक्तम् ।

कक्षीवांस्त्रिष्टुभा स्वनयं स्तौति । तत्र ऋक् ( ऋ० १.१२५.७ )—

**मा पृणन्तो दुरितमेन आरन्मा जारिषुः सूरयः सुव्रतासः।**
**अन्यस्तेषां परिधिरस्तु कश्चिदपृणन्तमभिसंयन्तु शोकाः॥**

**मा । पृणन्तः । दुःऽइतम् । एनः । आ । अरन् । मा । जारिषुः । सूरयः । सुऽव्रतासः । अन्यः । तेषाम् । परिऽधिः । अस्तु । कः । चित् । अपृणन्तम् । अभि । सम् । यन्तु । शोकाः ॥ ५७ ॥**

पृणन्तः(२) (प्र) यच्छन्तः दातारो जनाः दुरितं दुःखम् एनः पापं (च) मारन् मा प्राप्नुवन् । ये सूरयः विद्वांसः सुव्रतासः(३) देवानां याजकाः मा जारिषुः जरया जीर्णा मा भवेयुः। तर्हि एनोभाजनः क उच्यते । तेषां दातॄणां सूरीणां चान्यः तेभ्यः अदाता असूरिः कश्चित्परिधिः पापानां परितो धारकोऽस्तु(४) । अपृणन्त-

---

(१) सूत्रग्रन्थोक्तसूत्राणि यथा—'काक्षीवतं द्वितीयम्' ॥ ४ ॥ 'यथा कक्षीवानौशिजः स्वनये भावयव्ये सनिं ससान' ॥ ५ ॥ 'उत्तमे च सूक्ते निगदेत्' ॥ ६ ॥ S. S. S. by Hillebrandt, P. 205

( २ ) देवादीन्हविरादिना प्रीणयन्तः सन्तः-वे० भा० ।

( ३ ) शोभनकृच्छ्रचान्द्रायणादिनियमवन्तोऽपि—वे० भा० ।

( ४ ) यद्वा अन्यः कश्चन पापदेवः तेषां परिधिः परिधिस्थानीयो व्यवधायकोऽस्तु । यथाऽग्नेः परिधिः स्वयं रक्षःप्रभृतिभिर्बाध्यमानः स्वान्तर्हितमग्निं रक्षति तद्वद् अथवा अन्यो धर्मविशेषस्तेषां परिधिः परिधानमस्तु कवचस्थानीयोऽस्तु—इति वे० भा० ।

मदातारम्। पृणाक्षि पृणाति इति दानकर्मसु पाठात् (निघण्टु ३।२०) देवादीनाम् (१) अपृणन्तं शोकाः दुःखानि अभि आभिमुख्येन संयन्तु सम्यक् प्राप्नुवन्तु। इति दाता सुखी सूरिरजर इति सिद्धम्।

अप्राप्तयौवनया सह सङ्गो न कार्य(२) इत्याह—

सहारोमिकया(३) सङ्गो न कर्तव्यो नरैः स्त्रिया।
भावयव्योऽभजद् ज्ञात्वा रोमशां प्राप्तरोमिकाम्(४)॥१५॥

अरोमिकया अप्राप्तलोम्न्या स्त्रिया सह सङ्गः नरैर्न कर्त्तव्यः। भावयव्यदृष्टान्तेन द्रढयति। यथा भावयव्यो राजा रोमशां स्त्रियं प्राप्तरोमिकां जातलोम्नीं ज्ञात्वाऽभजद् भेजे। आख्यानपूर्विके ऋचौ। आगधिता परिगधिता० (ऋ० १. १२६. ६.) उपोप मे परामृश० (ऋ० १. १२६. ७.)।

भावयव्यरोमशयोर्दम्पत्योः संवाद इत्यनुक्रमणी- (का० सर्वानुक्रमणी पृ० १० मु० पु०)।

तथा बृहद्देवता—(अ० ३ श्लो० १५५-५६; अ० ४ श्लो० १-३)
पञ्चामन्दान्भावयव्यस्य गीता जायापत्योर्द्वे ऋचौ सम्प्रवादः (५)॥
[सम्प्रवादं (६) रोमशयेन्द्रराज्ञोरेते ऋचौ मन्यते शाकपूणिः॥१५५॥
इन्द्रेण जायापत्योश्चेतिहासं द्वृचेऽस्मिन्मन्यते शाकटायनः]॥
प्रादाच्च (७) तां रोमशां नाम साम्ना बृहस्पतिर्भावयव्याय राज्ञे॥१५६॥

---

(१) 'देवादीनामप्रीणयन्तम्' इति वे०भा०। 'देवादीनप्रीणयन्तम्' इति 'ग' पुस्तके।

(२) 'न कर्तव्य इत्याह' इति 'ग' पुस्तके।

(३) 'अरोमकया' इति 'क' 'ख' पुस्तकयोः।

(४) 'प्राप्तरोमकाम्' इति 'क' पुस्तके।

(५) 'सम्प्रवादो द्वृचेन' इति मु० बृ०।

(६) द्वाविमौ पादौ बृहद्देवतायाः सन्दर्भद्योतकौ नीतिमञ्जरीहस्तलिखितपुस्तकेषु नोक्तौ।

(७) 'प्रादात्सुतां रोमशां नाम नाम्ना' इति मु० बृ०।

ततस्तमर्थं (१) हरिवान् विदित्वा प्रियं सखायं स्वनयं दिदृक्षुः ॥
अभ्याजगामाशु (२) शचीसहायः(३) प्रीत्याऽर्चयत्तं (४) विधिनैव राजा ॥१॥
अभ्याजगामाङ्गिरसी च तत्र दृष्ट्वा (५) तयोः सा चरणौ ववन्दे ॥
इन्द्रः सखित्वादथ तामुवाच रोमाणि ते सन्ति न सन्ति राज्ञि ॥ २ ॥
सा बालभावादथ तं (६) जगाद उपोप मे शक्र परामृशेति ॥
( तां पूर्वथा सान्त्व्य नृपः प्रहृष्टो अन्वव्रजत्साथ पतिं (७) पतिव्रता ) ॥३॥

संभोगाय प्रार्थितो भावयव्यः स्वभार्यां रोमशाम् अप्रौढां मत्वा परिहसन्ननुष्टुभाह—( ऋ० १.१२६.६. )

**आगधिता परिगधिता या कशीकेव जङ्गहे ।**
**ददाति मह्यं यादुरी याशूनां भोज्या शता ॥**

**आ ऽ गधिता । परि ऽ गधिता । या । कशीकाऽइव । जङ्गहे । ददाति । मह्यम् । यादुरी । याशूनाम् । भोज्या । शता ॥ ५८ ॥**

**अयमर्थः । भोज्या भोगयोग्या एषा आगधिताऽऽसमन्ताद्गृहीता स्वीकृता तथा परिगधिता परितो गृहीता । आदरार्थं पुनर्वचनम् । गध्यं गृह्णातेरिति यास्कः ( नि० ५।१५।५१ ) । यद्वा आगधिता आसमन्ताद्भावेन मिश्रयन्ती आन्तरं प्रजननेन बाह्यं भुजादिभिरित्यर्थः । गध्यतिर्मिश्रीभावकर्मेति यास्कः ( नि० ५।१५।५२ ) । पूर्वपक्षे पुरुषस्य प्राधान्यम् उत्तरपक्षे योषित इति**

( १ ) 'तत्सर्वं' इति 'क' पुस्तके ।
( २ ) 'अभ्याजगामाथ' इति 'क' 'ख' पुस्तकयोः ।
( ३ ) शचीसमेतः इति 'क' पुस्तके ।
( ४ ) 'प्रत्यर्चितस्तद्विधिनैव राज्ञा' इति 'क' 'ग' पुस्तकयोः ।
( ५ ) 'दृष्ट्वा' इति 'क' 'ख' पुस्तकयोः ।
( ६ ) 'सञ्जगाद' इति 'क' पुस्तके ।
( ७ ) अयं पादो हस्तलिखितपुस्तकेषु नास्ति ।

भेदः। कीदृशी सा या जङ्घे अत्यर्थं गृह्णाति कदापि न मुञ्चति। अत्यागे दृष्टान्तः—कशीकेव कशीका नाम सूतवत्सा नकुली सा यथा पत्या सह चिरकालं क्रीडति न कदाचिदपि मुञ्चति तथा एषापि। किञ्चैषा भोग्या यादुरी यादुरित्युदकम्। रेतोलक्षणमुदकं राति (आ) ददाति यादुरी। बहुरेतोयुक्तेत्यर्थः। तादृशी सती याशूनां संभोगानां, याशु (वे० भा० यश) इति प्रजनननाम। तत्सम्बन्धीनि कर्माणि याशूनि भोगाः। तेषां शता शतानि असंख्यातानि मह्यं ददातीति॥

रोमशा नाम बृहस्पतेः (१) पुत्री परिहसन्तं स्वभर्तारं प्रत्याह—(ऋ० १.१२६.७)

उपोप मे परा मृश मा मे दभ्राणि मन्यथाः।
सर्वाहमस्मि रोमशा गन्धारीणामिवाविका॥

उप ऽ उप। मे। परा। मृश। मा। मे। दभ्राणि। मन्यथाः। सर्वा। अहम्। अस्मि। रोमशा। गन्धारीणाम् ऽ इव। आविका॥ ५९॥

भोः पते मे मां द्वितीयार्थे चतुर्थी। उपोप उपेत्यो(२)पेत्य परामृश सम्यक् (३)स्पृश भोगयोग्यामवगच्छेत्यर्थः। मे ममाङ्गानि दभ्राणि अल्परोमाणि। दभ्रमर्भकमित्यल्पस्येति यास्कः (नि० ३।२०)। मा मन्यथाः मा बुध्यस्व। अदभ्रत्वं विशदयति—अहं सर्वा रोमशा बहुरोमयुक्ताऽस्मि। यतोऽहमीदृशी अतः सम्पूर्णावयवाऽस्मि। रोमशत्वे दृष्टान्तः। गन्धारीणामविकेव। गन्धारा (ये)

---

(१) 'ब्रह्मवादिनी परिहसन्तं स्वपतिं प्रत्याह' इति 'ग' पुस्तके वे० भाष्ये च।

(२) 'उपगम्योपश्लिष्य च' इति निरुक्तभाष्यवृत्तौ दुर्गाचार्याः 'द्वितीय उपशब्दः पादपूरणः' इति वे० भा०।

(३) 'अत्यन्तमान्तरं स्पृश। परामर्शाभावशङ्कां निवारय' इति 'ग' पुस्तके, वेदभाष्ये च।

देशाः तेषां सम्बन्धिन्यविजातिरिव तद्देशस्था अवयो(१)मेषाः यथा रोमशाः तथाहमस्मि। यद्वा यथा गन्धारीणां गर्भधारिणीनां स्त्रीणाम् अविका अत्यर्थं तर्पयन्ती योनिरिव तासाम् आप्रसवं रोमादिविकर्त्तनस्य शास्त्रनिषिद्धत्वात्। योनिः रोमशा भवति। यतोऽहमीदृशी अतो माम् अप्रौढां मा बुध्यस्वेत्यर्थः।

सामगृह्ये—'नाजातलोम्न्योपहासमिच्छेद्'। इति—

तथा कर्मप्रदीपे—'अजातव्यञ्जनाऽलोम्नी न तया सह संविशेद्'। इति।

अग्निराराध्य इत्यर्थं आह—

धीमद्भिरग्निराराध्यो यं विना न सुखी भवेत्।
मुक्तो दीर्घतमाः शापादग्निना हि बृहस्पतेः॥५३॥

धीमद्भिः बुद्धिमद्भिः विप्रैः अग्निः आराध्यः यमग्निं विना विप्रो न सुखी भवेत्। ब्राह्मणस्याग्नेः सुखं भवतीत्यर्थः। हि यस्माद्दीर्घतमा ऋषिः बृहस्पतेः शापादग्निना मोचितः। अग्नेः सुखी बभूवेत्यर्थः।

तद्दर्शनायेतिहासः। उचथ्यबृहस्पतिनामानौ द्वावृषी आस्ताम्। तत्रोचथ्यस्य ममता नाम भार्या सा च गर्भिणी। तां बृहस्पतिर्गृहीत्वाऽरमयत् शुक्रनिर्गमनावसरे प्राप्ते गर्भस्थं रेतः प्रावादीत्। हे मुने रेतो मा त्याक्षीः। पूर्वमहं संवसामि रेतः सङ्करं(२) मा कार्षीरिति। एवमुक्तो बृहस्पतिः बलात् प्रतिरुद्धरेतस्कः(३) सन् शशाप। हे गर्भ त्वं यतो रेतोरोधमकरोः(४) अतस्त्वं दीर्घं तमः प्राप्नुहि। जात्यन्धो भवेति। एवं शापतो (शप्तो) ममतायां दीर्घतमा अजायतेति। स चोत्पन्नस्तमोऽव्ययाय(५)अग्निमस्तौषीत्। स च स्तुत्या प्रीतः आन्ध्यं पर्यहरदिति।

---

(१) 'विशेषतो रोमशाः' इति 'ग' पुस्तके।
(२) 'रेतःसेकं मा कार्षीः' इति 'ग' पुस्तके।
(३) 'प्रतिरुद्धरेतस्त्वात्तं च शशाप' इति 'ग' पुस्तके।
(४) 'रेतोनिरोधमकरोः' इति वे० भा० 'रेतोरोधनमकरोः' इति 'ग' पुस्तके।
(५) 'तमोऽव्यथया' इति वे० भा०।

तथाऽनुक्रमणीवृत्तौ षड्गुरुशिष्यः ( ऋ० ६, सूक्त ९२ )—

(१) इति हासो हेतुभूतो विस्प ष्ठार्थे (२) प्रवर्ण्यते ॥ १ ॥

प्रजापतेः पुत्र आसीदङ्गिरा नाम वै मुनिः ।

तस्य पुत्रास्त्रयस्त्वासंस्त्रेताग्निसमतेजसः ॥ २ ॥

उचथ्यो ज्येष्ठ इत्येव मध्यमस्तु बृहस्पतिः ।

संवर्तस्तु कनिष्ठोऽथ ज्येष्ठो गुणगणैर्विभुः (३) ॥ ३ ॥

( यः संवर्तो मत (४) इति प्रथितो भारते भृशम् ) ।

उचथ्यभार्या ममता नाम्नासीद् (५) वरवर्णिनी ॥ ४ ॥

उचथ्याहितगर्भां तां चकमेऽथ बृहस्पतिः ।

उचथ्यपुत्रो ममतागर्भस्थोऽब्रोचदुत्तरम् ॥ ५ ॥

ज्येष्ठपत्नीं मातृकल्पां (६) मैनां (७) गन्तुं मनः कृथाः ।

( अहो कामस्य (८) दौरात्म्यं यदि मां त्वमिहागतः ॥ ६ ॥

किंचाहमत्र प्रविष्टः क्व ते गर्भो निधीयताम् ) ।

अमोघरेतास्त्वं चासि न द्वयोरिह सम्भवः ॥ ७ ॥

( द्वितीय (९) स्तात मा मैवमकार्यं च कृथाः महत ।

इति गर्भवचः श्रुत्वा शशापैवं ( नं ) बृहस्पतिः ) ॥ ८ ॥

---

( १ ) अस्य पूर्वार्धन्तु ॥ 'सुहोत्रादिमहर्षीणां पौत्रत्वस्य विकल्पनात्' । इति । ।

( २ ) 'विस्पष्टाय' इत्यपि 'क' पुस्तके ।

( ३ ) 'भुँवि' इत्यपि ।

( ४ ) अयं पादोऽनुक्रमणीत उद्धृतः ।

( ५ ) 'वंशवर्धिनी' इति 'क' पुस्तके ।

( ६ ) 'मातृतुल्यां' इति वे० दी० ।

( ७ ) 'नैनां' इति 'क' पुस्तके ।

( ८ ) अयं तथाऽनन्तरतनोऽपि सर्वानुक्रमणीत एवोद्धृतौ ।

( ९ ) पङ्क्तिरियं हस्तलिखितपुस्तकेषु नास्ति । अनुक्रमणीत उद्धृता ।

दीर्घं तमस्त्वं प्रविश मद्वाक्यादन्ध एव च ।
ततो दीर्घतमा नाम ह्युचथ्यतनयो(१)ऽभवद् ॥ ९ ॥ इति

तथा बृहद्देवता ( अ० ४, श्लो० ११-१९ )—

द्वावुचथ्यबृहस्पती ऋषिपुत्रौ बभूवतुः ।
आसीदुचथ्यभार्या तु ममता नाम भार्गवी ॥ ११ ॥
तां कनीयान् (२) बृहस्पतिर्मैथुनायोपचक्रमे ।
शुक्रस्योत्सर्गकाले तु गर्भस्तं प्रत्यभाषत (३) ॥ १२ ॥
इहास्मि पूर्वसम्भूतो न कार्यः शुक्रसङ्करः ।
तं शुक्रप्रतिषेधं (४) तु न ममर्ष बृहस्पतिः (५) ॥१३॥
स व्याजहार गर्भं तं तमस्ते दीर्घमस्त्विति ।
स च दीर्घतमा नाम बभूवर्षिरुचथ्यजः ॥ १४ ॥
स जातोऽभ्यपतद्देवानकस्मादन्धतां गतः ।
ददुर्देवास्तु तन्नेत्रे ततोऽनन्धो बभूव सः ॥ १९ ॥ इति ।

अस्मिन्नर्थे ऋक् ( ऋ० १.१४७.३ )—

**ये पायवो मामतेयन्ते अग्ने पश्यन्तो अन्धं दुरितादरक्षन् ।**
**ररक्ष तान्त्सुकृतो विश्ववेदा दिप्सन्त इद्रिपवो नाह देभुः ॥**

**ये । पायवः । मामतेयम् । ते । अग्ने । पश्यन्तः । अन्धम् । दुःऽइतात् । अरक्षन् । ररक्ष । तान् । सुऽकृतः । विश्वऽवेदाः । दिप्सन्तः । इत् । रिपवः । न । अह । देभुः ॥ ६० ॥**

---

( १ ) 'उचथ्यतनयो०' इति 'क' पुस्तके । पुराणेषु महाभारते चायं उचथ्यशब्द 'उतथ्य' इत्यपि पठ्यते ।

( २ ) 'तामब्रवीद् इति 'क' पुस्तके ।

( ३ ) 'प्रत्यषेधति' ( प्रतिषेधति ) इति 'क' पुस्तके ।

( ४ ) 'शुक्रप्रतिघातं' इति 'क' पुस्तके ।

( ५ ) 'बृहस्पतिरमर्षयत्' इति 'क' पुस्तके ।

दीर्घतमास्त्रिष्टुभा अग्निं तुष्टाव । अग्निष्टुति आग्निः अग्निमारुते याम्यतृचस्थाने "कथा ते अग्ने शुचयन्त आयोरिति तिस्रो यामीनाम्"। ( सां० श्रौ० सू०-१४-५७-१२ ) इति सूत्रे विनियोगः ।

ऋचोऽयमर्थः । हे अग्ने ते तव सम्बन्धिनो ये पायवः प्रसिद्धाः पालयितारो रश्मयः मामतेयं ममतायाः पुत्रं दीर्घतमसम् अन्धं पश्यन्तः रक्षणीयोऽस्माभिरित्यवगच्छन्तः दुरिताद् दुःखादन्धत्वा-दरक्षन्(१)। तान् रश्मीन् सुकृतः सुखकर्तॄन् विश्ववेदाः विश्वप्रज्ञोऽग्निः ररक्ष रक्षति। अस्मत्पालनायेति भावः । तैरस्मान् रक्षतीत्यर्थः(२)। एवं रक्षितानस्मान् दिप्सन्तः दम्भितुमिच्छन्तः रिपवः कामादयो नाह देभुः (३)। अहेति विनिग्रहार्थीयः ( नि० १.५ ) न खलु दम्भितुं शक्नुवन्ति । तान्त्सुकृतो—सकारोदययोः तकारमिति ( ऋ० प्रा० ४. १७ ) नकारस्य पक्षे तकारागमः । एवं धीमद्भिर-ग्निराराध्य इति सिद्धम् ।

उक्तं च—

एकाहमपि कर्मस्थो योऽग्निशुश्रूषणः शुचिः ।<br>
नयत्यत्र तदेवास्य शताहं दिवि जायते ॥ इति ॥

ब्रह्मद्वेषो न कर्तव्य इत्याह—

स दासो द्वेष्टि चात्मानं यो द्वेष्टि ब्राह्मणान् स्वयम् ।<br>
त्रैतनेन तदा स्वात्मा यदा दीर्घतमा हतः ॥५४॥

---

( १ ) 'रक्षन्ति स्म' इति 'ग' पुस्तके ।

( २ ) 'तैरस्मानपि रक्षिष्यतीत्यर्थः' इति वे० भा० ।

( ३ ) देभुः—दम्भु दम्भे । श्रन्थिग्रन्थिदम्भिस्वञ्जीनामिति ( पा० ६।४।२ वा० व्याकरणान्तरम् ) लिटः कित्वाद् अनिदिताम्० ( पा० ६।४।२४ ) इति नलोपः । तस्यासिद्धत्वादेत्वाभ्यासलोप-योरप्राप्तौ दम्भेश्च ( पा० ६।४।२४ वा० ) इति वक्तव्यमिति तौ विधीयेते ।

यः कापुरुषो ब्राह्मणान् द्वेष्टि ब्रह्मद्वेषं करोति सदा स दासकर्मकर्ता स्वयमेवात्मानं द्वेष्टि । तत्र त्रैतनदृष्टान्तेन द्रढयति । यथा त्रैतनेन दासेन यदा दीर्घतमा हतः तदा स्वयमेवात्मा हतः । अस्मिन्नर्थे आख्यानपूर्विका ऋक् । न मा गरन्नद्यो मातृतमा० ( ऋ० १. १५८. ५ ) इति ।

तत्राख्यानम्–जराजर्जरीत (१) गात्रं जात्यन्धं दीर्घतमसं मामतेयं वरीवसितुम्(२)अशक्नुवानाः स्वगृह(३) दासा अग्नौ दाहाय(४) प्रचिक्षिपुः । स प्रक्षिप्तोऽग्नौ(५)अश्विनावस्तावीत् । तौ चैनमरक्षताम् । ततोप्यम्रियमाणमुदकेषु (६) प्रापातयन् । तत्र निमग्नः पुनरश्विनौ तुष्टाव । तुष्टौ सन्तौ तौ जलादुदहार्ष्टाम् । एवमवध्यं तं त्रैतनो नाम कश्चिद्दासोऽस्य शिरोंसौ वक्षश्चाविध्यत् । ततोप्यपाल्यताम् (७) ।

तथा बृहद्देवता ( अ० ४. श्लो० २१-२४ )–

(८)जीर्णं तु दीर्घतमसं खिन्नास्तत्परिचारकाः ।
दासा अग्नौ नदीतोये दृष्टिहीनमवादधुः ॥ २१ ॥
तत्रैकस्त्रैतनो नाम शस्त्रेणैनमपाहनत् ।
शिरश्चांसावुरश्चैव स्वयमेव न्यकृन्तत ॥ २२ ॥
हत्वा दीर्घतमास्तं तु पापेन महता वृतम् ।
आत्माङ्गान्यनुदच्चैव तत्रोदोन्मोहितो भृशम् ॥ २३ ॥

---

( १ ) 'जराजर्जरित०' इति 'ग' पुस्तके ।

( २ ) 'वरिवसितुम्' इति 'ग' पुस्तके ।

( ३ ) 'स्वगर्भ०' इति 'ग' पुस्तके वे० भाष्ये च ।

( ४ ) प्रदाहाय इति वे० भा० ।

( ५ ) 'तत्र क्षितोऽग्नौ' इति 'ग' पुस्तके ।

( ६ ) 'उदके' इति 'क' 'ग' पुस्तकयोः ।

( ७ ) 'अपालयतम्' इति 'ग' पुस्तके । 'अपालयत' इति 'क' पुस्तके ।

( ८ ) श्लोका इमे पूर्वं ( पृ० १५) 'सोमानं०' ( ऋ० १।१८।१ ) इत्यृचो व्याख्याने दत्ता अवलोकयितव्याः । अतोऽत्र पुनरपि पूर्वोक्ताः पाठभेदा न प्रदर्शिताः ।

अङ्गदेशसमीपे तु तं नद्यः समुदाक्षिपन् ॥ इत्यादि ।

आततायिव्याघ्रभये ऋग्विधाने उक्तम् ( ऋग्वि० श्लो० १४१-४३ )–

आततायिनमायान्तं दृष्ट्वा व्याघ्रमथो वृकम् ।
न मा गरन्निति जपंस्तेभ्य एव प्रमुच्यते ॥ १४१ ॥
(१)त्रिरात्रोपोषितो रात्रौ जपेदासूर्यदर्शनात् ।
आप्लुत्य प्रयतः सूर्यमुपतिष्ठेद्दिवाकरम् ॥१४२॥
पश्यन्ति तस्करा नैनं तथान्ये पापबुद्धयः ।
एकः शतानि त्रायेत तस्करेभ्यश्चरन् पथि ॥१४३॥ इति ।

अत्रेयमृक् ( ऋ० १. १५८. ५. )–

**न मा गरन्नद्यो मातृतमा दासा यदीं सुसमुब्धमवाधुः । शिरो यदस्य त्रैतनो वितक्षत्स्वयं दास उरो अंसावपि ग्ध ॥**

**न । मा । गरन् । नद्यः । मातृऽतमाः । दासाः । यत् । ईम् । सुऽसमुब्धम् । अवऽअधुः । शिरः । यत् । अस्य । त्रैतनः । विऽतक्षत् । स्वयम् । दासः । उरः । अंसौ । अपि । ग्धेति ग्ध ॥ ६१ ॥**

दीर्घतमा अश्विनौ त्रिष्टुभा तुष्टाव । नद्यो नदनशीलाः मातृतमाः मातृवज्जगतां हितकारिण्यः आपः मा मां दीर्घतमसं न गरन् न गिरेयुः । निमग्नं मा कुर्युः । गॄ निगरणे लेटि व्यत्ययेन शप् । गरणप्राप्तिं दर्शयति । यत् यस्मात् (२) दासा अस्मदुपक्षपयितारो मदीयगर्भदासा(३) ईं इमं दीर्घतमसं मां सुसमुब्धं(४) सुष्ठु संकुचितसर्वाङ्गम् । अवाधुः अवाङ्मुखमपातयन् । किञ्च अस्य मम

(१) द्वाविमौ श्लोकौ ऋग्विधानस्थौ वेदभाष्येऽपि वर्तेते ।
(२) 'यदा' इति 'ग' पुस्तके ।
(३) 'मदीयदासाः' इति 'क' पुस्तके ।
(४) स्वती पूजायामिति प्रादिसमासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् इति वे० भा० ।

शिरश्चैतनः एतन्नामको दासः अत्यन्तं निर्घृणः सन् यत् यदा वितक्षत्(१)। न केवलं शिर एव अपि तु मदीयम् उरः वक्षःस्थलम् अंसौ च ग्ध हतवान्। विदारितवानित्यर्थः। हन्तेर्लुङि छान्दसमेतद्रूपम्। ततः स्वकीयमुरः अंसावपि स्वशस्त्रेणैव तथा कृतवान्। तद्युवयोर्माहात्म्यमिति भावः। सुसमुग्धमिति अन्यपूर्वै० (ऋ० प्रा० ५.२१) इति पदादित्वेन षत्वे प्राप्ते संस्पृक् स्टसर्० ( ऋ० प्रा० ५.२४ ) इति निषेधान्न॥ ५॥

धर्मपरस्यायुर्वर्धत इत्याह—

यो वै धर्मपरो नित्यं परं पापान्निवर्तयेत्(२)।
तस्यायुर्वर्धते नाऽऽपत्(३)तद्द्वयं मामतेयवत्॥५५॥

यो विप्रः नित्यं स्वयं धर्मपरो भवति यः परमिष्टं जनं पापान्निवारयेत्। तस्य पुंसः आयुर्वर्धते। न आपद् दुःखनाशनश्च। तद् द्वयं मामतेयवत् ममतायाः पुत्रवत् दीर्घतमस इव भवति। यथा दीर्घतमसा महाव्रताहः(४)कृतः। तस्माद् यज्ञधर्मपरो जातः। तथा ब्राह्मणे—'तद्धैतदहरिन्द्रोऽङ्गिरसे' प्रोवाचाङ्गिरा दीर्घतमसे ( सां० आ० २।१७ ) इति। तेन बृहस्पतिः ज्येष्ठभ्रातृभार्यासंभोगजात् पापान्निवारितः। तस्मात्तस्य द्वयमभूत्। दीर्घायुष्ट्वं ब्राह्मणे उक्तम् ( सां० आ० २।१७ ) 'तत उत दीर्घतमा दशपुरुषायुषाणि जिजीवेति'। न मा गरन्नित्यापन्मोक्षणं निगदितम् ( ऋ० १.१९८.५ ) तस्माद्धर्मपरस्य परपापनिवारकस्यापन्नाशो भवति दीर्घायुष्ट्वञ्च भवतीति सिद्धम्।

अस्मिन्नर्थे ऋक् ( ऋ० १.१९८.६ )

दी॒र्घत॑मा मामते॒यो जु॑जु॒र्वान्द॑श॒मे यु॒गे
अ॒पाम॑र्थं॑ य॒तीनां॑ ब्र॒ह्मा भ॑वति॒ सार॑थिः॥

---

( १ ) विविधं तष्टवान्। तस्मात् स दासः स्वयं स्वकीयमेव शिरः ततत्तु इति 'ग' पुस्तके वेदभाष्ये च।

( २ ) 'निवारयेत्' इति 'ग' पुस्तके।

( ३ ) 'तावत्' इति 'क' पुस्तके।

( ४ ) रात्राह्नाहः पुंसि ( पा० २।४।२९ ) इति पुंस्त्वम्।

दीर्घऽतमाः । मामतेयः । जुजुर्वान् । दशमे । युगे । अपाम् । अर्थम् । यतीनाम् । ब्रह्मा । भवति । सारथिः ॥ ६२ ॥

दीर्घतमास्त्वात्मानमनुष्टुभा ऽश्विनोर्महानुभावत्वं ब्रवीति । तथा ब्राह्मणम् । "तद्वेतदृषिराह दीर्घतमा मामतेयो जुजुर्वान् दशमे युगे इति तदेतदायुष्कामस्य शस्त्रमिति" । ( सां० आ० २।१७ )

अयमर्थः । दीर्घतमा एतन्नामा ऋषिः (१) स च मामतेयः ममतायाः पुत्रः । दशमे युगे दश(२)युगपर्यन्तं महानुभावयोरश्विनोः प्रसादात् पूर्वोक्ताद् दुःखाद्विमुक्तः अत्यन्तं सुखी स्वपुत्रभार्यादिभिः सहितः जीवितवान् । दशमे युगेऽतीते सति जुजुर्वान् जीर्णः वलीपलितगात्रो बभूव । एवंभूतः सन् अपाम् अपसां कर्मणाम् अर्थं प्रयोजनं यतीनां प्राप्नुवन्तीनां तासां प्रजानां (३) ( ब्रह्मा ब्रह्मसदृशः परिवृढो(४) भवति ) किञ्च सारथिस्तन्निर्वाहको भवति देवो भवतीत्यर्थः ।

साधूनां सम्पदुपकारायेत्याह—

उपकाराय साधूनामृभूणामिव सम्पदः ।
हरिस्यन्दनगोसम्पदिन्द्राश्विगुरुणेऽभवत् ॥५६॥

साधूनां सतां सम्पदः ऋभुर्विभ्वावाजानां सुधन्वनस्त्रयाणां पुत्राणामिवोपकाराय भवति । यथा ऋभूणां हरिस्यन्दनगोसम्पत् हरी स्यन्दनं गौश्च हरिस्यन्दनगावः तासां सम्पद् । इन्द्राश्विगुरुणे इन्द्रश्चाश्विनौ च गुरुश्च इन्द्राश्विगुरु तस्मै इन्द्राश्विगुरुणे । सर्वो द्वन्द्वो विभाषा एकवदिति एकवद्भावः

---

( १ ) 'महर्षिः' इति 'ग' पुस्तके ।
( २ ) 'दशम' इति 'ग' पुस्तके ।
( ३ ) 'अर्थं पुरुषैरर्थ्यमानं कर्मफलं स्वर्गादिकं यतीनां प्राप्नुवन्तीनाम् अपाम् अप्कार्याणां प्रजानाम्' इति वे० भा० ।
( ४ ) 'परिवृद्धः' इति 'क' पुस्तके ।

( म० भाष्य पा० १।२।६३ )। यत्रैकत्वं तत्र नपुंसकमिति नपुंसकत्वम्। इकोऽचि विभक्तौ ( पा० ७।१।७३ ) इति नुमागमः । ऋभुभिस्त्रिभ्यो देवेभ्यः स्वयं निष्पादितम्। हरी नामकौ अश्वौ इन्द्राय रथोऽश्विभ्यां विरूपा गौर्बृहस्पतये तस्मात् हरिस्यन्दनगोसम्पदिन्द्राश्विगुरुणेऽभवादिति क्रमेण सिद्धम्।

अस्मिन्नर्थे ऋक् ( ऋ. १. १६१. ६ )-

**इन्द्रो हरी युयुजे अश्विना रथं बृहस्पतिर्विश्वरूपामुपाजत ।**
**ऋभुर्विभ्वा वाजो देवाँ अगच्छत स्वपसो यज्ञियं भागमैतन॥**

इन्द्रः । हरी इति । युयुजे । अश्विना । रथम् । बृहस्पतिः । विश्वऽरूपाम् । उप । आजत । ऋभुः । विऽभ्वा । वाजः । देवान् । अगच्छत । सुऽअपसः । यज्ञियम् । भागम् । ऐतन ॥ ६३ ॥

दीर्घतमा जगत्या ऋभूंस्तुष्टाव । षष्ठेऽहन्यग्निमारुते विनियुक्तम्। अयं जायत इति खण्डे कतरा पूर्वा ( ऋ० १।१८५ ) किमु श्रेष्ठ(ऋ० १।१६१) इति सूत्रितम्(सां० श्रौ० सू० १०।८।१४)।

ऋचोऽयमर्थः । इन्द्रो हरी एतन्नामकावश्वौ रथे युयुजे योजितवान्। हरी इन्द्रस्येति निघण्टुः ( १।४ )। तथाऽश्विना अश्विनौ रथं योजितवन्तौ। तथा बृहस्पतिः(१) एतन्नामको देवो विश्वरूपां नानारूपां गाम् उपाजत उपागमत् । स्वीकृतवानित्यर्थः । विश्वरूपा बृहस्पतेः इति ( नि० १।४ )। तत्र तस्मात् ऋभुर्विभ्वा वाजश्च यूयं (२) देवानिन्द्रादीनगच्छत । गत्वा च हे स्वपसः शोभनाश्वरथादिकर्मवन्तः यूयं यज्ञियं यज्ञार्हं भागं सोमरूपम् ऐतन प्राप्नुत। कर्मसामर्थ्येन हविर्भुजो भवतेत्यर्थः।

---

( १ ) बृहतो मन्त्रस्य पालयिता। इति वे० भा०
( २ ) 'त्रयो बन्धवः' इति 'ग' पुस्तके।

ऋभूणाम् अश्वादिकरणे निगमाः—

तक्षन् रथं सुवृतं विद्मनापसः ( ऋ० १।१११।१ )

अश्वः कत्वों रथं उतेह कत्वः ( ऋ० १।१६१।३ )

रथं ये चक्रुः सुवृतं नरेष्ठां०(ऋ०४।३३।८) इत्येवमादयः।

पशुयागफलं ब्रुवन्नाह—

धन्यास्ते वैष्णवा देवान् यजन्ते पशुनाऽऽमिषम् ।
शमितुर्नखहस्तस्थं देवेष्टं मक्षिकाश्रितम्(१) ॥५७॥

त एव धन्या ये पशुना निरूढाग्नीषोमीयसवनीयशूलगवादिना देवान् द्योतमानान् इन्द्रादीन् यजन्ते तर्पयन्ति । कुतः । त्रिभिर्ऋणैर्ऋणवान् जायते देवेज्यया देवानामनृणा भवन्तीति धन्यत्वम् । ब्राह्मणे तथोक्तम् । 'तद्यदुपवसथेऽग्नीषोमीयं पशुमालभते । आत्मनिष्क्रयणो हैवास्यैष ते वात्मानं निष्क्रीणीयानृणो भूत्वाऽथ यजते' इत्यनृणत्वमुक्तम् ( कौ० ब्रा० १०।३ ) । त एव वैष्णवा विष्णुरूपेऽग्नौ जुह्वतीति वैष्णवाः । विष्णुरग्निरित्युक्तत्वात् । अत एव वैष्णवाः देवाः पशुना कथं हृष्टा भवन्तीत्याह—'अथ मनोतामन्वाह सर्वा ह वै देवताः पशुमालभमानमुपगच्छन्ते मम नाम ग्रहीष्यतीति' ब्राह्मणमुक्तम् ( कौ० ब्रा० १०।६ ) । एवं सति यदि शमितुः विशसनकर्तुः नखस्थं हस्तस्थश्च मक्षिकाभिराश्रितं यदामिषञ्च तद्देवेष्टं भवति । तर्हि सुसंस्कृतामिषस्य का कथा ॥

अस्मिन्नर्थे दैर्घतमसी अश्वस्तुतौ त्रिष्टुब् ऋक् । (ऋ.१.१६२.९.)

यदश्वस्य क्रविषो मक्षिकाश यद्वा स्वरौ स्वधितौ रिप्तमस्ति ।
यद्धस्तयोः शमितुर्यन्नखेषु सर्वा ता ते अपि देवेष्वस्तु ॥

यत् । अश्वस्य । क्रविषः । मक्षिका । आश । यत् ।

---

( १ ) 'मक्तिकाशितम्' इति 'ग' पुस्तके । अयमेव पाठो मन्त्रमनुसरति ।

वा । स्वरौ । स्वऽधितौ । रिप्तम् । अस्ति । यत् । हस्तयोः । शमितुः । यत् । नखेषु । सर्वा । ता । ते । अपि । देवेषु । अस्तु ॥ ६४ ॥

अश्वमेधे अध्रिगो शमीध्वमिति परिशिष्य 'मा नो मित्र' इति ( ऋ० १।१६२ ) विनियुक्तम् ( सां० श्रौ० सू० १६।३।२२ ) । ऋचांऽयमर्थः । अश्वस्य तदवयवभूतस्य क्रविषः आममांसस्य यदङ्गं मक्षिका आश अभक्षयत् । अश भोजने । यद्वा कर्मणि षष्ठी । अश्वस्य यन्मांसं भक्षयति वा । अथवा स्वरौ पश्वञ्जनकाले यद् रिप्तं लिप्तं अस्ति । स्वरुणा पशुमनक्तीति श्रुतेः ( तै० सं० ६।३।७।१ ) अथवा स्वधितौ छेदनकाले (१) अवदानकाले यल्लिप्तमस्ति शमितुर्हस्तयोः यच्च विशसनकाले तस्य नखेषु लिप्तमस्ति ता सर्वा तानि सर्वाणि हे अश्व तव सम्बन्धीनि देवेष्वस्तु देवसन्तोषणार्थाय भवन्तु । अश्व इत्युपलक्षणम् । सर्वेषु पशुष्वेव सन्तोषाय ( २ ) भवन्तु इत्यर्थः ।

धर्मे विलम्बो न कर्त्तव्य इत्याह—

विलम्बं नाचरेद्धर्मे चलं चित्तं विनश्यति ।
इन्द्रेणागस्त्यसंवाद एष धर्म उदाहृतः ॥५८॥

प्राज्ञः पुमान् धर्मे कर्त्तव्ये विलम्बं कालविलम्बं नाचरेत् न कुर्यात् । यस्माच्चलं चित्तं चलमस्थिरं निमेषाद्विनश्यति । तत्कथं ज्ञायते । इन्द्रदृष्टान्तेन द्रढयति । इन्द्रेण परमैश्वर्येणागस्त्यसंवादे सूक्तेन नूनमित्यस्मिन्नेष धर्म उदाहृतः । तत्रानुक्रमणी (ऋ० १.१७०) "न नूनं पञ्चागस्त्येनैन्द्रे हविषि मरुतामुद्यत इन्द्रागस्त्ययोः संवाद ऐन्द्रस्तत्राद्या " इति । तथाह यास्कः—" अगस्त्य इन्द्राय हविर्निरूप्य मरुद्भ्यः सम्प्रादित्सांचकार । स इन्द्र एत्य परिदेवयांचक्रे इति ( नि० १.५ ) परिदेवना नाम मन्युपूर्वको विलापः ।

---

( १ ) छेदकालेऽवदानकाले च इति 'क' पुस्तके।
( २ ) 'सन्तोषार्थाय' इत्यपि ।

तथा बृहद्देवता ( अ० ४-श्लो० ४९-५३ )-

निरूप्य यद्धविश्चेन्द्रं मरुद्भयो दातुमिच्छतः (१) ॥४९॥
विज्ञायावेक्ष्य तद्भावमिन्द्रो नेति तमब्रवीत् (२) ।
न श्वो नाद्यतनं ह्यस्ति वेद कस्तद्यदद्भुतम् ॥ ५० ॥
कस्याचित्त्वर्थसंचारे चित्तमेव विनश्यति ।
किं न इत्यब्रवीदिन्द्रमगस्त्यो भ्रातरस्तव ॥ ५१ ॥
मरुद्भिः सम्प्रकल्पस्व वधीर्मा नः शतक्रतो ।
किं नो भ्रातरिति (३) त्वस्यामिन्द्रो मान्यमुपालभत् ॥ ५२ ॥
अगस्त्यस्त्वरामित्यस्यां क्षुब्धमिन्द्रं प्रशामयत् (४) ।
प्रादात्संवननं कृत्वा तेभ्य एव च तद्धविः ॥ ५३ ॥ इति

बृहत्या इन्द्रोऽगस्त्यं तुष्टाव । तत्र ऋक् ( ऋ० १.१७०.१ )-

**न नूनमस्ति नो श्वः कस्तद्वेद यदद्भुतम् ।**
**अन्यस्य चित्तमभिसंचरेण्यमुताधीतं विनश्यति ॥**

**न । नूनम् । अस्ति । नो इति । श्वः । कः । तत् । वेद । यत् । अद्भुतम् । अन्यस्य । चित्तम् । अभि । सम्ऽचरेण्यम् । उत । आऽधीतम् । वि । नश्यति ॥ ६५ ॥**

परिदेवनाप्रकारः प्रतिपाद्यते । (इन्द्र आह) अद्यतनं (५) यदस्ति तन्नूनमद्य नास्ति । नूनमिति विचिकित्सार्थीयः ( नि० १।५।१२ ) विचिकित्सा नाम विवेकपूर्वोऽवधारणाभिप्रायः । अत्राद्येति यद्यपि नास्ति तथाप्युत्तरपदे श्वरिति निर्देशादद्येति गम्यते । तथा श्वोऽपि नूनं नो श्वस्तनमपि नैवास्ति । अद्य यथा अस्मभ्यं

( १ ) निरुप्तं तद्धविश्चैन्द्रं मरुद्भयो दातुमिच्छति इति मु० बृ० ।
( २ ) 'ततोऽब्रवीत्' इति 'क' पुस्तके ।
( ३ ) किंनो भ्रातरित्येतस्यामिन्द्रोऽगस्त्यमुपालभत् इति 'क' पुस्तके ।
( ४ ) अगस्त्यस्त्वरमत्प्रीत्या क्रुद्धमिन्द्रं प्रसाधयन् । इति 'क' पुस्तके ।
( ५ ) अस्या ऋचो व्याख्यानं निरुक्ते ( १।६ ) द्रष्टव्यम् ।

निरूपसमदर्थं नास्ति किल श्वः कथं लप्स्यत इति भावः। यदद्भुतम् अन्यस्मै निरूप्य अन्यस्मै दत्तमिति यदस्ति वैपरीत्यं तद् को वेद। यद्वा यदद्भुतं अभूतं भाविकार्यं यदस्ति तद् को वेद। अनेन श्वो लप्स्यत इत्याशा न कार्येत्युक्तं भवति। तदेवाह– अभिसंचरेण्यं सर्वतः सञ्चारि अन्यस्य चित्तं मानसं को जानातीति शेषः। उतापि च आधीतं आध्यातं चिरकालं चिन्तितमपि विनश्यति किमु सकृत्स्मृतं नश्यतीति धर्मे विलम्बो न कर्तव्य इत्युक्तं भवति।

तथोक्तमन्यत्र—

श्वः कार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम्।
न हि प्रतीक्षते मृत्युः कृतं वा यदि वाऽकृतम्॥ १॥
इदमद्य त्विदं श्वोऽपि नैतन्मर्त्यस्य युज्यते।
अवश्यंभाविना श्वोऽपि (श्वो वा) नैतस्मिन्भविता भवान्॥२॥
यस्य स्यान्मृत्युना सख्यं येन पीतमुतामृतम्।
तेनेदं युज्यते वक्तुमिदं मे श्वो भविष्यति॥ ३॥
आदानं च प्रदानं च कर्त्तव्यस्य च कर्मणः।
क्षिप्रमक्रियमाणस्य कालः पिबति तद्रसम्॥ ४॥ इत्यादि।

कुलजापि भोगतो हीना निर्लज्जा भवेदित्यर्थ आह—

**कुलजापि सती हीना निर्लज्जा भोगतो भवेत्।**
**लोपामुद्राऽलपत्कान्तं भोगाय ब्रह्मचारिणम्॥ ५९॥**

या भोगतो हीना सा कुलजापि सती अपि निर्लज्जा भवेत्। लोपामुद्रेव। यथा लोपामुद्रा कुलजा सती भोगतः निर्लज्जा भूत्वा कान्तं स्वपतिम् अगस्त्यं भोगायालपत् विललाप। कीदृशं पतिम्। ब्रह्मचारिणं ब्रह्मचर्यमास्थितम्।

एतदर्थे ऋक्–(ऋ. १. १७९. १)

**पूर्वीरहं शरदः शश्रमाणा दोषावस्तोरुषसो जरयन्तीः।**
**मिनाति श्रियं जरिमा तनूनामप्यू नु पत्नीर्वृषणो जगम्युः॥**

पूर्वीः । अहम् । शरदः । शश्रमाणा । दोषाः । वस्तोः । उषसः । जरयन्तीः । मिनाति । श्रियम् । जरिमा । तनूनाम् । अपि । ऊँ इति । नु । पत्नीः । वृषणः । जगम्युः ॥ ६६ ॥

पूर्वीरहमित्यनेनानयोर्दम्पत्योः भोगार्थं संवादः । तथानुक्रमणी (ऋ० १।१७९)–"पूर्वीः षड् जायापत्योर्लोपामुद्राया अगस्त्यस्य च द्वृचाभ्यां रत्यर्थं संवादं०" इति

तथा बृहद्देवता ( अ० ४ श्लो० ५७-६० )—

अगस्त्यस्य ऋषेर्भार्या लोपामुद्रा यशस्विनी । (१)
उपजल्पितुमारेभे रहः सम्भोगकाम्यया ॥ ५७ ॥
द्वाभ्यां सा त्वब्रवीदृग्भ्यां पूर्वीरिति चिकीर्षितम् ।
रिरंसुस्तामथागस्त्य उत्तराभ्यामतोषयत् ॥ ५८ ॥
विदित्वा तपसा सर्वं तयोर्भावं रिरंसतोः (२) ।
न त्वेनः (३) कृतवानस्मि ब्रह्मचार्युत्तमे जगौ ॥ ५९ ॥
प्रशस्य तं (४) परिष्वज्य गुरू मूर्ध्न्यवजिघ्रतुः (५) ।
स्मित्वैनमाहतुश्चोभावनागा असि पुत्रक ॥ ६० ॥ इति ।

द्वाभ्यां पूर्वं लोपामुद्रा ततो द्वाभ्यामगस्त्यः । ततो द्वाभ्यां ब्रह्मचार्यन्तेवासी । एवं त्रय ऋषयः । सर्वत्र रतिर्देवता । त्रैष्टुभम् । उपान्त्या बृहती ।

---

(१) 'ऋतौ स्नातामृषिर्भार्यां लोपामुद्रां यशस्विनीम्' इति मुग्धानलपुस्तके । 'अगस्त्यस्तामृषिर्भार्यां लोपामुद्रां पयस्विनीम्' इति 'क' पुस्तके ।

(२) 'चिकीर्षतोः' इति 'ख' पुस्तके ।

(३) 'श्रुत्वैनः' इति मुग्धानलः । 'नत्वेतत्' इति 'क' 'ख' पुस्तकयोः ।

(४) 'अशंसतां' इति 'क' 'ग' पुस्तकयोः ।

(५) 'अभिजिघ्रतुः' इति 'क' 'ग' पुस्तकयोः ।

लोपामुद्राऽऽह—हे अगस्त्य अहं लोपामुद्रा पूर्वीः शरदः पुरातनान् असंख्यातान् संवत्सरान् दोषाः रात्रीः वस्तोः अहानि उषसः उषःकालांश्च तथा देहं जरयन्तीः । सर्वत्रात्यन्तसंयोगे द्वितीया । अद्यतनकालपर्यन्तं वहुसंवत्सरं कार्त्स्न्येन त्वच्छुश्रूषया शश्रमाणा श्रान्ताऽभूवम् । इदानीं तु जरिमा जरा तनूनामङ्गानां श्रियं सौन्दर्यमिनाति हिनस्ति । एवमपि नानुगृह्णासीत्यर्थः । अप्यूनु । अपीति संभावनायाम् । उ इत्यवधारणे । नु इति वितर्के । इदानीमपि किं सम्भावनीयम् । लोके हि पत्नीः स्वपत्नीः वृषणः सेक्तारः पुरुषाः जगम्युः गच्छेयुः सम्भोगं कुर्युः । अतो मां किमित्यवमन्यसे इदानीमपि वा संभावयेत्यर्थः । संरुद्धप्रजननस्य ब्रह्मचारिण इत्यृषिपुत्र्या विलपितं वेदयन्ते इति यास्कः ( नि० ५।२ ) । अप्यूनु—नु वा प्लुतमिति दीर्घः (१) । एवं निर्लज्जा भोगतो हीना भवेदित्युक्तम् ।

पणिर्जीवन्मृत (२) इत्याह—

मृत आत्मम्भरिर्जीवन् यः कश्चिदहविः पणिः ।
अगस्त्योक्तादभैषज्याद्धरतोऽस्याश्विनावसून् ॥६०॥

यः कश्चिद् अहविः न विद्यते यजनाय हविर्यस्यासौ अहविः । पणिः वणिक् वार्द्धुषिकः । तत्कृत्वा देवेभ्योऽदत्त्वा आत्मंभरिः केवलं स्वात्मानं भरति फलेग्रहिरात्मंभरिश्च ( पा० ३. २. २६ ) इति निपातः । स जीवन् मृतो भवति । कुतः । अगस्त्योक्तत्वात् । अगस्त्येन ऋषिणा किमत्र दस्रेत्यश्विनौ देवभिषजावेवमुक्तौ । तस्मादगस्त्योक्तात्पणौ अभैषज्यं कृत्वा अस्य पणेः अश्विनौ प्राणान्हरतः ।

---

( १ ) ऋक्प्रातिशाख्ये प्लुतविधायकं सूत्रमत्रैवं दृश्यते 'सुन्वित्यनर्थपरयोरुकारः पदम्:' ( ऋ० प्रा० ७।१७ ) इति ।

( २ ) 'ग' पुस्तकेऽवतरणिकेयं त्वेवम्-'केवलमात्मम्भरिर्जीवन्नपि मृत एवेत्यकार्यमपि कृत्वा देयमत्रार्थे आह' इति ।

अस्मिन्नर्थे ऋक् ( ऋ० १. १८२. ३ )–

किमत्र॑ द॒स्रा कृ॑णुथ॒: किमा॑साथे॒ जनो॒ य: कश्चि॒दह॑वि॒र्म॒ही॒यते॑।
अति॑क्रमिष्टं जु॒रतं॑ प॒णेरसुं॒ ज्योति॒र्विप्रा॑य कृणु॒तं व॒च॒स्यवे॑ ॥

किम् । अत्र॑ । द॒स्रा॒ । कृ॒णु॒थ॒: । किम् । आ॒सा॒थे॒ इति॑ । जन॑: । य: । क: । चि॒त् । अह॑वि: । म॒ही॒यते॑ । अति॑ । क्र॒मि॒ष्ट॒म् । जु॒रत॑म् । प॒णे: । असु॑म् । ज्योति॑: । विप्रा॑य । कृ॒णु॒तम् । व॒च॒स्यवे॑ ॥ ६७ ॥

अस्या जगत्या अयमर्थः । हे दस्रा दर्शनीयावश्विनौ । अन्नं दुहन्तौ मनुष्याय दर्शनीयाविति यास्कः ( नि० ६।२६ )। युवां यः कश्चिज्जनः अहविः यज्ञार्थं हविर्यस्य नास्ति स । महीयते स्वात्मानं पूज्यते मह पूजायां ( न युष्मान् पूजयति ) स आत्मंभरिः । ततः तं जनम् अतिक्रामिष्टं अतिक्रम्य (१) तिष्ठतम् । अत्रास्मिन्न-हविष्के जने युवां किं कृणुथः । किं कुरुथः । हविषामभावात्तत्रैव किमासाथे किमुपविशथः । तमतिक्रम्य तिष्ठतमिति । न केवलमति-क्रमणमात्रं किन्तु पणेर्वाणिग्भूतस्य लुब्धकस्य अयष्टुरस्यासुं प्राणं जुरतं अहिंसिष्टम् । अनीनशतम् । मिनोति जूर्वति धमतीति पाठात् ( निघण्टु ३।१० तथा २।१४ )। विप्राय मेधाविने । विप्रः विग्रः इति ( निघण्टु ३।१६ ) तन्नामसु पाठात् । वचस्यवे यः युष्मत्-स्तुतिरूपं वचः आत्मनः इच्छति स वचस्युः तस्मै मह्यं ज्योतिर्महत्तेजः कृणुतं कुरुतम् (२)। महीयते निपातैर्यद्यदीति निषेधात् ( पा० ८।१।३० ) महच्छब्दादनिघातः । जुरतमिति तिङ्परत्वाच्च न । ( पा० ८।१।२८ ) तथा भगवतोक्तम्–

---

( १ ) 'पराभूय' इति वे० भा० ।

( २ ) 'युष्मज्जनविषयज्ञानं कुरुतम्' इति वे० भा० ।

कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् ।
तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥
एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः ।
अघायुरिन्द्रियारामो मोघं पार्थ स जीवति । (भ.गी. ३।१५-१६)

इति पणिर्जीवन्मृत इति सिद्धम्

शूराणां कीर्त्तिरेवायुधमित्यर्थं आह--

कीर्त्तिरेव हि शूराणां शत्रौ भ्रमति चायुधम् ।
धुनिश्च चुमुरिः सुप्तौ शक्रस्य गुणकीर्तनात् ॥६१॥

शूराणां सुभटानां कीर्त्तिः शौर्योत्पन्नं यश एवायुधं चक्रं शत्रौ वैरिणो मस्तके भ्रमति भ्रमणं करोति । दृष्टान्तमाह—यदा सजनीयेन सूक्तेन गृत्समदेन इन्द्रकीर्तिर्निगादिता तां कीर्त्तिं वज्रसमां श्रुत्वा धुनिचुमुरि-नामानौ असुरौ इन्द्रवैरिणौ शक्रस्य गुणकीर्त्तनात् सुप्तौ सुषुपतुः । कीर्ति-रूपेण वज्रेण हतावित्यर्थः । तत्राख्यानपूर्विका ऋक् । यो जात एव प्रथमो मनस्वान् स जनास इन्द्रः ( ऋ० २.१२.१ ) इति

तत्र बृहद्देवता—(अ० ४ श्लो० ६६-६९) ।

संयुज्य (१) तपसात्मानमैन्द्रं बिभ्रन्महद्वपुः ।
अदृश्यत मुहूर्तेन दिवि च व्योम्नि चेह च ॥६६॥
तमिन्द्र इति मत्वा द्वौ (२) दैत्यौ भीमपराक्रमौ ।
धुनिश्च चुमुरिश्चोभौ सायुधावभिपेततुः ॥६७॥
विदित्वा स (३) तयोर्भावमृषिः पापं चिकीर्षतोः ।
यो जात (ऋ० २.१२) इति सूक्तेन कर्माण्यैन्द्राण्यकीर्त्तयत् ॥६८॥

---

( १ ) 'संयोज्य' इति 'ग' पुस्तके ।
( २ ) तौ इति 'ग' पुस्तके, 'तु' इति मु० बृ० ।
( ३ ) 'तु' इति 'ग' पुस्तके ।

उक्तेषु कर्मस्वैन्द्रेषु भीतौ सुषुपतुस्तदा (१)।
इदमन्तरमिति ज्ञात्वा तात्रिन्द्रोऽथ न्यबर्हयत् (२)॥६९॥

अत्रार्थे मन्त्राः।

**सस्तो धुनी चुमुरी या ह सिष्वप् (ऋ०६.२०.१३)।**
**त्वं नि दस्युं चुमुरिं धुनिञ्चा० (ऋ० ७.१९.४)।**
**इन्द्रो धुनिञ्च चुमुरिञ्च दम्भयन्० (ऋ०१०.११३.९)**
**स्वप्नेनाभ्युप्या चुमुरिं धुनिञ्च० (ऋ० २.१५.९)**

इत्येवमादयः। अपरे आहुः—पुरा किल इन्द्रादयो वैन्ययज्ञं समाजग्मुः। गृत्समदोऽपि तत्रागत्य सदस्य आसीत्(३)। दैत्याश्चेन्द्रजिघांसया तत्र समागमन्। तान् दृष्ट्वा निर्जगामेन्द्रो यज्ञाद् गृत्समदाकृतिः। स च गृत्समदो वैन्येन-पूजितो (४) यज्ञवाटान्निरगच्छत्। निर्गच्छन्तं तं (५) दृष्ट्वा अयमेवेन्द्र इति मन्यमानास्तमसुराः परिवव्रुः। नाहमिन्द्रस्तुच्छः किन्त्वेवंगुणोपेतः स इत्यनेन सूक्तेन तान्प्रत्युवाच॥

अपरे त्वेवं कथयन्ति—गृत्समदस्य (६) यज्ञे प्रविष्टमेकाकिनमिन्द्रं ज्ञात्वा असुराः परिवव्रुः। स इन्द्र गृत्समदरूपेण यज्ञवाटान्निर्गत्य स्वर्गं जगाम। ततः असुरा इन्द्रो विलम्बित इत्यन्तः प्रविश्य गृत्समदं दृष्ट्वा पूर्वमेव गृत्समदो गतः अयं त्विन्द्रोऽस्मद्भयाद् गृत्समदरूपेणास्त इति तं जगृहुः। स तानाह (७)अयमिन्द्रोऽयमिन्द्र इति एतेन सूक्तेन तुष्टाव। अयमेवार्थो महाभारते प्रपञ्चितः (म० भा० अनु० पर्व ८।५९; ४९।१९॥)

---

(१) भीस्तावाशु विवेश ह इति मु० बृ०।

(२) इदमन्तरमित्युक्त्वा ताविन्द्रस्तु निबर्हयत् इति मु० बृ०। 'इतीदमन्तरमिति' इति 'ग' पुस्तके। 'न्यवर्त्तयत्' इति 'क' पुस्तके।

(३) 'सदस्यासीद्' इति वे० भा०।

(४) वैन्यपूजितोऽथ इति 'क' पुस्तके।

(५) 'निर्गच्छन्तमृषिं दृष्ट्वा इति 'क' पुस्तके।

(६) 'गृत्समदयज्ञे प्रविष्टम्'।

(७) 'स तान्नाहमिन्द्रोऽयमित्यनेन' इति वे० भा०।

तस्मादेतत्सूक्तमिन्द्रशरीररूपं तृतीयेऽहनि ब्राह्मणे विनियुक्तम् । ( कौ० ब्रा० २२।४ ) "यो जात एव प्रथमो मनस्वानित्येतस्मिंस्त्रैष्टुभे निविदं दधाति तदेतदिन्द्रतनूः सूक्तम्" (१) इति । 'अहं भुवं यो जात इति निष्केवल्यम्' ( सां० श्रौ० सू० १०।४।११ ) ब्राह्मणसूत्रयोर्महाव्रते । 'या त ऊतीयं च सजनीयश्च' इति ( सां० आ० २।१६ ) (२) तथा ( सां० श्रौ० सू० १८।१९।३-४ ) । ऋग्विधाने—यो जात इति सूक्तं तु ऋषिं गृत्समदं स्मरन्निति (३) ( श्लो० १५९ )

गृत्समदस्त्रिष्टुभा असुरान्प्रति अस्तौदिन्द्रम् । तत्र ऋक् (ऋ०२.१२.१)—

**यो जात एव प्रथमो मनस्वान्देवो देवान्क्रतुना पर्यभूषत् ।**
**यस्य शुष्माद्रोदसी अभ्यसेतां नृम्णस्य मह्ना स जनास इन्द्रः ॥**

**यः । जातः । एव । प्रथमः । मनस्वान् । देवः । देवान् । क्रतुना । परिऽअभूषत् । यस्य । शुष्मात् । रोदसी इति । अभ्यसेताम् । नृम्णस्य । मह्ना । सः । जनासः । इन्द्रः ॥ ६८ ॥**

---

( १ ) अग्रे च-"एतस्मिन् ह गृत्समदो वाभ्रवो निविदं दधदिन्द्रस्य प्रियं धामोपजगाम०" इत्यादि ।

( २ ) शाङ्खायनारण्यके त्वेवं प्रोक्तमिदम्—'या त ऊतीयं च बार्हतराथन्तरबृहद्रथन्तरे हि पुरस्तात्कृते भवतः सजनीयं च' इत्यादि ( २।१६ ) ।

( ३ ) यो जात इति सूक्तेन ऋषिं गृत्समदं स्मरन् ॥
शतकृत्वो जपेदिन्द्रमिन्द्र श्रेष्ठानि चान्ततः ॥ १५९ ॥
... ... ... ... ... ... ... ... ...
प्रियो भवति चेन्द्रस्य प्रियं धाम स गच्छति ॥
रिपुघ्नं दस्युशमनं रायस्पोषकरं परम् ॥ १६२ ॥ इति ।

जनासः जनाः आज्जसेरसुक् (पा० ७।१।५०)। (हे) असुराः य इन्द्रः जात एव जायमान एव सन् प्रथमः देवानां प्रधान-भूतः। प्रथम इति मुख्य नाम (१) इति यास्कः (नि० २।२२)। मनस्वान् मनस्विनामग्रणीः (२) अस्मायामेधा० (पा० ५।२।१२१) इति विनि प्राप्ते बहुलं छन्दसीति (पा० ५।२।१२२) वतुप्। देवः द्योतमानः सन् क्रतुना वृत्रवधादिलक्षणेन स्वकीयेन कर्मणा देवान् अग्न्यादीन् सर्वान् पर्यभूषत्। भूष अलङ्कारे भ्वादि (३) लङि रूपम्। धातूनामनेकार्थत्वात्। यास्केनानेकार्था उक्ताः (नि० १०।१०) रक्ष्यत्वेन पर्यग्रहीत् (४)। यस्येन्द्रस्य शुष्माच्छरीरबलाद् रोदसी द्यावापृथिव्यौ अभ्यसेताम् अबिभीताम् भ्यस भये (५)। भ्यसते रेजत इति भयवेपनयोरिति यास्कः (नि० ३।२१)। तथा नृम्णस्य मह्ना सेनालक्षणस्य बलस्य महत्त्वेन युक्तः। स इन्द्रो नाहम् इति।

अत्र निरुक्तम् (नि० १०।१०)–यो जायमान एव प्रथमो मनस्वी देवो देवान् क्रतुना कर्मणा पर्यभवत् पर्यगृह्णात् पर्यरक्षद् अत्यक्रामदिति वा। यस्य बलाद् द्यावापृथिव्यावपि अबिभीतां नृम्णस्य मह्ना बलस्य महत्त्वेन स जनास इन्द्र (६)इति।

स जनासः–ऊष्मा परिलुप्यते त्रयाणां० (ऋ० प्रा० २।११) इत्यूष्मलोपः।

(१) 'प्रथम इति मुख्यनाम प्रतमो भवति'। इति।

(२) 'अग्रगण्यः' इति वे० भा०।

(३) 'भौवादिः' इति वे० भा०।

(४) यद्वा–सर्वानन्यान्देवान् पर्यभूषत् पर्यभवत् अत्यक्रामत्। अस्मिन्पक्षे भवतेर्व्यत्ययनेन क्सः। श्र्युकः किति (पा० ७।४।११) इतीट्-प्रतिषेधः। इति वे० भा०। 'ग' पुस्तके तु 'रक्षकत्वेन पर्यग्रहीत्' इति।

(५) अनुदात्तेत्। अभ्यसेताम् अवेपेताम् वा। तथा च मन्त्रान्तरम्–'इमे चित्तव मन्यवे वेपेते भियसा मही' (ऋ० १।८०।११) इति। वे० भा०।

(६) ऋषेर्दृष्टार्थस्य प्रीतिर्भवत्याख्यानसंयुक्तेति वे० भा०।

पारुष्यं न वक्तव्यमित्यर्थ आह—

क्षिपेद्वाक्यशरान् घोरान्न पारुष्यविषप्लुतान् ।
वाक्पारुष्यरुषा चक्र इन्द्रो वर्चिकुलक्षयम् ॥६२॥

पारुष्यमेव विषं तेन प्लुतान् प्लावितान् कृत्वा वाक्यान्येव शरास्तान् घोरान् क्रूरान् परेषु न निक्षिपेत् । परेषां पारुष्यं न वक्तव्यमित्यर्थः । वर्चिदृष्टान्तेन दृढयति । वर्चिनोऽसुरस्येन्द्रः कुलक्षयं चक्रे कृतवान् । केन । वाचो वचनस्य पारुष्यादुत्पन्नरुषा रोषेण । वर्ची कश्चिदसुरः सोऽनिशं पारुष्यवचनैरिन्द्रस्योद्वेगं चकार । एकदा स इन्द्रः तं पुत्रभृत्यादिसहितं जघानेति ।

अस्मिन्नर्थे ऋक् ( ऋ. २. १४. ६ )—

अध्वर्यवो यः शतं शम्बरस्य पुरो बिभेदाश्मनेव पूर्वीः ।
यो वर्चिनः शतमिन्द्रः सहस्रमपावपद्भरता सोममस्मै ॥

अध्वर्यवः । यः । शतम् । शम्बरस्य । पुरः । बिभेद । अश्मनाऽइव । पूर्वीः । यः । वर्चिनः । शतम् । इन्द्रः । सहस्रम् । अपऽअवपत् । भरत । सोमम् । अस्मै ॥ ६९ ॥

गृत्समदोऽध्वर्युं प्रति त्रिष्टुभा इन्द्रं तुष्टाव । "या त ऊतीयं ( च बार्हतराथन्तरबृहद्रथन्तरे हि पुरस्तात्कृते भवतः सजनीयं ) चाध्वर्यवो भरतेन्द्राय सोममिति" चेति महाव्रते विनियोगः (सां० आ० २।१६) । हे अध्वर्यवः यः इन्द्रः शम्बरस्य मायाविनः असुरस्य पूर्वीः पुरातनीः शतं पुरः पुरीः अश्मनेव अश्मसदृशेन वज्रेण बिभेद हतवान् । यश्चेन्द्रो वर्चिनः (१) असुरस्यानिष्टवक्तुः शतं सहस्रं एतत्संख्याकान् अपरिमितान् पुत्रभृत्यादिवीरान् अपावपत् युगपदेव भूम्यामपातयत् । अस्मै इन्द्राय सोमं भरत हरत । हृग्रहोर्भश्छन्दसि ( पा० ३ । १ । ८४ । वा० ) इति भत्वम् ।

---

( १ ) वर्च दीप्तौ गमेरिनिरिति विधीयमान इनिर्बहुलवचनादस्माद्भवति इति वे० भा० ।

तथा निगमाः ।

उत दासस्य वर्चिनः सहस्राणि शतावधीः।(ऋ०४.३०.१५)।

शत वर्चिनः सहस्रं च साकम् ( ऋ० ७. ९९. ५ ) ।

(१) अहन्दासा वृषभो वस्नयन्तोदव्रजे वर्चिनं शम्बरञ्च

( ऋ० ६. ४७. २१ )

इत्येवमादयः ।

भरता सोममिति मृळयद्भ्यां वसुत्रित्तमं० ( ऋ० भा० ७-१९ )

इति प्लुतिः ।

यो द्विजमपर्णं करोति स नृषु राजा इत्यर्थ आह—

जानीयात् सत्सु राजानं यतोऽपर्णो भवेद् द्विजः ।

अभूत्कूर्मः पिता वर्णाद् (२) अपर्णो राजतः सताम् ॥ ६३ ॥

सत्सु सत्पुरुषेषु मध्ये तं राजानम् ईश्वरं जानीयात् । तं कम् यतो यस्मात्. सतः सत्पुरुषात् द्विजः ब्राह्मणः अपर्णो भवेत् । अपगतऋणः स्यात् । यथा पूर्वं "कूर्मो गार्त्समदो हि वा" ( का. स. ऋ. २. २७ ) इत्युक्तत्वात् अस्य पिता वा गृत्समदः ऋणैर्बद्धः सताम् उदकानां राजतो वरुणतः अपर्णः अपगतऋणोऽभूत् । सत्पूर्णम् ( निघण्टु १. १२ ) इत्युदक नामेति । तस्मादिदानीं यो द्विजमपर्णं करोति तं सत्सु राजानं जानीयात् ।

अस्मिन्नर्थे ऋक् ( ऋ. २. २८. ९ )—

परं ऋणा सावीरध मत्कृतानि माहं राजन्नन्यकृतेन भोजम् ।

अव्युष्टा इन्नु भूयसीरुषास आ नो जीवान्वरुण तासु शाधि

परां । ऋणा । सावीः । अध । मत्ऽकृतानि । मा ।

अहम् । राजन् । अन्यऽकृतेन । भोजम् । अविऽउष्टाः ।

---

(१) अयं तृतीयनिगमोऽप्यत्रेष्यत एव ।

(२) वर्णात्=वा ऋणात् इति पदच्छेदः ।

इत् । नु । भूयसीः । उषसः । आ । नः । जीवान् । वरुण । तासु । शाधि ॥ ७० ॥

कूर्म ऋषिः तस्य पिता वा गृत्समदः ऋणविध्वंसकं वरुणं त्रिष्टुभा तुष्टाव । तथा (१) चोक्तम्—

इदमेकादशर्चन्तु वारुणं भयपापनुत् ।
ऋणदारिद्र्यदुःस्वप्ननाशनं चेति शुश्रुम ॥
इति विनियुक्तम् ।

हे वरुण राजन् ऋणा ऋणानि छान्दसो डादेशः(पा०७।१।३९)। अस्माभिर्देयानि । पूर्वं पित्रादिभिः कृतानि । परासावीः परासुव (पराचीनं प्रेरय) । षू प्रेरणे । छान्दसो लुङ् । आ इत्यर्वागर्थे । प्र परेति प्रतिलोमार्थं उक्तत्वात् (नि० १।३।७।८) । पराङ्मुखानि कुर्वित्यर्थः । दूरे प्रेरय । अध अथ( अधुना ) मत्कृतानि मया निष्पादितानि च परासावीः परा कुरु । नाशयेति यावत् । एकस्यैव परापदस्य तत्रादिवृत्त्या कर्मक्रिययोरन्वयः । अपि च हे राजन् स्वामिन् ऋणान्यपाकृत्य पश्चाद् अहं अन्यकृतेन अन्यैरर्जितेन धनेन मा भोजं भोगमालभेय । न माङ्योगे ( पा० ६।४।७४ ) इत्यडभावः । किं कारणमिति चेदुच्यते । भूयसीः भूयस्यो बहुतराः । बहोर्लोपो० ( पा० ६।४।१५८ ) इति भूरादेशः । उषासः उषसः उषःकालाः ( प्रातःकालाः ) व्युष्टाः सन्तः नु सत्येन अव्युष्टा इत् अव्युष्टा एव । अपररात्रेषूत्थायोत्थाय ऋणानि चिन्तयतो जाग्रतो मम व्युष्टा अपि अव्युष्टकल्पा आसन् । हे वरुण तासु उषःसु नः अस्मत् सम्बन्धिनो जीवान् प्राणिनः आ शाधि आसमन्तादनुशिष्टान्कुरु । शासु अनुशिष्टौ । ऋणान्यपहृत्य भोगपर्याप्तं धनं प्रयच्छेत्यर्थः । एवं वरुणेनापर्णः कृतः । तस्मादिष्टमुक्त्वा परा ऋणेति ऋक् ।

( १ ) 'अत्र केचिदाहुः' इति वे० भा० ।

पर ऋणा—ऋकार उदये कण्ठ्यावकारं० ( ऋ० प्रा० २।३२ ) इत्यकारः । सावीरिति तिङ्त्वान्निघातः ( पा० ८।१।२८ ) । उषासः इत्यत्र पादस्यैकादशिनो० ( ऋ० प्रा० ९।४२ ) । इति प्लुतिः । उषःशब्देन रात्र्येकदेशवाचकेन रात्रयो लक्ष्यन्ते । तेन तादृश्यो रात्रयो बोद्धव्याः ।

(१) इति द्याद्विवेदविरचिते नीतिमञ्जरीभाष्ये द्वितीयाष्टके नीतिवाक्यानि समाप्तानि । श्रीरस्तु ॥

इति द्वितीयाष्टकः समाप्तः ॥



(१) 'ग' पुस्तके तु ' इति ऋगर्थप्रकाशिन्यां नीतिमञ्जर्याम् ' इत्युपसंहारः ।

॥ श्रीः ॥

# अथ तृतीयाष्टकः ।

द्वितीये नीतिवाक्यानि ऋग्दृष्टान्तात्प्रदर्श्य च ।
तृतीयेऽष्टक आहाथ द्विवेदी (१) द्याह्वयो महान् ॥ १ ॥

उत्तमाधमयोः कार्य्ययोः उत्तमाधमौ दूतावित्यर्थ आह—

**उत्तमे चाधमे कार्ये दूतः स्यादुत्तमोधमः ।**
**देवदूतो बभूवाग्निर्दूतीह(२) सरमा पणीन् ॥६४॥**

उत्तमे उत्कृष्टे कार्ये कर्मणि यः उत्तमः उत्कृष्टः स दूतः स्यात् । अधमे निकृष्टे कार्येऽधमः निकृष्टो दूतः स्यात् । तत्र वेदोदाहरणेन द्रढयति । यथा पूर्वं देवदूतः देवेषु दूतः यज्ञादावुत्तमे कार्ये कर्मणि अग्निर्बभूव । अधमे कार्ये पणिभिरिन्द्रस्य गावो हृतास्तेषां वधार्थं तान् प्रति सरमा देवशुनी दूती बभूव । (३) उत्तमस्याग्नेर्दूतत्वायेयमृक् ( ऋ० ३.१७.४ )—

**अग्निं सुदीतिं सुदृशं गृणन्तो नमस्यामस्त्वेड्यं जातवेदः ।**
**त्वां दूतमरतिं हव्यवाहं देवा अकृण्वन्नमृतस्य नाभिम् ॥**

**अग्निम् । सुऽदीतिम् । सुऽदृशम् । गृणन्तः । नमस्यामः । त्वा । ईड्यम् । जातऽवेदः । त्वाम् । दूतम् । अरतिम् । हव्यऽवाहम् । देवाः । अकृण्वन् । अमृतस्य । नाभिम् ॥ ७१ ॥**

---

( १ ) 'द्विवेदीत्याह्वयो महान्' इति 'ग' पुस्तके ।
( २ ) 'दूतो हि' इति 'ग' पुस्तके ।
( ३ ) 'तत्रोत्तमस्याग्नेर्दूतत्वं दर्शयति' इति 'ग' पुस्तके ।

कतो ( वैश्वामित्रः ) त्रिष्टुभाग्निं तुष्टाव । पशुपुरोळाशस्य(१) स्त्रिष्टकृतो याज्या नियुक्ता । "अग्निं सुदीतिम्" इति याज्येति ( सां० श्रौ० सू० ८।१९।११ )

ऋचोऽयमर्थः-हे जातवेदः(२)। जातं सर्वं वेत्तीति जातवेदाः । जातानि वेदेति यास्कः ( नि० ७-२० ) । हे अग्ने त्वां गृणन्तः (३) त्वद्विषयां स्तुतिं कुर्वाणाः वयमग्निं अङ्गनादिगुणोपेतं सुदीतिं (४) शोभनदीप्तिं अत एव सुदृशं (५) सर्वैर्दर्शनीयम् ईड्यं स्तुत्यं एवं विधं त्वा त्वां नमस्यामः (६) हविर्भिः पूजयामः । किञ्च देवाः ( अस्माभिर्यजनीयाः ) इन्द्रादयो देवाः अरतिं (७) न विद्यते रतिर्विषयेषु प्रीतिर्यस्यासावरातिः । नञ्सुभ्याम् ( पा० ६।२।१७२ ) इत्युत्तरपदान्तोदात्तत्वम् । दीतिमिति च विषयेष्वप्यसक्तम् । अमृतस्य देवान्नभूतायाः सुधायाः

---

( १ ) वेदभाष्ये तु-वाजपेये वार्हस्पत्ये चरावग्निं सुदीतिमिति स्विष्टकृतो याज्या वाजपेयेनेत्यादि खण्डे सूत्रितम् अग्निं सुदीतिं सुदृशं गृणन्त इति संयाज्ये इति ( आ० श्रौ० सू० उत्तरषट्के ३।८ ) अयमाश्वलायनश्रौतसूत्रनिर्देशः सर्वत्र वेदभाष्ये दृश्यते ।

( २ ) जातस्य सर्वस्य वेदितः । इति वे० भा० ।

( ३ ) गृणातिरर्चतिकर्मा ( निघण्टु ३।१४ ) 'गृणातेः स्तुतिकर्मणः' इति यास्कः ( नि० ३।५ ) ।

( ४ ) सुदीतिम्-दीङ् क्षये । दीयते विनाश्यते आभिस्तम इति करणे क्तिन् ( पा० ३।३।९४ ) । दीतयो दीप्तयः । बहुव्रीहौ नञ्सुभ्याम् ( पा० ६।२।१७२ ) इत्युत्तरपदान्तोदात्तत्वम् ।

( ५ ) सुदृशम्-दृशिर् प्रेक्षणे । तस्माच्छक्यार्थे खल् ( पा० ३।३।१२६ ) संज्ञापूर्वको विधिरनित्य इति गुणाभावः । लिति ( पा० ६।१।१९३ ) इति प्रत्ययात्पूर्वस्योदात्तत्वम् ।

( ६ ) नमस्यामः—नमस् पूजायाम् । नमो वरिवश्चित्रङः क्यच् ( पा० ३ । १ । १९ ) इति क्यच् । तदन्ताल्लटि रूपम् पादादित्वाद-निघातः ।

( ७ ) अरतिम्-रमु क्रीडायाम् । भावे क्तिन् ।

नाभिं नाभिस्थानं त्वां हव्यवाहं हविषां वोढारं दूतं (१) देवानां दूतमकृण्वन् (२) अकुर्वन्। दूतो द्विविधः वार्त्ताहारी कार्यकारी चेति। तत्र त्वां कार्यकारिणं दूतमकार्षुरिति भावः।

तथा निगमाः—

अग्निं दूतं वृणीमहे० ( ऋ० १.१२.१ )

अग्निं दूतं प्रति यदब्रवीतन० ( ऋ० १.१६१.३)।

अग्निं दूतं पुरो दधे० ( ऋ० ८.४४.३ )।

त्वं दूतो अमर्त्यः० ( ऋ० ६.१६.६ )।

दूतं वो विश्ववेदसं० ( ऋ० ४.८.१ )।

इत्यादयः।

सरमादूतीत्वं दर्शयति—

तत्र ऋक् ( ऋ० ३.३१.६ )—

विदद्यदीं सरमा रुग्णमद्रेर्महि पाथः पूर्व्यं सध्र्यक्कः।
अग्रं नयत्सुपद्यक्षराणामच्छा रवं प्रथमा जानती गात्॥

विदत्। यदि। सरमा। रुग्णम्। अद्रेः। महि। पाथः। पूर्व्यम्। सध्र्यक्। करिति कः। अग्रम्। नयत्। सुऽपदी। अक्षराणाम्। अच्छ। रवम्। प्रथमा। जानती। गात्॥ ७२॥

---

(१) दूतम्-टुदु उपतापे। दुतनिभ्यां दीर्घश्च ( उ० सू० २७७ ) इति क्तः। तत्सन्नियोगेन धातोर्दीर्घः। दूतः इतस्ततः सञ्चारीत्यर्थः। प्रत्ययस्वरः।

(२) अकृण्वन्-कृवि हिंसाकरणयोरित्यस्य लङि धिन्विकृण्व्योर च ( पा० ३।१।८० ) इत्युप्रत्ययः। अकारश्चान्तादेशः निघातः।

पुरा किलाङ्गिरसां गावः पणिनामकैरसुरैरपहृत्य निगूढे कस्मिंश्चित्पर्वते स्थापिताः। ते चाङ्गिरसस्तत्प्राप्त्यर्थम् इन्द्रं तुष्टुवुः। तुष्टः स इन्द्रः गवामन्वेषणाय देवशुनीं सरमां प्राहिणोत्। सा च गवामन्वेषणपरा सती तत्स्थानमलभत। तया विज्ञापित इन्द्रः ताः गाः आनीयाङ्गिरोभ्यः प्राददिति। 'सरमा देवशुनीन्द्रेण प्रहिता पणिभिरसुरैः समूदे' इति यास्कः (नि० ११.२५)। यदि सरमा सरणशीला। सरमा सरणादिति यास्कः (नि० ११.२५)। इन्द्रेण गवामन्वेषणार्थं प्रेषिता देवशुनी अद्रेः पर्वतस्य रुग्णं भग्नं द्वारं विदत् अलभत। विदॢ लाभे। 'बहुलं छन्दस्यमाङ्योगेऽपि' (पा० ६।४।७५) इत्यडभावः। तदानीमिन्द्रो महि महत् पूर्व्यं पूर्वं प्रेषणकाले 'अन्नादिनीं ते प्रजां करिष्यामि' इति यत्प्रतिज्ञातम्। सध्र्यक् इतरैरपि भोज्यैः सह पाथो गव्यादिलक्षणमन्नम् कः। 'सहस्य सध्रिः' (पा०६।३।९५) इति सध्र्यादेशः। अन्नमपि पाथ उच्यते पानादेवेति यास्कः (नि०६.७)। गव्यादिलक्षणमन्नमकार्षीरित्यर्थः। तस्यै दत्तवानित्यर्थः। ततः सुपदी शोभनपादयुक्ता सा सरमा अक्षराणां क्षयरहितानां गवाम् अग्रं प्रान्तं नयत् प्राप्नोत्। कुत इत्यत आह। यतः रवं तासां हम्भारवं प्रथमा प्रथमं जानती सती अच्छ आभिमुख्येन प्राप्तुं गात् जगाम। (१) अच्छाभेराप्तुमिति यास्कः (नि० ५.२८)॥

यदी सरमा—यदीति कृथो मनसः कवीनां० (ऋ० प्रा० ८.८) इति दीर्घः। कः—करनुदात्तम् (ऋ० प्रा० १.८४) इति रेफः। अच्छा रवम्—सुतायाहीत्यन्यत्वादच्छेति प्लुतिः (ऋ०प्रा०७.६)

तथा निगमाः।

ऋतं यती सरमा गा अविन्दद्विश्वानि० (ऋ० ५.४५.७)।

(१) निरुक्ते तु 'अच्छाभेराप्तुमिति शाकपूणिः' इति प्रोक्तम्।

ऋतस्य॑ प॒था स॒रमा॑ वि॒दद्गाः ( ऋ० ५. ४५. ८ ) ।

इत्यादयः ।

बहुप्रजः सीदत्येवेत्यर्थ आह–

राजपुत्रो जगन्मित्रो राजमान्यो बहुप्रजः ।
सीदत्येव सुदासो हि विश्वामित्रोऽहरद्धनम् ॥६५॥

यदि राज्ञः पुत्रो जगन्मित्रं यस्यासौ जगन्मित्रः । राज्ञां मान्यः । एवं-विधैर्लक्षणैर्युक्तोऽपि यदि बहुप्रजः बह्वी प्रजा यस्यासौ बहुप्रजः । गोस्त्रियो० ( पा० १. २. ४८ ) इति ह्रस्वत्वम् । तर्हि सीदत्येव । विश्वामित्रदृष्टान्तेन द्रढयति । यथा विश्वामित्र ऋषिः राज्ञो गाधिनः पुत्र इति राजपुत्रः विश्वं मित्रं यस्येति जगन्मित्रः । मित्रे चर्षौ ( पा० ६. ३. १३० ) इति पूर्वपददीर्घः । सुदासः पैजवनस्य पुरोहितो बभूवेति ( नि० २।२४ ) राजमान्यः सोऽपि एवंविधलक्षणः सन् बहुप्रजोऽभूत् । तस्य हैकशतं पुत्रा आसुः ( सां० श्रौ० सू० १५।२६ ) इति बहुप्रजत्वादसीदत् । कथम् । हि यस्मात्सुदासो राज्ञो धनमहरत् । हृञ् हरणे । अचूचुरदित्यर्थः ।

तद्दर्शनायेतिहासपूर्विका ऋक् ( ऋ० ३. ३३. १ )–

प्र पर्व॑तानामुश॒ती उ॒पस्था॒दश्वे॑ इव॒ विषि॑ते॒ हास॑माने ।
गावे॑व शु॒भ्रे मा॒तरा॑ रिहा॒णे विपा॑ट्छुतु॒द्री पय॑सा जवेते ॥

प्र । पर्व॑तानाम् । उ॒श॒ती इति॑ । उ॒पऽस्था॑त् । अश्वे॑ इ॒वेत्यश्वे॑ऽइव । विसि॑ते॒ इति॒ विऽसि॑ते । हास॑मा॒ने इति॑ । गावा॑ऽइव । शु॒भ्रे इति॑ । मा॒तरा॑ । रि॒हा॒णे इति॑ । विऽपा॑ट् । शु॒तु॒द्री । पय॑सा । ज॒वे॒ते॒ इति॑ ॥ ७३ ॥

पुरा किल विश्वामित्रः पैजवनस्य सुदासो राज्ञः पुरोहितो

बभूव। स च पौरोहित्येन लब्धधनः अन्यद्धनं (१) हृत्वा विपाट्-शुतुद्र्योः संभेदमाययौ। अनुययुरितरे। अथोत्तितीर्षुर्विश्वामित्रोऽ-गाधजले ते नद्यौ दृष्ट्वोत्तारणार्थं नदीस्तुष्टाव।

तथाऽऽह यास्कः—"विश्वामित्र ऋषिः सुदासः पैजवनस्य पुरोहितो बभूव। विश्वामित्रः सर्वमित्रः। सर्वं संसृतम्। सुदाः कल्याणदानः। पैजवनः पिजवनस्य पुत्रः। पिजवनः पुनः स्पर्धनीयजवो वा अमिश्रीभावगतिर्वा। स वित्तं गृहीत्वा विपाट्छुतुद्र्योः सम्भेदमाययौ। (नि० २।२४)

तथानुक्रमणी—का. स. ३।३३ "प्रपर्वतानां सप्तोना संवादो नदीभिर्विश्वामित्रस्योत्तितीर्षोरिति"।

तथा बृहद्देवता (४।१०५–१०६)–

सूक्ते प्रेति तु नद्यश्च विश्वामित्रः समूदिरे ॥१०५॥

पुरोहितं सन्निज्यार्थं सुदासः सोऽहरद्धनम् (२) ॥ इति विश्वामित्र स्त्रिष्टुभा नद्यौ तुष्टाव।

"विश्वामित्रस्य संवादं नद्यतिक्रमणे जपेद्" (३) इति विनियुक्तमृग्विधाने (श्लो० १७७)।

ऋचोऽयमर्थः। पर्वतानां शैलानाम् उपस्थाद् उत्सङ्गाद् निर्गत्य उशती समुद्रगमनं कामयमाने विषिते बन्धाद्विमुक्ते (४)। षिञ् बन्धने। हासमाने अन्योन्यजवे स्पर्धमाने (५) हृष्यन्त्यौ वा। हासतिः स्पर्धायां हर्षमाणे वेति यास्कः (नि० ९।३९)।

---

(१) 'सर्वं धनमादाय' इति वे० भा०।

(२) 'सुदासा सह यन्नृषिः' इति मुग्धानलपुस्तके।

(३) अपराधंतु-'आप्लुत्याचम्य विधिवदुदकस्याञ्जलिं क्षिपेत्'।

(४) "गमने दृष्टान्तः। अश्वे इव वडवे यथा विषिते मन्दुरातो विमुक्ते" इति वे० भा०

(५) 'अन्योन्यं जवेन स्पर्धमाने' इति वे० भा०।

अश्वे इव वडवे (१) इव तथा गावेव शुभ्रे यथा द्वे गावौ शोभमाने वर्त्तेते तद्वत् शुभ्रे शोभमाने । किञ्च मातरा मातरौ धेनू रिहाणे । लिहू आस्वादने शानच् । लस्य रेफश्छान्दसः (२) । वत्सं जिव्हया लेढुमिच्छन्त्यौ शीघ्रं गच्छतः (३) । तद्वत् विपाट् शुतुद्री एतन्नामके नद्यौ प्रजेवते समुद्रं प्रति शीघ्रं गच्छतः ।

[ अत्र निरुक्तम् (४) पर्वतानामुपस्थात् उपस्थानात् उशत्यौ (५) कामयमाने अश्वे इव (विषिते) (६) विमुक्ते इति वा । विषण्णे इति वा । हासमाने (७) हासतिः स्पर्द्धायां हर्षमाणे वा गावाविव शुभ्रे शोभमाने मातरा संरिहाणे (८) विपाट् (९)—

---

( १ ) 'त्वरया गच्छन्त्यौ परस्परं हृष्यन्त्यौ' इति वे० भा० ।

( २ ) अन्तर्णीतसनर्थो लिहिः इति वे० भा० ।

( ३ ) "तद्वत् समुद्रं गन्तुं जवाद्गच्छन्त्यौ पयसा संयुक्ते । विपाट् कूलविपाटनात् विपाशनाच्छतपुत्रमरणोद्धूततमोवृतेर्मुमूर्षोर्वसिष्ठस्य पाशा अस्यां व्यपास्यन्त विमोचनाद्वा विपाट् । शुतुद्री शु क्षिप्रं तुन्ना तुन्नेव द्रवति गच्छतीति शुतुद्री" इति वे० भा० ।

( ४ ) इदमत्र वेदभाष्याद् दत्तं मूले नास्ति ।

( ५ ) उशती–वश कान्तौ । अस्य शतुर्ङित्त्वाद् ग्रहिज्या० ( पा० ६।१।१६ ) इत्यादिना सम्प्रसारणम् ।

( ६ ) विषिते षिञ् बन्धने इत्यस्य कर्मणि निष्ठा (पा० ३।४।७०) संहितायां 'परिनिविभ्यः सेव० ( पा० ८।३।७० ) इत्यादिना षत्वम् । गतिरनन्तरः ( पा० ६।२।४९ ) इति गतेः प्रकृतिस्वरत्वम् ।

( ७ ) हासमाने–हासतिः स्पर्धाकर्मा हसे हसने वा शानच् । तस्य लसार्वधातुकस्वरे कृते धातुस्वरः ।

( ८ ) रिहाणे–लिह आस्वादने । स्वरितेत्वाद् ( पा० १।३।७२ ) उभयपदी शानच् । अदादित्वात् ( पा० २।४।७२ ) शपो लुक् । लकारस्य रेफश्छान्दसः । रेफमवलम्ब्य णत्वम् ( पा० ८।४।१ ) चित्वादन्तोदात्तः ( पा० ६।१।१६३ ) ।

( ९ ) विपाट्–पट गतौ । पश बाधनस्पर्शनयोरिति वा । ण्यन्तावेतौ विपूर्वौ । शकारस्य व्रश्चभ्रस्ज० ( पा० ८।२।३६ ) इत्यादिना षत्वम् ।

छुतुद्री (१) पयसा प्रजवेते (२) ( नि० ९।३९ ) ]

जवेते-तिङ्ङतिङः ( पा० ८।१।२८ ) इति निघातः।

उशती-षष्ठादयश्च द्विवचोन्त० ( ऋ० प्रा० १. ७१ ) इति प्रकृतिभावः। विषिते-अन्यपूर्वै० ( ऋ० प्रा० ५. २१ ) इति (३) षत्वम्।

अवश्यं ब्राह्मणेन सोमपा भवितव्यमित्यर्थं आह—

सोमपानं विना नॄणां ब्राह्मणत्वं न विद्यते।
यदर्थं गाधिजो यष्टुं धनं हृत्वाऽवदन्नदीः ॥६६॥

नॄणां विप्राणां यज्ञकारिणां सोमपानं सोमयागं विना ऋते ब्राह्मणत्वं न विद्यते। ब्राह्मतेजो न भवति। यतो यदर्थं ब्राह्मणत्वाय गाधिजो विश्वामित्रः पूर्वं राजर्षिर्जातः। यष्टुं यज्ञार्थं सुदासो धनं हृत्वा नदीः प्रति उत्तारणायैवमवदत्। अहं कुटुम्बभरणादतिरिक्तेन धनेन सोमं सम्पादयिष्यामीति।

अस्मिन्नर्थे ऋक् ( ऋ० ३.३३.५ )—

रमध्वं मे वचसे सोम्याय ऋतावरीरुप मुहूर्तमेवैः।
प्र सिन्धुमच्छा बृहती मनीषाऽवस्युरह्वे कुशिकस्य सूनुः॥

रमध्वम्। मे। वचसे। सोम्याय। ऋतऽवरीः। उप। मुहूर्तम्। एवैः। प्र। सिन्धुम्। अच्छ। बृहती। मनीषा। अवस्युः। अह्वे। कुशिकस्य। सूनुः॥ ७४॥

विश्वामित्रस्त्रिष्टुभा नदीस्तुष्टाव। अथैतद्बहुवददिति बह्वीर्नदीः।

---

( १ ) शुतुद्री-छान्दसी रूपसिद्धिः।
( २ ) जवेते-जुङ् गतौ भौवादिः। ङित्वादात्मनेपदम् ( पा० १।३।७२ ) आतो ङितः ( पा० ७।२।८१ ) निघातः।
( ३ ) 'द्रष्टव्यम्' इति मूले।

'पूर्णां तितीर्षुः सरितं रमध्वमिति संस्मरेत्'।

इति ऋग्विधाने (श्लो० १.८०) विनियुक्ता।

ऋतावरीः ऋतम् उदकं तद्वत्यः हे नद्यः यूयं मे मम विश्वामित्रस्य सोम्याय उत्तीर्याहं सोमं सम्पादयामीत्येवं सोमसम्पादिने वचसे। तदर्थम् एवैः पञ्चम्यर्थे तृतीया। शीघ्रगमनेभ्यो मुहूर्त्तं मुहूर्त्तमात्रं उपरमध्वम् (१)। क्षणमात्रं शीघ्रगमनादुपरताः भवत (२)। सामान्येन नदीषूच्यमानासु समीहितं प्रयोजनमकुर्वतीषु पुरोवर्तिनीं शुतुद्रीं प्रति ब्रूते। कुशिकस्य राजर्षेः सूनुर्विश्वामित्रोऽहं बृहती (३) बृहत्या महत्या मनीषा (३) मनीषया स्तुत्या अवस्यु (४) रात्मनो रक्षण-मिच्छन् सन्—अव रक्षणे। "सुप आत्मनः क्यच्" (पा० ३।१।८) 'क्याच्छन्दसि' इति (पा० ३।२।१७०) सिन्धुं शुतुद्रीं त्वामच्छाभि-मुख्येन प्राह्वे (५) प्रकर्षेणाह्वयामि।

उपरमध्वम्—छन्दसि परेऽपि (पा० १।४।८१) इत्युपसर्ग-संज्ञा। अत्र निरुक्तं रमध्वमित्यादि (नि० २।२५) [उपरमध्वं मे वचसे सोम्याय सोमसम्पादिने ऋतावरीः (६) ऋतवत्यः ऋतमित्युदकनाम

---

(१) रमध्वम्-रमु उपरमे। उप पूर्वाद्रमतेः 'विभाषाऽकर्मकात्' (पा० १।३।८५) इत्यात्मनेपदम्।

(२) उपपूर्वो रमिरुपसंहारे वर्त्तते।

(३) बृहती मनीषा-उभयत्र तृतीयायाः पूर्वसवर्णदीर्घः। (पा० ७।१।३९)।

(४) अवस्युः-अवः रक्षणम् इच्छन्। सुपः (पा० ३।१।८) इति क्यच्। नः क्ये (पा० १।४।१५) इति नकारान्तस्य पदसंज्ञाया नियमितत्वादत्र सकारस्य रुर्न भवति।

(५) अह्वे-ह्वयतेर्लुङि सिच 'आत्मनेपदेष्वन्यतरस्याम्' (पा० ३।१।५४) इति अङादेशः। गुणः। निघातः।

(६) ऋतावरीः—ऋतशब्दान्मत्वर्थे छन्दसीवनिपौ० (पा० ५।२।१२२ वा०) इति वनिप्। वनो र च (पा० ४।१।७) इति ङीप् रेफश्चान्तादेशः। वा छन्दसि (पा० ३।४।८८) इति सवर्णदीर्घः आमन्त्रितस्य च पादादित्वात् षाष्ठिकमाद्युदात्तत्वम् (पा० ६।१।१९८)

प्रत्यूतं भवति मुहूर्तमेवै (१) रयनैरवनैर्वा प्राभिह्वयामि । सिन्धुं बृहत्या महत्या मनीषया मनस ईषया स्तुत्या प्रज्ञया वा अवनाय। कुशिकस्य सूनुः कुशिको राजा बभूवेति ] रमध्वमिति विभाषाऽकर्मकात् (पा० १।३।८५ ) इत्यात्मनेपदम्। सोम्याय—ऋकार उदये कण्ठ्यावकारं० (ऋ० प्रा० २।३२) इत्यकारः। ऋतावरीः—०सुम्नर्ता-रातीत्युदये वकारे० ( ऋ० प्रा० ९।११ ) इति दीर्घः । मनीषा-वस्यू रणया इह० (ऋ० प्रा० २।७४) इति श्रद्धादेः प्रकृतिभावो न। श्रद्धासम्राज्ञी० ( ऋ० प्रा० २।५९ ) इत्यस्यापवादः ।

एवं विश्वामित्रो यज्वा भूत्वा ब्राह्मणतुल्योऽभूदित्युक्तम् ।

सर्वैरुपायैः फलं (२) साध्यमित्यर्थ आह—

नीचैर्नीचतरैर्भूत्वा कार्यं साध्यं विचक्षणैः ।
गाधिजः कारुतां प्राप्य प्रभुरप्यतरन्नदीः ॥६७॥

विचक्षणैः पुम्भिः नीचैः नीचतरैरतिशयेन नीचैर्भूत्वा कार्यं साधनीयम् । विश्वामित्रवत् । यथा गाधिजो विश्वामित्रः प्रभुरपि महानपि कारुतां नीचतरत्वं प्राप्य नदीरतरत् । तेन नदीतरणरूपफलं साधितम् ।

तदर्थेयमृक् ( ऋ० ३.३३.१० )—

आ ते कारो शृणवामा वचांसि ययाथ दूरादनसा रथेन।
नि ते नंसै पीप्यानेव योषा मर्यायेव कन्या शश्वचै ते ॥

आ । ते । कारो इति । शृणवाम । वचांसि । ययाथ । दूरात् । अनसा । रथेन । नि । ते । नंसै । पीप्यानाऽइव । योषा । मर्यायऽइव । कन्या । शश्वचै । त इति ते ॥७५॥

---

( १ ) एवैः–इण गतौ । इणशीङ्भ्यां वन् ( उ० सू० १५८ ) आर्धधातुकलक्षणो गुणः ( पा० ७।३।८४ ) नित्स्वरः ( पा० ६।१।१९७ ) ।
( २ ) 'फलमेव' इति 'ग' पुस्तके ।

नद्यो विश्वामित्रं प्रत्यब्रुवंस्त्रिष्टुभा । तत आशुश्रुवुः । हे कारो स्तुतिकर्तः विश्वामित्रेति कारुत्वं नदीभिरुक्तम् । ते तव वचांसि इमानि वाक्यानि आशृणवाम कार्त्स्न्येन शृणुमः । श्रु श्रवणे लेटि आडुत्तमस्य पिच्च (पा० ३।४।९२) इत्याडागमः । पित्वाद् गुणः । तिङ्त्वान्निघातः (पा० ८।१।२८) । तव समीहितं प्रयोजनं कुर्म इत्यर्थः । अनसा शकटेन रथेन च सह ययाथ (१) याहि यतस्त्वं (२) दूरादागतोऽसि वयं च ते त्वदर्थं नि नंसै (३) नीचैर्नमाम । णमु प्रह्वत्वे शब्दे च । प्रत्येकत्वविवक्षयैकवचनम् । रथेन गन्तुं गाधोदका भवामेत्यर्थः । तत्र दृष्टान्तः । पीप्यानेव (४) योषा । पीङ् पाने । पुत्रं स्तनं पाययन्ती योषा (५) माता यथा प्रह्वीभवति तद्वत् । वृषादीनां च (पा० ६।१।२०३) इति योषाऽऽद्युदात्तः । पुनर्दृष्टान्तान्तरम् । यथा कन्या युवतिर्मर्यायेव मनुष्याय (६) भर्त्रे शश्वचै परिष्वजनाय नम्रीभवति तद्वत् ते (७) त्वदर्थं प्रह्वी भवामः । शश्वचै-ष्वञ्ज परिष्वङ्गे इत्यस्मात्संपदादिलक्षणे भावे क्विप् (पा० ३।३।९४ वा०) पृषोदरादित्वाद् (पा० ६।३।१०९) इष्टरूपसिद्धिः (८) ।

---

(१) ययाथ-या प्रापणे इत्यस्य भूतमात्रे लिटि थलि एकाच उपदेशेऽनुदात्तात् (पा० ७।२।१०) इतीट्प्रतिषेधः । लित्स्वरः (पा० ६।१।१९३)

(२) 'यतो दूरादागतोऽसि' इति वे० भा० ।

(३) नंसै-णमु प्रह्वत्वे इत्यस्य लेटि उत्तमे लेटि सिब्बहुलम् (पा० ३।१।३४) इति सिप् । वैतोऽन्यत्र (पा० ३।४।९६) इति एकारादेशः । निघातः ।

(४) पीप्यानेव—पीङ् पाने । इत्यस्यान्तर्भावितण्यर्थस्य लिटि कानचि रूपम् (पा० ३।२।१०६) । चित्स्वरः (पा० ६।१।१६३) ।

(५) योषा-यु मिश्रणे । वृतॄवदिहनि० (उ० सू० ३४९) इत्यादिना सप्रत्ययः । यौतीति योषा । वृषादित्वात् (पा० ६।१।२०३) आद्युदात्तः ।

(६) पित्रे भ्रात्रे वा इति वे० भा० ।

(७) ते इति पुनरुक्तिरादरार्था । इति वे० भा० ।

(८) अन्तोदात्तश्च इति वे० भा० ।

आशृणवाम ते इति निरुक्तम् । [ "आशृणवाम ते कारो वचनानि याहि दूरादनसा च रथेन च नि नमाम ते पाययमानेव योषा पुत्रं मर्यायेव कन्या परिष्वजनाय नि नमा इति वा," ( नि० २।२७ ) ]

शृणवाम–एकादशिद्वादशिनोः० ( ऋ० प्रा० ८।३६ ) इत्यष्टमत्वादीर्घः ।

यत्र जाया तद्(१)गृहमित्यर्थ आह–

न गृहं काष्ठपाषाणैर्दयिता यत्र तद् गृहम् ।
विश्वामित्रोऽब्रवीच्छक्रमेवं यज्ञेन तोषितम् ॥६८॥

काष्ठपाषाणैर्निर्मितं गृहं न भवति । किंतु दयिता वल्लभा भार्या यत्र वृक्षमूलेऽपि विद्यते तद्गृहं तन्मन्दिरं जानीयात् । एवममुना यज्ञेन तोषितं संतोषितं शक्रमिन्द्रं विश्वामित्रो हारियोजनकाले गृहं प्रति प्रयाणकाले एवमर्थमब्रवीत् ।

तदर्थेयमृक् ( ऋ० ३. ५३. ४ )–

जायेदस्तं मघवन्त्सेदु योनिस्तदित्त्वा युक्ता हरयो वहन्तु ।
यदा कदा च सुनवाम सोममग्निष्ट्वा दूतो धन्वात्यच्छ ॥

जाया । इत् । अस्तम् । मघऽवन् । सा । इत् । ॐ इति । योनिः । तत् । इत् । त्वा । युक्ताः । हरयः । वहन्तु । यदा । कदा । च । सुनवाम । सोमम् । अग्निः । त्वा । दूतः । धन्वाति । अच्छ ॥ ७६ ॥

अहर्गणे वैकल्पिकी मैत्रावरुणस्य हारियोजने पुरोनुवाक्या (२) 'परा याहि मघवन् ( ऋ० ३।५३।५ ) इत्यनूच्य जायेदस्तं

---

( १ ) 'तत्र' इति 'ग' पुस्तके ।

( २ ) सूत्रमिदमेवं प्रोक्तम् "अननुवषट्कृत एवासम्प्रेषितो मैत्रावरुणः परा याहि मघवन्नित्यनूच्य जायेदस्तमिति वेह मद एव मघवन्नित्यतिप्रैषमाह द्वितीयप्रभृतिषु" इति । (सां० श्रौ० सू० १०।१।११) ।

मघवन्' इति सूक्ते विश्वामित्रस्त्रिष्टुभा इन्द्रं तुष्टाव । सूक्तविनियोग ऋग्विधाने (श्लो० १८४)–

इन्द्रापर्वतेति सूक्तमायुष्यं द्राविणं स्मृतम् ॥

ऋचोऽयमर्थः । हे मघवन् धनवन्निन्द्र । अस्तम् । असु क्षेपणे अस्यन्ते क्षिप्यन्ते पदार्था अत्रेत्यस्तं गृहम् । अस्तं पस्त्यं तन्नामसु पाठात् ( निघण्टु ३।४ )। तद् गृहं जायेत् जायैव । तथा सेव् सा जायैव योनिः पुरुषस्य मिश्रणस्थानम् । उ प्रसिद्ध्यर्थः । सा योनिर्गृहम् । कृत्तिः योनिः इति तन्नामसु पाठात् ( निघण्टु ३।४ )।

तथोक्तम् ।

न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते ।
वृक्षमूलेऽपि दयिता यत्र तिष्ठति तद् गृहम् ॥
प्रासादोपि तथा हीनः कान्तारादतिरिच्यते ।

तस्मात् तदिव् तत्र जायारूपे गृहे एव युक्ताः रथे योजिता हरयोऽश्वाः त्वा त्वां वहन्तु । जायां प्रापयन्तु । वयं तु यदा कदा च त्वदर्थं सोमं सुनवाम । सोमाभिषवं करवाम । षुञ् अभिषवे लोट् । यद्वृत्तान्निघाताभावः । तदस्माभिः प्रहितो दूतो अग्निः इन्द्रमावहेति । त्वा त्वामच्छाऽऽभिमुख्येन धन्वाति गच्छेत् । धन्वतिर् गत्यर्थः ( निघण्टुः २।१४ )। अग्निष्ट्वेति विग्रहे तु त्वा त इत्यनुदात्तयोः ( ऋ० प्रा० ५।३२ ) इति षत्वम् ।

पणेर्धनमयज्ञियमित्यर्थ आह–

**कैकट्योऽयज्ञिया गावः पणेर्धनमयज्ञियम् ।**
**ययाचे कौशिकश्चेन्द्रं देहि गास्ता हि तद्धनम् ॥६९॥**

कैकव्यो कीकटदेशे भवा गावः कीकटे यत्र देशे कुत्सिता लोकाः यज्ञक्रियाभिः किमिति वदन्ति तद्देशे गावोऽयज्ञिया भवन्ति । यथा कैकव्यो गावोऽयज्ञियाः तद्देशे तथा पणेर्वणिग्वृत्तेः "विप्रस्यायमेव लोकोऽस्ति न परः" इति

प्रेप्सोर्नास्तिकस्य धनमयाज्ञियं तस्य गृहे इति ज्ञात्वा यज्ञकामः कौशिको विश्वामित्रः कुशिकस्त्वैषीरथिरिति तद्गोत्रः इन्द्रं परमेश्वरम् । इदि परमैश्वर्ये । तद्धनं तस्य पणेर्धनं ता गावः कीकटे भवाः ययाचे । अस्माभिर्गावो धनञ्च तत्रानुपयुक्तं तत्रोपयुक्तं क्रियत इति ।

तद्दर्शनायेयमृक् ( ऋ० ३. ५३. १४ )–

किं ते॑ कृण्वन्ति॒ कीक॑टेषु॒ गावो॒ नाशिरं॑ दु॒हे न त॑पन्ति घ॒र्मम् ।
आ नो॑ भर॒ प्रम॑गन्दस्य वे॒दो नै॑चाशा॒खं म॑घवन् रन्धया नः ॥

किम् । ते॒ । कृ॒ण्व॒न्ति॒ । कीक॑टेषु । गावः॑ । न । आ॒ऽशिर॑म् । दु॒हे । न । त॒प॒न्ति॒ । घ॒र्मम् । आ । नः॒ । भ॒र॒ । प्रऽम॑गन्दस्य । वेदः॑ । नै॒चा॒ऽशा॒खम् । म॒घ॒ऽव॒न् । र॒न्ध॒य॒ । नः॒ ॥ ७७ ॥

यस्मान्नरा धनापेक्षा तत्समीपे जपेदिमाम् ।
किं ते कृण्वन्त्यृचं मन्त्री शतोत्तरसहस्रकम् ॥ १ ॥
स्वयमेव स सन्तुष्टस्तस्मै सर्वं ददाति च ।
तद्धनं सहसा लब्ध्वा सुखी भवति निश्चयम् ॥ २ ॥

विश्वामित्रस्त्रिष्टुभा इन्द्रं तुष्टाव ।

अदातारं सुपुष्टार्थः सर्वदाविष्टचेतनम् ।
हत्वा तद्धनमन्विच्छेत् किं ते कृण्वन्निति स्मरन् ॥

इति ऋग्विधाने ( श्लो० १८३-८४ ) ।

ऋचोऽयमर्थः । हे इन्द्र कीकटेषु अनार्यनिवासेषु जनपदेषु (१) गावः ते तव किं कृण्वन्ति किं कुर्वन्ति । क्वचिन्नोपयोगं कुर्वन्तीत्यर्थः ।

---

(१) यद्वा कृताभिर्यागदानहोमलक्षणाभिः क्रियाभिः किं फलिष्यतीत्यश्रद्दधानाः प्रत्युत पिबत खादतायमेव लोको न पर इति वदन्तो नास्तिका कीकटास्तेषु इति वे० भा० ।

अनुपयोगं दर्शयति। आशिरं (१) सोममिश्रणयोग्यम्। आशीराश्रयणादिति निरुक्तम् (नि० ६।८)। तत्पयः न दुह्रे (२) न दुहन्ति। चादिलोपे विभाषा (पा० ८।१।६३) इति निघाताभावः। गावस्ताः या इन्द्रायाशिरं दुहन्ति। इन्द्राय गाव आशिरमिति निदर्शनात् (नि० ६।७)। किञ्च घर्मं प्रवर्ग्यकर्मोपयुक्तं महावीरपात्रं स्वपयःप्रदानद्वारेण न तपन्ति न दीपयन्ति। एतेन सान्नाय्याद्यर्थमपि नोपयुज्यन्ते इति सूचितम्। एवं क्वचिदपि वैदिके कर्मणि अनुपयुक्तास्ता गाः नोऽस्मभ्यमाभर आहर—हृग्रहो० (पा० ३।१।८४ वा०) इति भत्वम्। न केवलं ता एव किं तर्हि प्रमगन्दस्य। एतद्द्रव्यं द्विगुणीभूत्वा मा गमिष्यतीति बुद्ध्या ददातीति मगन्दो (३) वार्धुषिकः। तस्यापत्यं पुत्रादिः प्रमगन्दः। प्रेत्यपत्यार्थः। प्रस्कण्वादिवत्। पिबत खादतायमेव लोको न पर इति वदन् नास्तिकः प्रमगन्दः। तस्य (४) वेदो धनं रिक्थं-वेदः इति तन्नामसु पाठात् (निघण्टु २-९)। आहर। हे मघवन् धनवन्निन्द्र नैचाशाखं नीचा शाखाः शूद्रास्तत्सम्बन्धि (५) यद्वा नीचतया निष्प्रयोजनतया निष्प्रयोजनबुद्ध्या परित्यक्तऋगादिशाखा येन तत्सम्बन्धि धनं नोऽस्मभ्यं रन्धय साधय। रधेर्ण्यन्तस्य रधिजभो० (पा० ७।१।६१) इति नुमागमः।

---

(१) आशिरम्—आङ्पूर्वाच्छ्रीणातेः क्विपि अपस्पृधेथाम्० (पा० ६।१।३६) इत्यादिना आशिर् इत्यादेशः।

(२) दुह्रे—दुहेर्लिटि इरयो रे (पा० ६।४।७६) इति रे आदेशः। द्विर्वचनस्य विकल्पितत्वाद्द्विर्वचनाभावः। चादिलोपे (पा० ८।१।६३) इति न निघातः।

(३) द्वैगुण्यादिलक्षणपरिमाणं गतोऽर्थो मामेव गमिष्यतीति बुद्ध्या परेषां ददातीति मगन्दो वार्धुषिकः।

(४) तस्यात्यन्तकुसीदकुलस्य।

(५) नीचासु शूद्रयोनिषु उत्पादिताः शाखाः पुत्रपौत्रादिरूपपरम्परा येन स नीचाशाखः। शूद्रापत्यैश्च केवलैः शूद्रावेदी पतत्यधः इति च पातकहेतुत्वेन स्मरणात्। तस्य सम्बन्धि धनं नैचाशाखम् इति वे० भा०।

एतेषां यद्धनं तव नोपयुज्यते अस्मदायत्तं तु यद्धनं यागादिद्वारा तवोपयुज्यते । तस्मात्तदस्मभ्यं प्रयच्छेति भावः ।

किं ते कुर्वन्तीति निरुक्तं द्रष्टव्यम् [ "किं ते कुर्वन्ति कीकटेषु गावः । कीकटो नाम देशोऽनार्य्यनिवासः । कीकटाः किं कृताः । किं क्रियाभिरिति प्रेप्सा वा । नैव चाशिरं दुह्रे न तपन्ति घर्मं हर्म्यमाहर नः प्रमगन्दस्य धनानि । मगन्दः कुसीदी माङ्गदो मामागमिष्यतीति च ददाति तदपत्यं प्रमगन्दोऽत्यन्तकुसीदकुलीनः । प्रमदको वा योऽयमेवास्ति लोको न पर इति प्रेप्सुः । पण्डको वा । पण्डकः पण्डगः प्रार्दको वा प्रार्दयत्याण्डा वाण्डावाणी इव व्रीडयति तस्तम्भे । नैचाशाखं नीचा शाखो नीचैः शाखः । शाखाः शक्नोतेः । आणिरर-णात् । तन्नो मघवन् रन्धयेति रध्यतिर्वशगमने" इति (नि० ६।३२)]

रन्धया नः-दशमं चैतयोः० (ऋ० प्रा० ८।३८) इति दीर्घः ।

महतां सङ्गः कर्तव्य इत्यर्थ आह—

महद्भिः स्वीकृताः सख्ये महत्त्वं प्राप्नुवन्ति ते ।
इन्द्रेण स्वीकृतः कुत्स इन्द्रसादृश्यमाप्तवान् ॥७०॥

सख्ये सख्यार्थं महद्भिः स्वीकृता अङ्गीकृतास्ते महत्त्वं प्राप्नुवन्ति । कुत्सवत् । यथा कुत्स ऋषिरिन्द्रेण स्वीकृतः सन्निन्द्रसादृश्यमाप्तवान् ।

तद्दर्शनायेतिहासपूर्विका ऋक् ( ऋ० ४. १६. १० )—

आ दस्युघ्ना मनसा याह्यस्तं भुवत्ते कुत्सः सख्ये निकामः ।
स्वे योनौ निषदतं सरूपा वि वां चिकित्सदृतचिद्ध नारी ॥

आ । दस्युऽघ्ना । मनसा । याहि । अस्तम् । भुवत् । ते । कुत्सः । सख्ये । निऽकामः । स्वे । योनौ । नि । सदतम् । सऽरूपा । वि । वाम् । चिकित्सत् । ऋतऽचित् । ह । नारी ॥ ७८ ॥

अत्राख्यानम् (१) । रुरुनामा कश्चिद्राजर्षिः तस्य पुत्रः कुत्साख्य (२) ऋषिरासीत् । स च कदाचिच्छत्रुभिः सह युयुत्सुः सङ्ग्रामे स्वयमशक्तः सन् शत्रूणां हननार्थमिन्द्रस्याह्वानं चकार । स चेन्द्रः कुत्सस्य गृहमागत्य तस्य शत्रूञ्जघान । तदनन्तरमतिप्रीत्या तयोः सख्यमभवत् । सख्यानन्तरमिन्द्र एनं स्वकीयं गृहं प्रापयामास । तत्र शची इन्द्रं प्राप्तुमागता सती तौ समानरूपौ दृष्ट्वाऽ यमेवेन्द्रो ऽयं कुत्स इति विवेकाभावेन संशयं चकार इति ।

षष्ठेऽहनि मैत्रावरुणस्य विनियुक्तम् । आ सत्यो यातु मघवानृजीषीति० ( ऋ० ४।१६।१ ) सर्वमिति सूत्रम् ( सां० श्रौ० सू० १८।१९।७ ) । ब्राह्मणमहाव्रते वामदेव्यस्य शंसेद्वामं ह्वेतद्देवानामिति ( सां० आ० २।१६ )

वामदेवस्त्रिष्टुभा इन्द्रं तुष्टाव । ऋचोऽयमर्थः । हे इन्द्र दस्युघ्ना दस्यूनां शत्रूणां हन्त्रा मनसा युक्तस्त्वं अस्तं कुत्सस्य गृहमायाहि । आगाः । लुङर्थे लोट् । कुत्सश्च ते तव सम्बन्धिनि सख्ये सखित्वाय निकामः नितरां कामयमानः भुवत् अभवत् । ततस्तौ वां युवां स्वे योनौ स्वकीये गृहे निषदतं न्यसीदतम् । उपविष्टावभूताम् । ऋतचित् सत्यदर्शिनी नारी । चिदित्येषोऽनेककर्मेति यास्कः ( नि० १।११ ) । इन्द्रस्य भार्या शची सरूपा समानरूपौ दृष्ट्वा । सुपां सुलुगित्याकारः ( पा० ७।१।३९ ) । वां युवां चिकित्सत् संशयं चकार । विचिकित्सा तु संशय ( अमरको० १।५।३ ) इत्युक्तम् ।

निषदतम्—दकारे चोत्तरे० (ऋ० प्रा० ५।१४) इति पूर्वात्पत्वम् ।

---

( १ ) 'अत्र काचिदाख्यायिका श्रूयत' इति वे० भा० ।

( २ ) 'कुत्साख्यो राजर्षिः' । वे० भा० ।

आपद्यपि धर्मं न (१) त्यजेदित्यर्थ आह—

न त्यजेद्धर्ममर्यादामपि क्लेशदशां गतः ।
वामदेवः शुनो धर्मं पक्त्वाऽऽन्त्राणि चचार यत् ॥७१॥

विद्वान् क्लेशदशां गतोऽपि प्राप्तोपि धर्ममर्यादां स्वकीयस्य पञ्चमहायज्ञषट्कर्मविहितस्य मर्यादां न त्यजेत् । वामदेववत् । यथा वामदेवः कष्टदशां गतः प्राप्तः शुनः शुनकस्य आन्त्राणि पुरीतन्ति पक्त्वा यद्यस्माद्धर्मं विहितं कर्म चचार ।

तदर्थेयमाख्यानपूर्विका ऋक् ( ऋ० ४.१८.१३ )—

अवर्त्या शुन आन्त्राणि पेचे न देवेषु विविदे मर्डितारम् ।
अपश्यं जायाममहीयमानामधा मे श्येनो मध्वा जभार ॥

अवर्त्या । शुनः । आन्त्राणि । पेचे । न । देवेषु । विविदे । मर्डितारम् । अपश्यम् । जायाम् । अमहीयमानाम् । अध । मे । श्येनः । मधु । आ । जभार ॥७९॥

(२) गर्भस्थो ज्ञानसम्पन्नो वामदेवो महामुनिः ।
मतिं चक्रे न जायेयं योनिदेशात्तु मातृतः ॥ १ ॥
किन्तु पार्श्वादितश्चेति ज्ञात्वाऽस्य जननी त्विदम् ।
दध्यौ शान्त्यै शचीं देवीमदितिं चेन्द्रमातरम् (३) ॥ २ ॥
अदितिश्चेन्द्रसहिता (४) गर्भिणीमभ्यगाद्वने ।
अदितीन्द्रवामदेवाः संवादमथ चक्रिरे ॥ ३ ॥

---

( १ ) 'न धर्मं त्यजेद्॰' इति 'ग' पुस्तके ।

( २ ) अस्मिन् सूक्ते इन्द्रादितिवामदेवसंवादरूपिणी काचिदाख्यायिका श्लोकरूपेण सूच्यते इति वे० भा० ।

( ३ ) 'त्विन्द्रमातरम्' इति वे० दी० तथा वे० भा० ।

( ४ ) 'अदितिस्त्विन्द्रसहिता' इति वे० दी० तथा वे० भा० ।

संवाद इति सूत्रेण कथा सैषाऽत्र (१) सूच्यते ।
नोक्तो वस्तुविशेषोऽत्र ह्युपदेशेष्वनुक्तितः ॥
अर्थतस्त्ववगन्तव्यो वक्तृभेद इति स्थितिः ॥ ४ ॥
इन्द्रोऽदितिर्ऋषिश्चास्मिन्मिथः सूक्ते समूदिरे (२) ॥
गर्भे शयानं सुचिरं मातुर्गर्भादनिर्गतम् ॥ ५ ॥
वामदेवं प्रति ब्रूत आद्ययर्चा ( ऋ० ४.१८.१ ) शतक्रतुः ।
द्वितीयादिभिरर्धर्चैर्ऋषिरत्राह पञ्चभिः ॥ ६ ॥
न हीन्वस्येति सप्त स्युरर्धर्चा अदितेर्वचः ।
ममच्च न त्वा युवतिरित्यृचः पञ्च(ऋ०४.१८.७-१२)वै मुनेः॥७॥
दौर्गत्यशांतिमत्राह वामदेवस्तथान्त्यया (ऋ०४.१८.१३) ।
एवमर्थाद्वक्तृभेद इति बह्वृचशासनम् ॥८॥
अर्थो विवेकस्पष्टत्वादुपदेशेषु नेरितः ।
ऋषिदैवतसिद्ध्यर्थं विवेकादर्थ (३) ईरितः ॥९॥

अयं पन्थाः सप्तोना संवाद इन्द्रादितिवामदेवानामित्यनुक्रमणी ( का० स० ऋ० ४।१८ )

तथा बृहद्देवता ( ४।१३०।१३१ )–

अञ्जसा न जनिष्येहं ब्रुवाणं गर्भमेव तम् (४) ॥ १३० ॥
अन्वगाददितिः (५) पुत्रमिन्द्रमात्महितैषिणी ॥
(६)देवर्षिपितृपूजार्थं य आन्त्राण्यपचच्छुनः (७) ॥ १३१ ॥

---

( १ ) 'सैषा च' वे० भा० ।
( २ ) 'समूचिरे' वे० भा० ।
( ३ ) 'विवेके त्वऽर्थ ईरितः' इति वे० दी० ।
( ४ ) 'गर्भमेव तु' इति मु० बृ० ।
( ५ ) अन्वशाददितिः इति मु० बृ० ।
( ६ ) इमे द्वे अर्धर्चे मुग्धानलबृहद्देवतापुस्तके १२६ श्लोकेन कथिते दृश्येते ।
( ७ ) 'पपाचान्त्राणि यच्छुनः' इति मु० बृ० ।

(१) यस्य च श्येनरूपेण ह्याहरद् वृत्रहा मधु ॥ इति ॥

वामदेवस्त्रिष्टुभा दौर्गत्यं प्रकाशयति । ऋचोऽयमर्थः । वामदेवोऽहं अवर्त्या अवृत्त्या जीवनोपायराहित्येन शुनः शुनकसम्बन्धीनि आन्त्राणि पुरीतन्ति पेचे अपचम् । देवेषु द्योतमानेषु वह्न्यादिषु मध्ये इन्द्रादन्यं मर्डितारम् आत्मनः सुखयितारं न विदं न लेभे । यां जायां स्वकीयां भार्याम् अमहीयमानाम् अश्लाघनीयाम् अपश्यम् अद्राक्षम् । अध अथानन्तरं श्येनवच्छीघ्रगामीन्द्रः मे मह्यं मधु मधुरोपेतमुदकमाजभार आजहार । मधु । पुरीषमिति तन्नाम ( निघण्टु १।१२ ) । इतीन्द्रस्योत्कर्षमाह ।

अधा मे इति–अध पुरु वह वर्धयेत्यद्यादित्वाद्दीर्घः (ऋ० प्रा० ७।३१)। मर्डितारमिति–द्वयोः स्वरयोः मध्यमत्वाभावाद् ळत्वाभावः ( ऋ० प्रा० १।५२ ) ।

सत्पुरुषान् लोभान्न त्यजेदित्यर्थ आह—

ये कुर्वन्ति दयां भाग्यात् सन्तो लोभात्त्यजेन्न तान् ।
दशभिर्धेनुभिर्नेन्द्रं वामदेवोऽत्यजच्चिरम् ॥७२॥

ये सन्तः सत्पुरुषाः भाग्यात् पूर्वजन्मसुकृतसञ्चयाद् दयावात्सल्यं कुर्वन्ति तान् विचक्षणः लोभात् कश्चित् लोभं प्रदर्श्य दापयति वामदेववत् । दयापरान् न त्यजेत् यथा वामदेवो दशसंख्याभिः धेनुभिः गोभिरिन्द्रं चिरं चिरकालं नात्यजत् । न तत्याज ।

तद्दर्शनायेमे ऋचौ—

भूयसा वस्नमचरत्कनीयो० प्र वाणम् (ऋ०४.२४.९)
क इमं दशभिर्मम० पुनर्ददत् (ऋ० ४.२४.१०) इति ।

---

( १ ) 'यस्य वै श्येनरूपेण आहरद् वृत्रहा मधु' इति मु० बृ० ।

तत्राद्या ऋक् ( ऋ० ४.२४.९ )–

भूयसा वस्नमचरत्कनीयोऽविक्रीतो अकानिषं पुनर्यन् ।
स भूयसा कनीयो नारिरेचीद्दीना दक्षा वि दुहन्ति प्र वाणम् ॥

भूयसा । वस्नम् । अचरत् । कनीयः । अवि ऽ क्रीतः । अकानिषम् । पुनः । यन् । सः । भूयसा । कनीयः । न । अरिरेचीत् । दीनाः । दक्षाः । वि । दुहन्ति । प्र । वाणम् ॥ ८० ॥

(१) न्यायविद्भिर्ये श्लोकाः पठितास्ते लिख्यन्ते—

अल्पं यः प्रतिगृह्णाति मूल्यं पण्येन (२) भूयसा ।
स क्रेतारं पुनर्गच्छन्नविक्रीतस्त्वयं (३) मया ॥ १ ॥
इति ब्रुवन्कामयते पुनर्मूल्यस्य पूरणम् ।
स विक्रेता पुनर्मूल्यं भूयसा न प्रपूरयेत् ॥ २ ॥
हीनो न लभते क्रेतुः(४) यदा विक्रीतवान्पुरा ।
यथासमयमेव स्यात्तयोर्न पुनरन्यथा ॥ ३ ॥
अयं विक्रय एवेति समयश्च कुतो (५) भवेत् ।
अथ मूल्यार्थ(६)मेतत्स्याद्विचार्यैव तु निर्णयः ॥४॥

---

( १ ) 'अत्र ऋग्द्वये सम्प्रदायविद्भिः पूर्वाचार्यैः केचित् श्लोकाः पठ्यन्ते त एव लिख्यन्ते' इति वे० भा० ।

( २ ) 'पश्येन्न भूयसा' इति 'क' 'ख' 'ग' पुस्तकेषु ।

( ३ ) 'स्वयं मया' इति हस्तलिखितपुस्तकेषु ।

( ४ ) 'हीनं न लभते वस्नं' इति वे० भा० ।

( ५ ) 'समयश्चेत्कुतो' इति वे० भा० । 'अयं विक्रय एवैते समयश्चेत्कुतो' इति 'क' 'ख' पुस्तकयोः ।

( ६ ) 'अपमूल्यार्थ०' इति 'क' 'ख' पुस्तकयोः ।

इत्येवं समयो ऽकारि तदा मूल्यं प्रपूर्यते ।
तस्मादादौ मया कार्यः समयोऽत्रेति चिन्तयन्(१) ॥५॥
वामदेवो वशीकृत्य शक्रं स्तोत्रेण भूयसा ।

विक्रीणन्समयं (२) चक्रे इन्द्र 'क इमम्' इत्यृचि ॥ ६ ॥

(३) अतश्च द्वृच एवार्थो भूयसा वस्नमित्ययम् ॥ इति ।

वामदेवस्त्रिष्टुभा इन्द्रं विक्रीणन्क्रेतारं वदति । ऋचोऽयमर्थः । कश्चिद्भूयसा भूम्ना (४) पण्येन द्रव्येण कनीयोऽल्पतरं मूल्यं वस्नं वस्नु मूल्यं धनमचरत प्राप्नोति । पुनर्यन् क्रेतारं पुनर्गच्छन् स विक्रेता अयमर्थो मयाऽविक्रीत इति ब्रुवन् अकानिषं मूल्यपूर्त्तिं कामयते व्यत्ययेन क्रमेरुत्तमपुरुषः । स विक्रेता भूयसा धनेन कनीयोऽल्पतरं मूल्यं नारिरेचीत । क्रेतुः सकाशान्न रिक्तीकरोति न लभत इत्यर्थः । दीना असमर्थाः दक्षाः समर्थाश्च वाणं वचनं । वाणं पविरिति तन्नाम ( निघण्टु १।११ )। विप्रदुहन्ति यथोक्तं क्रयकाले तथैव लभन्ते इति । कनीयोऽविक्रीतः—'एकीभवति पादादिः०' ( ऋ० प्रा० २।३४ ) इति अकारोऽभिनिधीयते ।

तत्र द्वितीया ऋक् ( ऋ० ४. २४. १० )—

क इमं दशभिर्ममेन्द्रं क्रीणाति धेनुभिः ।
यदा वृत्राणि जङ्घनदथैनं मे पुनर्ददत् ॥

कः । इमम् । दशऽभिः । मम । इन्द्रम् । क्रीणाति ।

( १ ) 'चिन्तयत्' इति 'ग' पुस्तके ।
( २ ) 'विक्रीणत्' इति 'क' 'ख' पुस्तकयोः ।
( ३ ) 'अतश्च द्वृच एकार्थो' इति वे० भा० । 'अतश्चेद्द्वृच एकार्थो भूयसा वस्नमित्यृचम्' इति 'क' 'ख' पुस्तकयोः ।
( ४ ) 'भूयः' इति 'ग' पुस्तके ।

धेनुऽभिः । यदा । वृत्राणि । जङ्घनत् । अथ । एनम् । मे । पुनः । ददत् ॥ ८१ ॥

वामदेवोऽनुष्टुभा इन्द्रं विक्रीणन् समयं चक्रे । मम मदीयं स्वभूतं इममिन्द्रं दशभिर्दशसंख्याकाभिः धेनुभिः गोभिः कः क्रीणाति । क्रयं कः करोति । तदानीं हे क्रेतार वो युष्माकं मध्ये एवमपि मया समयः क्रियते । यदायमिन्द्रो वृत्राणि त्वदीयान् शत्रून् जङ्घनत् हन्यात् अथानन्तरमेव एनमिन्द्रं पुनर्मह्यं ददत् दद्यात् । एवं दशभिर्धेनुभिरिन्द्रो वामदेवेन महान् त्यक्तः ।

सोमाभिषवं चिकीर्षोः फलमाह—

तस्मै शर्म ददात्यग्निर्ज्योक्च सूर्यं (१) स पश्यति ।
सुनवं सोममित्याह वामदेव्यं वचो ब्रुवे ॥ ७३ ॥

यो द्विजः सोमं सुनवं सोमाभिषवं करोमीति इति वाङ्मात्रं वदाति तस्मै एवं चक्रे । अग्निर्देवः शर्म सुखं ददाति । स एवं वक्ता ज्योक् चिरं सूर्यं पश्यति । दीर्घायुर्भवतीत्यर्थः । आयुःकामैर्ऋषिभिरेवमुक्तम् ।

ज्योक् पश्येम सूर्यमुच्चरन्तम् ( ऋ० १०।५९।६ ) ।
मो षुणः सोम मृत्यवे परा दाः
पश्येम नु सूर्यमुच्चरन्तम् ( ऋ० १०।५९।४ ) इत्यादिभिः ।

तथा—

मा ते दृशन्त्सूर्यमुच्चरन्तम् ( ऋ० ७।१०४।२४ ) ।

इति शापान्मनुष्यस्य सूर्यदर्शनं दीर्घायुष्ट्वायेति प्रतिपादितम् । वामदेवेन 'तस्मा अग्निः०' ( ऋ० ४. २९. ४ ) इत्यनयोक्तं यद्वचः तदहं वाह्वयो ब्रुव इति ।

---

( १ ) 'ज्योक् सूर्यश्च०' इति 'क' 'ख' पुस्तकयोः ।

तत्र ऋक् ( ऋ० ४. २९. ४ )—

तस्मा॑ अ॒ग्निर्भार॑तः॒ शर्म॑ यंस॒ज्ज्योक् प॑श्या॒त्सूर्य॑मु॒च्चर॑न्तम्।
य इन्द्रा॑य सु॒नवा॒मेत्याह॒ नरे॒ नर्या॑य॒ नृत॑माय नृ॒णाम् ॥

तस्मै॑ । अ॒ग्निः । भार॑तः । शर्म॑ । यं॒स॒त् । ज्योक् ।
प॒श्या॒त् । सूर्य॑म् । उ॒त्ऽचर॑न्तम् । यः । इन्द्रा॑य ।
सु॒नवा॑म । इति॑ । आह॑ । नरे॑ । नर्या॑य । नृऽत॑माय ।
नृ॒णाम् ॥ ८२ ॥

'को अद्येति' ( ऋ० ४।२५ ) सूक्तेन यो नित्यं शक्रमर्चति' ।
इत्यृग्विधाने(१)विनियोगः । वामदेवस्त्रिष्टुभा इन्द्रं तुष्टाव ।

ऋचोऽयमर्थः । भारतः हविषो भर्ताऽग्निः । "अग्निर्वै भरतः ।
सवै देवेभ्यो हव्यं भरतीति" कौषीतकिः ( कौ० ब्रा० ३।२ ) ।
(२) " प्राणो भूत्वा प्रजा अधारयात् " इति वाजसनेये ( श०
ब्रा० १।४।२।२ ) भारत इत्युक्तम् । तस्मै जनाय शर्म सुखं यंसत्
प्रयच्छेत् । तथा स यजमानः ज्योक् चिरकालम् उच्चरन्तमूर्ध्वं
चरन्तं सूर्यं पश्यात् पश्येत् । यो जनः इन्द्राय सोमं सुनवामेति
वाङ्मात्रेणाह । इन्द्रार्थं सोमाभिषवं कुर्यामिति ब्रवीति । कीदृशाय

---

( १ ) अयं श्लोक ऋग्विधाने एवं दृश्यते—
को अद्येति तु सूक्तेन यो नित्यं शक्तिमर्चति ।
जपेद्वाथ नमस्कारैः शक्तितो लभते वरान् ॥ २३८ ॥
अत्र तु 'शक्रम्' 'शक्रतो' इत्येव पाठाभ्यां भवितव्यमिति भाति ।

( २ ) अत्र शतपथब्राह्मणम्—अग्ने महाँअसि ब्राह्मण भारतेति ।
ब्रह्म ह्यग्निस्तस्मादाह ब्राह्मणेति भारतेत्येष हि देवेभ्यो हव्यं भरति
तस्माद्भरतोऽग्निरित्याहुरेष उ वा इमाः प्रजाः प्राणो भूत्वा बिभर्त्ति
तस्मादेवाह भारतेति । तथा ऋग्वेदे ( ऋ० २. ७. १, ५; ऋ० ६.
१६. १९ ) ऋचोऽपि द्रष्टव्याः ।

इन्द्राय। नरे नेत्रे नृशब्दस्य चतुर्थी 'ङे' आदेशः। नर्याय नृभ्यो हिताय नृणां मध्ये नृतमाय नेतृतमायेन्द्राय। तथा–

वोचाम मा सुनोतेति सोमम् ( ऋ० २।३०।७ )

इति गृत्समदेन प्रार्थितम्।

तस्मा अगृभ्रा उषसो व्युच्छान् य इन्द्राय सुनवामेत्याह ( ऋ० ५।३७।१ ) इत्यत्रिणोक्तम्।

तस्मात् सोमं सुनवम् हे लोका सुनोतेति वक्तव्यम्।

सोमाय (१) यष्टुः पणेरिन्द्रोऽनिष्टं करोतीत्यर्थ आह—

पणिर्भूत्वा धनं नावेत् सुन्वन् देवकराद् व्ययेत्।
हृत्वेन्द्रोऽभूत्पणेर्वित्तं सुतपाः सुन्वतः सखा ॥७४॥

ब्राह्मणः पणिधनं प्राप्य पणिर्वणिग्भवतीति ( नि० २।१७ ) तद्भूत्वा धनं नावेत् न रक्षेत्। अव रक्षणे। तर्हि किं करोतीत्याह–सुन्वन् यज्ञकृद्भूत्वा देवकराद्देवेभ्यः करं दत्त्वा व्ययेत् व्ययं कुर्यात्। तथोक्तम्–

देवानां करदा विप्रा विप्राणां करदा नृपाः।
नृपाणां करदा लोका लोकानां करदा मही॥

तथा गृह्ये—

देवताः पुरुषं गृह्याहरहर्गृहमेधिनाम्।
भागार्थमुपसर्पन्ति ताभ्यो निर्वप्तुमर्हति॥

इति चोक्तत्वाद्देवेभ्यः करं दत्त्वा व्ययेत्। अतः पणिनोऽनिष्टमिन्द्रः करोतीत्याह–यो धनं प्राप्य पणिर्भवति वित्तं तस्य धनादि इन्द्रो हरोति हृत्वा सुतपाः सुतमभिषुतं सोमं पिबतीति सुतपाः इन्द्रः सुन्वतः सोमाभिषवं कुर्वतः यजमानस्य सखा प्रियोऽभूत्। तस्माद्देवकराद् व्ययेदित्युक्तम्।

---

( १ ) 'सोमायष्टुः' इत्येव साधु। सोमेन अयष्टा सोमायष्टा तस्य। 'ग' पुस्तके त्वियमवतरणिका 'पणेरिन्द्रोऽनिष्टं करोतीत्याह' इत्येव। 'सोमाय यष्टुः' इति तु लेखनकृद्दोषो भवेत्।

तदर्थेयमृक् ( ऋ० ४. २९. ७ .–

न रेवता पणिना सख्यमिन्द्रोऽसुंन्वता सुतपाः संगृणीते।
आस्य वेदः खिदति हन्ति नग्नं विसुष्वये पक्तये केवलो भूत्॥

न । रेवता । पणिना । सख्यम् । इन्द्रः । असुंन्वता । सुतऽपाः । सम् । गृणीते । आ । अस्य । वेदः । खिदति । हन्ति । नग्नम् । वि । सुस्वये । पक्तये । केवलः । भूत् ॥ ८३ ॥

वामदेवस्त्रिष्टुभा इन्द्रकृत्यं तुष्टाव । रेवता धनवताऽपि पणिना वणिजा वार्धुषिकेण (१) असुन्वता सोमाभिषवम् अकुर्वता (२) सह इन्द्रः सख्यं सखित्वं न संगृणीते (३) नेच्छति । यतः सुतपाः सुतः सोमं पिबतीति तस्मादसुन्वता सख्यं नेच्छतीत्यर्थः । न केवलमसख्यं किन्त्वस्य (४) पणेर्नग्नं निरर्थकं वेदो धनं (५) आखिदति उद्धरति । हन्ति हिनस्ति च । अपि च सुष्वये सोमं सुन्वते पक्तये हवींषि पचते यजमानाय केवलोऽसाधारणः सन् विभूव व्यभूत् (६) । सुन्वतः सखाऽभवदित्यर्थः । तस्मात्सुन्वन्देवकराद्वयेदित्युक्तम् । इन्द्रोऽसुन्वतेति—एकीभवति पादादिः० ( ऋ० प्रा० २।३४ ) इत्येकीभावः । सुष्वये—युग्मान्तस्था० ( ऋ० प्रा० ५।२० ) इति षत्वम् ।

---

( १ ) 'वार्धुषिकेन' इति 'क' 'ख' पुस्तकयोः । 'वणिजा लुब्धेन' इति वे० भा० ।

( २ ) 'अकुर्वता अयजमानेन सह' इति वे० भा० ।

( ३ ) 'न संस्तौति नानुमन्यते इत्यर्थः' इति वे० भा० ।

( ४ ) 'अस्ययजमानस्य' इति वे० भा० ।

( ५ ) 'धनं ज्ञानं वा' इति वे० भा० ।

( ६ ) 'वि भवति' इति वे० भा० ।

इदमोन्वादेशे० (पा० २।४।३२) इत्यन्वादेशत्वादस्येति सर्वानुदात्तत्वम्। तथा यास्कः–'अथानुदात्तम्। दीर्घायुरस्या' (१) इति (नि० ४।२५)।

आत्मनो गुणं स्वयं न वदेदित्यर्थ आह—

न स्तुयात् स्वयमात्मानं गृहीत्वा वै निजान् गुणान्।
स्तुवन्निन्द्रवदात्मानं वामदेवो ललज्ज वा ॥७५॥

निजगुणान् गृहीत्वाऽऽत्मानं स्वयमेव न स्तुयात्। कुतः। यतः वामदेव इन्द्रवदात्मानम् अहं मनुरभवमित्याद्याभिस्तिसृभिः (ऋ० ४।२६। १-३) स्वयं स्तुवँल्ललज्ज। व्रीडायुक्तो बभूव। तत् कथं वेति विकल्पाज्ज्ञायते। 'अहं मनुः सप्ताद्याभिस्तिसृभिरिन्द्रमिवात्मानमृषिस्तुष्टावेन्द्रो वाऽऽत्मानम्' इत्युक्तत्वात् (का० स० ऋ० ४।२६)। अहमात्मानं स्वयं न स्तौमि इन्द्रो वाऽऽमानं स्तौति इति लज्जया विकल्पः कृतः।

तत्र ऋक् (ऋ० ४. २६. १)–

अहंमनुरभवं सूर्यश्चाहं कक्षीवाँ ऋषिरस्मि विप्रः।
अहं कुत्समार्जुनेयं न्यृञ्जेऽहं कविरुशना पश्यता मा ॥

अहम्। मनुः। अभवम्। सूर्यः। च। अहम्। कक्षीवान्। ऋषिः। अस्मि। विप्रः। अहम्। कुत्सम्। आर्जुनेयम्। नि। ऋञ्जे। अहम्। कविः। उशना। पश्यत। मा ॥ ८४ ॥

वामदेव इन्द्रो वाऽऽत्मानं तुष्टाव। अहं (२) वामदेवः इन्द्रो

(१) 'अस्या इतिचास्येति चोदात्तं प्रथमादेशेऽनुदात्तमन्वादेशे' (नि० ४।२५)।

(२) "इदमादिमन्त्रत्रये अयं गर्भे वसन् वामदेव उत्पन्नतत्त्वज्ञानः सन् सार्वात्म्यं स्वानुभवं मन्वादिरूपेण प्रदर्शयन्नाह" इति वेदभाष्यम्।

वा मनुरभवम् । सर्वस्य मन्ता प्रजापतिरस्मि । अहमेव सूर्यः प्रेरकश्चास्मि (१)। विप्रः मेधावी । विप्रः विग्रः इति तन्नाम ( निघण्टु ३।१९ )। कक्षीवान् दीर्घतमसः पुत्रः (२) अहमेवास्मि । आर्जुनेयं अर्जुन्याः पुत्रं कुत्समहं (३) न्यृञ्जे नितरां प्रसाधयामि । ऋञ्जतिः प्रसाधनकर्मेति यास्कः ( नि० ६।२१ )। कविः क्रान्तदर्शी उशना एतदाख्य ऋषिरहमेवास्मि । उपलक्षणमुक्तम् । परमार्थदृष्ट्या कृत्स्नमपि अहमेवास्मीत्यर्थः । हे जनाः मा मां सर्वात्मकं पश्यत । यूयमपि स्वस्वरूपमनुभवतेत्युक्तम् ।

इन्द्रस्य परमात्मत्वमुपनिषद्युक्तम् । 'स होवाच प्राणोऽस्मि प्रज्ञात्मेति' ( कौ० उप० ३।२ )।

स्वात्मगुणौ माघे (४)—

न सौख्यसौभाग्यकरा नृणां गुणाः
स्वयं गृहीताः सुदृशां कुचा इव ।
परैर्गृहीता द्वितयं वितन्वते
न तेन गृह्णन्ति निजं गुणं बुधाः ॥

तथा चारुचर्यायाम् ( श्लो० २७ )—

न स्वकीयस्तुतिपदैर् (५) ग्लानिं गुणगणं नयेत् ।
स्वगुणस्तुतिवादेन ययातिरपतद्दिवः ॥

कक्षीवाँ ऋषिः—नकार आकारोपधः० ( ऋ० प्रा० ४।६९ ) इत्यनुनासिकोपधत्वम् । पश्यता मा इति 'दशमं चैतयोः०' ( ऋ० प्रा० ७।३८ ) इति दीर्घः ।

---

( १ ) 'सर्वस्य प्रेरकश्चास्मि' इति 'ग' पुस्तके । 'सर्वस्य प्रेरकः सविता चास्मि' इति वे० भा० ।

( २ ) एतत्संज्ञक ऋषिरप्यहमस्मि इति वे० भा० ।

( ३ ) 'एतत्संज्ञकमृषिम्' इति वे० भा० ।

( ४ ) अयं श्लोको मुद्रिते शिशुपालवधे न दृश्यते ।

( ५ ) 'न स्वयं संस्तुतिपदैः' इति काव्यमालायां मुद्रितपुस्तके ।

देहादावात्मबुद्धिर्न कर्त्तव्येत्याह—

**आत्मबुद्धिर्न कर्तव्या देहादावात्मवेत्तृभिः ।**
**वामदेव इति प्राह भिन्नो नीडाच्छकुन्तवत् ॥७६॥**

आत्मवेत्तृभिः ब्रह्मवेदिभिः देहादावात्मबुद्धिर्न कर्त्तव्या । तथोक्तम्—

अनात्मभूते देहादावात्मबुद्धिस्तु देहिनाम् ।
साऽविद्या तत्कृतो बन्धस्तन्नाशो मोक्ष उच्यते ॥

इत्यात्मवृत्तौ । तस्माद्देहाद् व्यतिरिक्ते आत्मनि एतस्मिन्नर्थे वामदेवो गर्भे नु सन्नान्वित्यनया इति प्राह । किमिति । अयमात्मा नीडाच्छकुन्तवत् ( भिन्नः ) यथा शकुन्तः पक्षी नीडात् स्थानाद्भिन्नः तथा देहात् पृथग्भवति ।

अस्मिन्नर्थे श्लोकपूर्वा ऋक् ( ऋ० ४.२७.१. )—

**गर्भे॒ नु सन्नन्वे॑षामवेदम॒हं दे॒वानां॒ जनि॑मानि॒ विश्वा॑ ।**
**श॒तं मा॒ पुर॒ आय॑सीररक्ष॒न्नध॑ श्ये॒नो ज॒व॒सा॒ निर॑दीयम् ॥**

**गर्भे॑ । नु । सन् । अनु॑ । ए॒षा॒म् । अ॒वे॒द॒म् । अ॒हम् । दे॒वाना॑म् । जनि॑मानि । विश्वा॑ । श॒तम् । मा॒ । पुरः॑ । आय॑सीः । अ॒र॒क्ष॒न् । अध॑ । श्ये॒नः । ज॒वसा॑ । निः । अ॒दी॒य॒म् ॥ ८५ ॥**

**वामदेवः श्येनरूपमास्थाय निःसृतो विषण्णो ब्रह्म तुष्टाव । तथोक्तम्—**

**श्येनरूपं (१) समास्थाय गर्भाद्योगेन निःसृतः ।**
**ऋषिर्गर्भे शयानः सन् ब्रूते गर्भे नु सन्निति ॥**

**ऋचोऽयमर्थः । गर्भे नु गर्भे एव सन् विद्यमानो वामदेवो अहमेषामिन्द्रादीनां देवानां विश्वा विश्वानि सर्वाणि जनिमानि**

---

( १ ) 'श्येनभावम्' इति वे० भा० ।

जन्मानि अन्ववेदं अनुक्रमेण (१) अज्ञासिषम् । परमात्मनः ( सकाशात् ) सर्वे देवा जाता इत्यर्थः (२)। इतः पूर्वं शतं बहूनि शतं सहस्रं तन्नाम ( निघण्टु ३।१ ) । आयसीः अयोमयानि अभेद्यानि पुरः शरीराणि मा मामरक्षन् अपालयन्। यथा शरीराद् व्यतिरिक्तमात्मानं न जानीयां तथा ( माम् ) अरक्षन्नित्यर्थः। अध अथ (अधुना) श्येनः श्येनवत् स्थितोऽहं जवसा वेगेन निरदीयं शरीरान्निरगमम् । अनावरणमात्मानं जानन्निर्गतोऽस्मीत्यर्थः ।

'गर्भ एवैतच्छयानो वामदेव एवमुवाचेति' ब्राह्मणम् ३) ( ऐ० आ० २।५।१ ) ।

अध श्येनेति दीर्घे प्राप्ते ( ऋ० प्रा० ७।३३ ) संयोगपरत्वान्न।

साधूनां दर्शनाद् विपद्भङ्गो भवतीत्यर्थ आह—

साधूना दर्शनात् सद्यो विपद्भङ्गः प्रजायते ।
ऋषीणां पूजनाद्राज्ञी पुरुकुत्सान्यगात्सुतम् ॥७७॥

साधूनां साधुवृत्तीनां दर्शनात् दर्शनमात्रेण विपद आपदो भंगः प्रजायते। कुतः। यस्मात् पुरुकुत्सानी पुरुकुत्सस्य राज्ञः स्त्री। पुरुकुत्सस्येष्ट इत्यानुक्। सप्तर्षीन् दृष्ट्वा पूजनं पुत्रार्थं चकार। ऋषीणां दर्शनात् पूजनात् पुरुकुत्सानी सुतं त्रसदस्युनामानमगात् प्राप्नोत् । ऋषीणां दर्शनात्पूजनाच्च दौर्गहे बध्यमाने विपद्भङ्गो जायते इत्युक्तम् ।

तद्दर्शनायेतिहासपूर्विका ऋक् ( ऋ० ४. ४२. ८ )–

अस्माकमत्र पितरस्त आसन्त्सप्त ऋषयो दौर्गहे बध्यमाने।
त आऽयंजन्त त्रसदस्युमस्या इन्द्रं न वृत्रतुरमर्धदेवम् ॥

---

( १ ) 'आनुपूर्व्येण' इति वे० भा० ।

( २ ) 'सर्वे देवा जाता इत्यवेदिषम् इत्यर्थः' इति वे० भा० ।

( ३ ) 'पुरुषेह वा अयमादितो गर्भः' इति खण्डे 'गर्भ एवैतच्छयानो वामदेव एवमुवाचेत्यादिना अयमर्थः सम्यक् प्रतिपादितः' इति वे० भा० ।

अस्माकंम् । अत्रं । पितरंः । ते । आसन् । सप्त । ऋषयः । दौः ऽगहे । बध्यमाने । ते । आ । अयजन्त । त्रसदस्युम् । अस्याः । इन्द्रम् । न । वृत्रऽतुरम् । अर्धऽदेवम् ॥ ८६ ॥

पुरुकुत्सस्य महिषी दौर्गहे बन्धने स्थिते ।
पत्यावराजकं दृष्ट्वा राष्ट्रं पुत्रस्य लिप्सया ॥
यदृच्छया समायातान् सप्तर्षीन् पर्यपूजयत् ।
ते च प्रीताः पुनः प्रोचुर्यजेन्द्रावरुणौ भृशम् ॥
सा चेन्द्रावरुणाविष्ट्वा त्रसदस्युमजीजनत् ।
(१) इतिहासमिमं जानन्नृषिर्ब्रूते दृचाविह ॥

त्रसदस्युरिन्द्रावरुणौ त्रिष्टुभा तुष्टाव । ( अथ ) अस्माकमत्रास्मिन्नराजके देशेऽस्यां पृथिव्यां वा पितरः पालयितारः उत्पादकाः (ते) आसन्नभवन् । त एते सप्तर्षयः प्रसिद्धाः । दौर्गहे दुर्गहस्य पुत्रे पुरुकुत्से दृढं पाशैर्बध्यमाने सति ते ऋषयः यस्मादस्या अस्यै पुरुकुत्सान्यै त्रसदस्युं मां आ अयजन्त प्रादुः (२) । यज देवपूजासङ्गतिकरणदानेषु । इन्द्रावरुणयोरनुग्रहात् । कीदृशं तम् । वृत्रतुरं वृत्रस्य शत्रोः तुरं हन्तारं अर्धदेवं देवानामर्धे समीपे वर्त्तमानम् । यद्वा । देवानामर्धभूतम् इन्द्रं न इन्द्रमिव स्थितं पुत्रं दत्तवन्तः । यत्सर्वेषां देवानामर्धं इन्द्रः तस्मादिन्द्रो देवानां (३) भूयिष्ठः इति (ह) तैत्तिरीयकम् ( तै० सं० ५।४।८ ) । अमुना साधूनां दर्शनाद्विपद्भङ्गः प्रजात इत्युक्तम् ॥ ८६ ॥

---

( १ ) श्लोकार्धमिदं वेदभाष्ये अधिकं दृश्यते ।
( २ ) 'यजधातोर्दानार्थत्वात्' इति 'ग' पुस्तके ।
( ३ ) 'देवतानाम्' इति वे० भा० ।

पूज्यान्नाव (प) मानयेदित्यर्थं आह—

अप्युन्नत (१) पदारूढः पूज्यान् नैवापमानयेत् ।
(२) इक्ष्वाकूणां ननाशाग्नेस्तेजो वृशावमानतः ॥७८॥

उन्नतपदारूढोऽपि महत्त्वं प्राप्तोऽपि पूज्यान् गुरुभागिनेयादीन् विद्वान् नैवापमानयेत् । एषामपमानं न कुर्यात् । कुतः । यद्यस्मादिक्ष्वाकूणां राज्ञां वृशावमानतः वृशाख्यऋषिर्गुरुस्तस्यावमानतः इक्ष्वाकूणामग्नेस्तेजो ननाश ।

तदर्थेयमाख्यानपूर्विका ऋक् ( ऋ० ५. २. ९ )—

वि ज्योतिषा बृहता भात्यग्निराविर्विश्वानि कृणुते महित्वा ।
प्रादेवीर्मायाः सहते दुरेवाः शिशीते शृङ्गे रक्षसे विनिक्षे ॥

वि । ज्योतिषा । बृहता । भाति । अग्निः । आविः । विश्वानि । कृणुते । महिऽत्वा । प्र । अदेवीः । मायाः । सहते । दुःऽएवाः । शिशीते । शृङ्गे इति । रक्षसे । विऽनिक्षे ॥ ८७ ॥

(३) शाट्यायनब्राह्मणोक्त इतिहास इहोच्यते ।
राजा त्रैवृष्ण ऐक्ष्वाकः (४) त्र्यरुणोऽभवदस्य च ॥ १ ॥
पुरोहितो वृशो जान (५) ऋषिरासीत्तदा खलु ।
संगृह्णन्ति रथान् राज्ञां (६) रक्षणाय पुरोहिताः ॥ २ ॥
त्र्यरुणस्य (७) वृशो रश्मिं संजग्राह पुरोहितः ।
कुमारो वर्त्मनि क्रीडन् रथचक्रेण घातितः ॥ ३ ॥

---

( १ ) 'अत्युन्नत०' इति 'क' 'ख' पुस्तकयोः ।

( २ ) 'वशावमानतस्तेजः इक्ष्वाक्वग्नेर्ननाश तत्' इति 'क' 'ख' पुस्तकयोः ।

( ३ ) इदं श्लोकार्धं हस्तलिखितपुस्तकेषु नास्ति । वेदभाष्यादत्रोद्धृतम् ।

( ४ ) 'इक्ष्वाकुः' इति वे० भा० ।

( ५ ) 'वशो राजऋषिः' इति 'क' 'ख' पुस्तकयोः ।

( ६ ) 'राज्ञी' इति 'क' पुस्तके ।

( ७ ) 'अरुणस्य वशो०' इति 'ख' पुस्तके ।

छिन्नः कुमारश्चक्रेण ममाराथ पुरोहितः ।
त्वं हन्ताऽस्येति राजानं राजा वापि पुरोहितम् ॥ ४ ॥
त्वं हन्ताऽस्य कुमारस्य नाहमित्यब्रवीत्तदा ।
यतस्त्वं रथवेगस्य नियन्ताऽतस्त्वया हतः ॥ ५ ॥
रथस्वामी यतो राजन् तस्मात्त्वं तस्य घातकः ।
एवं विवदमानौ ताविक्ष्वाकून् प्रष्टुमागतौ ॥ ६ ॥
तौ पप्रच्छतुरिक्ष्वाकून् केनासौ निहतो द्विजः ।
तेऽब्रुवन् रथयन्तारं हन्तारं वृशसंज्ञकम् (१) ॥ ७ ॥
स वृशो वार्शसाम्ना तं कुमारं समजीवयत् ।
एवमाख्याय तत्रैव पुनरन्यदुदीरितम् ॥ ८ ॥
यत् तमिक्ष्वाकवो रागाद्धन्तारमृषिमब्रुवन् (२) ।
तस्मात्तेषां गृहेष्वग्नेस्तेजो (३) निर्गतमेषु च ॥ ९ ॥
गृहे पाकादयो नासन् तत्कारण(४)मचिन्तयन् ।
वृशं कुमारहन्तारं यदवोचाम तेन नः ॥ १० ॥
अपाक्रामद्धरो वह्नेराह्वयाम वृशं वयम् ।
इति निश्चित्य तमृषिमाह्वयामासु(५)रादरात् ॥ ११ ॥
स आगत्य ततः शीघ्रं तेषामग्नेर्हरो (६) भवेद् ।
(६) इति वार्शेन साम्नाऽसावकामयत पूर्ववत् ॥ १२ ॥

एवं गायन् स ऋषिर्ब्रह्महत्यां भार्यां जातां त्रसदस्योर्नृपस्य ।
पिशाचवेषां हर आदाय चाग्नेर्गृहान्नीत्वा कशिपौ स्थापयन्तीम् ।

---

(१) 'वशसंज्ञकम्' 'कखयोः' ।
(२) 'गुरुमब्रुवन्' इति 'कखयोः' ।
(३) 'निर्गतमस्तु च' इत्येव पाठः समीचीनः । 'अग्निस्तेजो०' इति 'क' पुस्तके ।
(४) 'सत्कारण०' इति 'क' पुस्तके ।
(५) 'ह्वाययामासुः' इति 'क' पुस्तके ।
(६) इदमर्धं हस्तलिखितपुस्तकेषु नास्ति । वेदभाष्यादुद्धृतमत्र ।

(१)दृष्ट्वा सम्यक्तद्धरस्तोषयित्वा साम्ना पश्चाद्योजयामास चाग्निम् १३

ततः सतेजाः सञ्जातोऽभवत्पाकादि पूर्ववत् ।

एवं शाट्यायनेनोक्तं ताण्डकोक्तमथोच्यते ॥ १४ ॥

अथ तांड्ये—

वृशः पुरोधा ह्यभवत् त्रसदस्योर्महीपतेः ।

स रथं धावयन् राजा ब्राह्मणस्य कुमारकम् ॥ १५ ॥

चिच्छेद रथचक्रेण प्रमादात् सोऽब्रवीद् वृशम् ।

पुरोहिते वर्तमाने त्वयि हत्या समागता (२) ॥ १६ ॥

एषा त्वयाऽपनेतव्या वृशमित्यब्रवीन्नृपः ।

स ऋषिर्वार्शसाम्ना तं कुमारमुदजीवयत् ॥ १७ ॥

तथा बृहद्देवता ( ५।१४-२३ )—

ऐक्ष्वाकस्त्र्यरुणो राजा त्रैवृष्णो रथमास्थितः ।

स जग्राहाश्वरश्मींश्च (३) वृशो जानः (४) पुरोहितः ॥१४॥

स ब्राह्मणकुमारस्य रथो गच्छन् शिरोऽच्छिनत् ।

एनस्त्वीत्यब्रवीच्चैव (५) स राजा (६) तं पुरोहितम् ॥१५॥

सोऽथर्वाङ्गिरसान् मन्त्रान् दृष्ट्वा संजीव्य तं शिशुम् ।

क्रोधात् सन्त्यज्य राजानमन्यदेशं समाश्रितः ॥ १६ ॥

हरोप्यग्नेर्ननाशास्य तस्यापक्रमणाद् गुरोः (७) ।

अग्नौ प्रास्तानि चाज्यानि(८) न जीर्यन्ते ह(९)कानिचित्॥१७॥

---

( १ ) इदमपि श्लोकार्धं वेदभाष्यादेवोद्धृतम् ।

( २ ) 'त्वयि मां हन्तिरागता' इति वे० भा० ।

( ३ ) 'सञ्जग्राह' इति मु० बृ० ।

( ४ ) 'जातः' इति मु० बृ० ।

( ५ ) 'चैनम्' इति 'क' 'ख' 'ग' पुस्तकेषु ।

( ६ ) 'राजैनम् पुरो०' इति मु० बृ० ।

( ७ ) 'ऋषेः' इति मु० बृ० ।

( ८ ) 'हव्यानि' इति मु० बृ० ।

( ९ ) 'न ह्यपच्यन्त' इति मु० बृ० ।

ततः प्रव्यथितो राजा सोऽभिगम्य प्रसाद्य तम् ।
आनीय तं वृशं जानं (१) पुनरेव पुरोदधे ॥ १८ ॥

स प्रसन्नो (२) वृशोऽन्विच्छन् (३) हरमग्नेर्नृपक्षये ।
अविन्दत पिशाचीं तां जायां तस्य च भूपतेः ॥ १९ ॥

निषण्णः (४) स तया सार्धमासन्द्यां कशिपावपि ।
तामुपामन्त्रयाञ्चक्रे कमेतं त्वं युवेत्यृचा (ऋ० ५।२।२) ॥ २० ॥

हरः कुमाररूपेण ब्रुवंस्तामभ्यभाषत ।
वि ज्योतिषेति (ऋ०५।२।९) चोक्तायां सहसाग्निरुदज्ज्वलत् २१

(५) सहमानः समायान्तं प्रकाशं च प्रकाशयन् ।
पिशाचीमदहत् तां तु यत्र यत्र विवेश सा (६) ॥ २२ ॥

एष एव परामृष्टो भल्लविब्राह्मणे (७) दूत्र्चः ।
निदानसंज्ञके ग्रन्थे छन्दोगानामिति श्रुतिः (८) ॥२३॥ इति ।

अथ ताण्ड्ये ( ता० म० ब्रा० १३।३।१२ )—

"वार्शं भवति । वृशो वै (रा) जानस्त्र्यरुणस्य(९)त्रैधात्वस्यैक्ष्वाकस्य पुरोहित आसीत् । स ऐक्ष्वाकोऽधावयत ( न ) ब्राह्मणकुमारं

---

( १ ) 'स वशं राजा' इति 'ख' 'ग' पुस्तकयोः । 'सद्वृशं यातं०' इति 'क' पुस्तके ।

( २ ) अप्रसन्नो हरो० इति 'क' पुस्तके ।

( ३ ) 'अन्वैच्छद्' इति मु० बृ० ।

( ४ ) 'निवासः' इति 'क' 'ख' पुस्तकयोः ।

( ५ ) श्लोकार्धमिदं हस्तलिखितपुस्तकेषु नास्ति । मुग्धानल—सम्पादितबृहद्देवतायां दृश्यते तत् ।

( ६ ) 'पिशाचीमदहत्तां स यत्र चोपविवेश सा' इति मु० बृ० ।

( ७ ) 'भाल्लवि०' इति मु० बृ० । 'बहुविद्ब्राह्मणे' इति 'क' 'ख' पुस्तकयोः ।

( ८ ) '०मियं स्तुतिः' इति 'क' 'ख' पुस्तकयोः ।

( ९ ) क्रोडीकृतानि वर्णानि मुद्रितताण्ड्यमहाब्राह्मणपुस्तके न दृश्यन्ते ।

रथेन व्य ( व ) च्छिनत् । स पुरोहितमब्रवीत् । तत्र मा पुरोधाया-मिदमिद(१)मुपागादिति" । वृशोऽग्निं त्रिष्टुभा तुष्टाव । 'कं वीत्यृचोस्तु वृश एव' इत्यनुक्रमणी ( का० स० ऋ० ५।२ ) ।

वि ज्योतिषेति ज्वलयेद्यत्रेच्छेज्जातवेदसम् ।

तमग्निः सर्वतः पाति भद्रेण द्रविणेन च ॥

इति ऋग्विधाने (श्लो० २५२) ।

ऋचोऽयमर्थः । अयमग्निः ज्योतिषा तेजसा बृहता महता विभाति विशेषेण दीप्यते । ( अथ ) तथाभूतः सन् महित्वा स्वमहत्त्वेन विश्वानि सर्वाणि पदार्थजातानि आविष्कृणुते प्रकटीकरोति । किञ्च एवं प्रवृद्धोऽग्निः (२) अदेवीः अदेवनशीलाः आसुरीर्मायाः दुरेवाः दुःखगमनाः प्रसहते अभिभवति । प्रपरेत्येतस्य प्रातिलोम्यमिति यास्केनोक्तत्वात् ( नि० १.३ ) । किञ्च । रक्षसे विनिक्षे षष्ठ्यर्थे चतुर्थी । रक्षसो विनाशाय शृङ्गे शृङ्गाणि । डादेशः ( पा० ७।१।३९ ) । शृङ्गसदृशीर्ज्वालाः (३) शिशीते तीक्ष्णीकरोतीत्यर्थः । निश्यति शृङ्गे रक्षसो विनिक्षणनाय रक्षो रक्षितव्यमस्मादिति यास्कोक्तेः ( नि० ४. १८ ) ॥

इति श्रीद्याद्विवेदाविरचिते नीतिमञ्जरीभाष्ये वेदार्थप्रकाशे तृतीयाष्टके नीतिवाक्यानि समाप्तानि ॥ शुभमस्तु ॥

तृतीयाष्टकः समाप्तः ॥

---

( १ ) ० मिदमीदृगुपागादिति' ता० म० ब्रा० ।
( २ ) विवृद्धोऽग्निः इति 'क' 'ख' पुस्तकयोः ।
( ३ ) हिंसका ज्वालाः इति वे० भा० ।

॥ श्रीः ॥

# अथ चतुर्थाष्टकः ।

सरस्वतीमहं वन्दे सभाष्या नीतिमञ्जरी ।
द्याद्विवेदस्य चाङ्गस्य मुखे स्थित्वा कृता यया ॥ १ ॥
आख्यानपूर्विकान् धर्मान् (१) व्याख्याय व्याकृतिक्षमः ।
तृतीयेऽथ चतुर्थे (२) तु ब्रूते तान् लाघवादिह ॥ २ ॥

दातुर्दानदं मनः कर्कशं कर्त्तुं कः शक्नोतीत्याह—

को यष्टुः कर्कशं कर्त्तुं शक्नुयाद् दानदं मनः ।
गा दत्त्वा बभ्रवेऽतृप्तो ददौ घर्ममृणञ्चयः ॥७९॥

यष्टुर्यज्ञपरस्य दानदं मनः दाने कोमलं मनः कर्कशं कठोरं कर्त्तुं कः शक्नुयात् । कः समर्थो भवति अपि तु न कोपीत्यर्थः । कुतः । ऋणञ्चयदृष्टान्तेन द्रढयति यथा ऋणञ्चयो यज्ञदानमनस्कः बभ्रवे ऋषये गवां चत्वारि सहस्राणि चत्वारि शतानि एतत्संख्याका गाः दत्तवान् । तथापि दानेनातृप्तः सन् तस्मै पुनर्घर्मं सुवर्णमयं ( प्रवर्ग्याख्यं कर्मोपयुक्तं महावीरपात्रं ) ददौ दत्तवान् । एवंविधं दानदं मनः कर्कशं कर्त्तुं निवारयितुं कः शक्नोति ।

तदर्थेयमाख्यानपूर्वा ऋक् ( ऋ० ५.३०.१५ )—

चतुः सहस्रं गव्यस्य पश्वः प्रत्यग्रभीष्म रुशमेष्वग्ने ।
घर्मश्चित्तप्तः प्रवृजे य आसीदयस्मयस्तम्वादाम विप्राः ॥

चतुःऽसहस्रम् । गव्यस्य । पश्वः । प्रति । अग्र-

---

( १ ) 'साख्यानपूर्वकान् धर्मान्' इति 'ग' पुस्तके ।
( २ ) 'चतुर्थे द्या मडोडकुलजोऽवदत्' इति 'क' 'ख' पुस्तकयोः ।

भीष्म । रुशमेषु । अग्ने । घर्मः । चित् । तप्तः । प्रऽवृजे । यः । आसीत् । अयस्मयः । तम् । ॐ इति । आदाम । विप्राः ॥ ८८ ॥

'क्व स्य बभ्रुर्ऋणंचयोऽप्यत्र राजा स्तुतः' इत्यनुक्रमणिकाकारः ( का० स० ऋ० ५।३० )।

तथा बृहद्देवता ( ५।३३-३६ )—

अत्रेः सुतमृषिं बभ्रुमार्त्विज्याय ऋणञ्चयः ।
सहस्रदक्षिणे सोमे वव्रे तं सोऽप्ययाजयत् ॥३३॥
ददौ च रौशमो राजा सहस्राणि शतानि तु (१) ।
तस्मै चत्वारि चत्वारि महावीरं च काञ्चनम् ॥३४॥
प्रवर्ग्येषु महावीराः सौवर्णास्तस्य चाभवन् ।
प्रतिगृह्य ऋषिर्गच्छन् मध्यमेनाग्निना पथि ॥३५॥
पृष्ट इन्द्रेण चाचख्यौ भद्रं चतसृभिश्च यत् (२) ॥

भद्रमिदं रुशमा इत्यादिभिः चतुःसहस्रमित्यन्ताभिः ( ऋ० ५-३०-१२-१५ )।

बभ्रुर्ऋणञ्चयं त्रिष्टुभा तुष्टाव । ऋचोऽयमर्थः ।

हे अग्ने वयं रुशमेषु एतत्संज्ञकेषु जनपदेषु (३) गव्यस्य गवात्मकस्य पश्वः पशोः पशूनां जातावेकवचनम् । चतुःसहस्रं चत्वारि सहस्राणि प्रत्यग्रभीष्म प्रतिग्रहीतवन्तः स्म । तथा प्रवृजे प्रवञ्जनार्थं यस्तप्तः सन्तप्तः शोभनवर्णो घर्मश्चित (४) पूजनीयो महावीर आसीत् । चिदयं पूजायाम् । आचार्यश्चिदिदमिति

---

( १ ) 'च' इति 'ग' पुस्तके तथा मु० बृ० ।
( २ ) 'तत्' इति मु० बृ० ।
( ३ ) 'जनेषु' इति वे० भा० ।
( ४ ) 'घर्मश्चित् महावीर इव' इति वे० भा० ।

यास्कः ( नि० १.४ ) । सोऽयस्मयः अयोमयः हिरण्मयः (१) तं विप्रा मेधाविनो वयं ( रुशमेषु ) आदाम आदत्तवन्तः ॥

चतुः सहस्रमिति–सहस्रं सनिता० ( ऋ० प्रा० ५. २७ ) इति निषेधान्न षत्वम् ।

असुन्वन्तमिन्द्रस्त्यजेदित्याह—

सोमसुत् द्योतते विप्रो धनं लब्ध्वाऽऽत्मपोषकः ।
अलङ्करिष्णुरात्मानं यस्तमिन्द्रः परित्यजेत् ॥८०॥

यो द्विजः धनं लब्ध्वा सोमसुत् सोमं सुतवानिति सोमसुत् भवति । सोमे सुञः ( पा० ३।२।९० ) इति क्विप् । स लोकेषु द्योतते लोके तेजस्वी भवति । यो विप्रः धनं लब्ध्वा आत्मानं पुष्णाति आत्मानमलङ्करिष्णुः अलङ्कर्त्तुमिच्छति । अलंकृञ् निराकृञ्० ( पा० ३.२.१३६ ) इति इष्णुच् । इन्द्रस्तं परित्यजेत् ।

तदर्थमियमृक् ( ऋ० ९.३४.३ )–

यो अ॑स्मै घ्रं॒स उ॒त वा॒ य ऊध॑नि॒ सोमं॑ सु॒नोति॒ भव॑ति द्यु॒माँ अह॑ ।
अपा॑प श॒क्रस्त॑त॒नुष्टि॑मूहति त॒नूशु॑भ्रं म॒घवा॒ यः क॑वास॒खः ॥

यः । अ॒स्मै॒ । घ्रं॒से । उ॒त । वा॒ । यः । ऊध॑नि । सोम॑म् । सु॒नोति॑ । भव॑ति । द्यु॒ऽमान् । अह॑ । अप॑ऽअप । श॒क्रः । त॒त॒नुष्टि॑म् । ऊ॒ह॒ति॒ । त॒नू॒ऽशु॑भ्रम् । म॒घऽवा॑ । यः । क॒व॒ऽस॒खः ॥ ८९ ॥

संवरण इन्द्रं तुष्टाव जगत्या । अच्छावाकमध्यमपर्याये जागतं सूक्तम् । ‘अजातशत्रुमिति-जागतस्येति’ सूत्रम् ( सां० श्रौ० सू० ९।१४।३ )

---

( १ ) ‘यः कलश आसीद् अभवत् तमु- दोहनार्थं कलशं च’ इति वे० भा० ।

यो यजमानः अस्मै इन्द्राय ग्रंसे अहनि(१) ऊधनि रात्रौ(२) अहोरात्रयोरित्यर्थः । ग्रंस इत्यहः ( नि० १.९ ) रात्रिरप्यूध ( नि० १.७ ) इति यास्कः । सोमं सुनोति सोमाभिषवं करोति स यजमानः द्युमान् दीप्तिमान्भवति । अहेति विनिग्रहार्थीयः ( नि० १.५.१२ ) । किञ्च शक्रः समर्थोऽयमिन्द्रः (३) ततनुष्टिं (४) तितनिषुं धर्मसन्तानादपेतम् तनूशुभ्रं शुभ्रा शोभनीया अलङ्कारादिभिः तनूः यस्य तं तादृशं स्वपोषकं अयज्वानम् । मघवा धनवानिन्द्रः यः कवासखः कुत्सितपुरुषसहायः तमपोहति परित्यजति । आदरार्थमभ्यासः (५) । कवासख इति कवर्दु धान्य मिथु० ( ऋ० प्रा० ९.८ ) इति दीर्घः ।

यष्टा निर्धनोऽपि धनी भवति इत्यर्थं आह—

धन्यपि(६) निर्धनोऽयष्टा यष्टाऽधनो धनी भवेत् ।
यतोऽयष्टुर्गृहे शक्रो यष्टूर्थं तस्करोऽभवत् ॥८१॥

अयष्टा स्वपोषको धनी अपि निर्धनो भवति । देवानां हविःप्रदानाभावात् । यष्टा देवेड् अधनः निर्धनोऽपि धनी ज्ञेयः । हविःप्रीता 'इष्टान् भोगान् हि (७) वो देवा दास्यन्ते यज्ञभाविताः' इति भगवतोक्तत्वात् ।

---

(१) अहर्नामैतत् । गृह्यन्तेऽस्मिन् रसा इति ग्रंसः तस्मिन् इति वे० भा० ।

(२) अथवा यो यजमानः ऊधनि उद्धततरं भवति उन्नद्धमिति वा । ऊधो रात्रिः स्नेहप्रदानरसाभ्यामूधसि रात्रौ च समत्वाद् रात्रिरप्यूध उच्यते । अहनि रात्रौ च इति वे० भा० ।

(३) शक्तो ऽयमिन्द्रः इति वे० भा० ।

(४) ततं धर्मसन्ततिं तुदति वष्टि कामयते कामानिति ततनुष्टिः तम् इति वे० भा० ।

(५) 'अपरोऽपशब्दः पूरणः' इति वे० भा० ।

(६) धनवान् इति 'ग' पुस्तके ।

(७) 'कामान्' इति 'क' पुस्तके ।

(भ० गी० ३।११) तं सुखिनं कुर्वन्तीति यष्टुर्धनित्वमुक्तम्। यतोऽयष्टुरयज्वनो धनिनो गृहे शक्रः समर्थ इन्द्रः तस्करः चोरोऽभवद् बभूव। किमर्थं यष्टूर्थं यज्वनो दानाय।

तदर्थेयमृक् (ऋ० ९.३४.७)-

**समीं पणेरजति भोजनं मुषे वि दाशुषे भजति सूनरं वसु।**
**दुर्गे चन ध्रियते विश्व आ पुरु जनो यो अस्य तविषीमचुक्रुधत्**

सम्। ईम्। पणेः। अजति। भोजनम्। मुषे। वि। दाशुषे। भजति। सूनरम्। वसु। दुःऽगे। चन। ध्रियते। विश्वः। आ। पुरु। जनः। यः। अस्य। तविषीम्। अचुक्रुधत् ॥ ९० ॥

संवरणो जगत्या इन्द्रं तुष्टाव। ईमयमिन्द्रः पणेः वणिजः (इव) लुब्धकस्यायजमानस्य (१) गृहे भोजनं धनम्। भोजनं तनोति तन्नाम (निघण्टु २।१०)। मुषे चोरयितुं समजति सम्यग्गच्छति। अज गतौ। गत्वा च तस्य (२) पणेर्धनमपहृत्य दाशुषे हविर्दत्तवते यजमानाय वसु धनं सूनरं (३) शोभनैर्नरैरुपेतं विभजति विशेषेण ददाति। अयष्टुर्धनमाकृष्य यष्ट्रे प्रयच्छतीत्यर्थः(४)। योऽयष्टा जनः अस्येन्द्रस्य तविषीं बलं विहिताकरणादिनाऽचुक्रुधत स विश्वः सर्वः अयष्टा जनः पुरु पुरूणि महति दुर्गे (५)

---

(१) 'अदातुर्भोजनं धनमन्नं वा' इति वे० भा०।

(२) 'गत्वा चादाय दाशुषे हविर्दात्रे यजमानाय विभजति' इति वे० भा०।

(३) 'शोभनमनुष्यम्' इति वे० भा०।

(४) 'न केवलं वणिग्धनप्रदानमात्रं किन्तु पुरु पुरूणि बहून्यन्यान्यपि धनानि इति वे० भा०।

(५) 'दुर्गे चन दुःखेन गन्तव्ये' इति वे० भा०। दुःखे अपाथेये इति 'ग' पुस्तके।

दुःखे आपद्यपि इन्द्रेणाध्रियते आस्थाप्यते(१)। चनेति पादपूरणः। तस्मादयष्टारं निर्धनं कृत्वा इन्द्रो यष्टारं धनिनं करोतीति भावः।

पुंसां कीर्त्तिः रक्ष्येत्याह—

काये पातिनि का रक्षा(२) रक्ष्या कीर्त्तिरपातिनी।
(३)शत्रेः संवरणात्तिष्ठेत्कीर्त्तिः कायं न दानदम् ॥८२॥

विदुषा कीर्त्तिः यशः अपातिनी कदापि पतनशीला न भविष्यति सा यत्नतो रक्ष्या। परन्तु पातिनि पतनशीले क्षणध्वंसिनि काये शरीरे यत्नं कृत्वा का रक्षा। शत्रिदृष्टान्तेन द्रढयति। यथा शत्रिः संवरणाय धनं दत्त्वा अपातिनीं कीर्त्तिं ररक्ष। तस्य शत्रेः आग्निवेशेः संवरणादृषेः सहस्रसाम् (ऋ० ५. ३४. ९) इत्यनयोक्ता कीर्त्तिस्तिष्ठेत्। अत एवापातिनी। तस्य शरीरं दानदं कायं न तिष्ठेत्। अत एव पाति भवति।

तदर्थेयमृक् (ऋ० ५. ३४. ९)—

स॒ह॒स्र॒सामाग्निवे॑शिं गृणी॒षे शत्रि॑मग्न उप॒मां के॒तुम॒र्यः।
तस्मा॒ आपः॑ सं॒यतः॑ पीपयन्त॒ तस्मि॑न्क्ष॒त्रमम॑वत्त्वे॒षम॑स्तु॥

स॒ह॒स्र॒ऽसाम्। आग्नि॑ऽवेशिम्। गृ॒णी॒षे। शत्रि॑म्। अ॒ग्ने॒। उ॒प॒ऽमाम्। के॒तुम्। अ॒र्यः। तस्मै॑। आपः॑। स॒म्ऽयतः॑। पी॒प॒य॒न्त॒। तस्मि॑न्। क्ष॒त्रम्। अम॑ऽवत्। त्वे॒षम्। अ॒स्तु॥ ९१॥

---

(१) 'आपद्यपि विश्वः सर्वोऽपि दातृजनः आध्रियते आस्थाप्यते। यो जनः अस्येन्द्रस्य तविषीं बलमचुक्रुधत् विहिताकरणादिना तस्य पणेरजतीति पूर्वशेषः। यद्वा योऽस्य तविषीमचुक्रुधत् स सर्वोऽपि जनो दुर्गेचनाध्रियते। इन्द्रेण चनेत्येकपदमध्येतृसम्प्रदायप्राप्तम् इति वे० भा०।

(२) 'को रक्ष्यो' 'इति ग' पुस्तके।

(३) शत्रेःसंवरणात्कीर्त्तिःस्थिता कायो न दानदःइति'ग' पुस्तके।

आग्निवेशिसुतं शत्रिमसंख्यातधनप्रदम् ।
आशास्त ऋषिरन्त्यर्चा प्रजापतिसुतः सुधीः ॥

संवरणस्त्रिष्टुभा शत्रिं तुष्टाव । ऋचोऽयमर्थः । हे अग्ने (१) अर्यः अहं सहस्रसाम् अपरिमितधनप्रदम् आग्निवेशिम् अग्निवेशिसुतं शत्रिम् एतन्नामकं राजर्षिं गृणीषे गृणे स्तौमि । कीदृशं तम् । उपमां उपमानभूतं केतुं प्रज्ञापकम् । केतः केतुः तन्नाम (निघण्टु ३।९)। प्रख्यातम् (२) तस्मै शत्रये आपः संयतः सम्यग्गच्छन्त्यः पीपयन्त प्यायन्ताम् । तस्मिन् राज्ञि क्षत्रं धनम् । क्षत्रं भगः तन्नाम ( निघण्टु २।१० ) अमवत् बलसहितं त्वेषं दीप्तिमद्दीप्तियुक्तमस्तु । इति शत्रेः कीर्त्तिस्तिष्ठेदित्युक्तम् ।

उक्तञ्च—
काये पातिनि का रक्षा यशो रक्ष्यमपाति यत् ।
नरः पतितकायोऽपि यशसा सोऽपि धार्यते ॥

पुंसां (३) दाता श्रेष्ठ इत्यर्थ आह—

(४) दाता श्रेष्ठतमः पुंसामर्थिनां यो धनार्त्तिहृत् ।
श्यावाश्व इति के ष्ठेति तुष्टाव मरुतोऽर्थदान् ॥८३॥

पुंसां पुरुषाणां मध्ये यो दाता सोऽतिशयेन श्रेष्ठः । यो दाताऽर्थिनां याचकानां दारिद्र्यपीडितानां धनार्त्तिहृत् धनार्त्तिहन्ता भवति । तस्मादन्यः कः श्रेष्ठतमो भवतीत्यस्मिन्नर्थे श्यावाश्व ऋषिः के ष्ठेति के ष्ठा नरः ( ऋ० ९.६१.१-१९ ) इत्याभिर्ऋग्भिः अर्थदातॄन् मरुतः श्रेष्ठतमान् कृत्वा तुष्टाव अस्तौत् ।

---

( १ ) 'अङ्गनादिगुणविशिष्टेन्द्र' इति वे० भा० ।
( २ ) 'प्रख्यातम् इत्यर्थः' इति वे० भा० ।
( ३ ) 'पुरुषाणां मध्ये दाता श्रेष्ठ इत्यर्थ आह' इति 'ग' पुस्तके ।
( ४ ) अयं श्लोको 'ग' पुस्तके त्वेवम्-
पुंसां मध्ये त्वतिश्रेष्ठोऽर्थिनां दाता धनार्त्तिहृत् ।
अस्तौच्छ्यावाश्वोऽर्थदातॄन् केष्ठेति मरुतो यथा ॥( : )

तद्दर्शनायेतिहासः—

अत्राश्चर्यं पुरावृत्तमाहुरागमपारगाः ।

अर्चनानाः पुराऽऽत्रेयो दाल्भ्येन रथवीतिना ॥१॥

आर्त्विज्याय वृतो यज्ञे वितते हौत्र आस्थितः ।

रथवीतिसुतां कन्यां ददर्श पितुरन्तिके ॥२॥

ययाचे स्वकुमाराय श्यावाश्वाय च तां सुताम् (१) ।

सम्प्रदानमना (२) भार्यामपृच्छत् किं प्रयच्छसि ॥३॥

इति पृष्टा पुनः प्राह कथमस्मै प्रदास्यसि ।

इतः पूर्वं सुता दत्ता नासीदनृषये क्वचित् ॥ ४ ॥

तत्तथैवेति निश्चित्य प्रत्याचष्टार्चनानसम् ।

श्यावाश्वः संस्थिते यज्ञे तेन राज्ञा निराकृतः ॥ ५ ॥

तत्प्रत्याशान्वितो विप्रस्तपस्तेपे सुदारुणम् ।

ब्रह्मचर्यरतः शान्तो भिक्षार्थं पर्यटन् द्विजः ॥६॥

तरन्तमहिषीं साध्वीं बिभिक्षेऽसौ शशीयसीम् ।

सा सम्प्राप्यान्तिकं पत्युः प्रोवाचागतवानृषिः ॥७॥

इत्युक्तो नृपतिर्भार्यां प्रत्याहैनं प्रपूजय ।

साऽनुज्ञाता गवां यूथं प्रादादाभरणानि च ॥८॥

तरन्तोऽपि पुनस्तस्मै प्रादाद्धनमपेक्षितम् ।

दत्त्वा च पुरुमीह्ळस्य स्वानुजस्यान्तिकं प्रति ॥९॥

प्रेषयामास (३) तमृषिं सोऽपि त्वां मानयिष्यति ॥१०॥

तथेति राज्ञो वचनं निशम्य तद्भार्यया दर्शितसर्वमार्गः ।

गच्छन् शनैरर्धपथे मरुद्गणान् समानरूपांश्च(४) दिदृक्षयाऽऽगतान् ॥११॥

विलोक्य विप्रः सभयः प्रणम्य कृताञ्जलिः कण्टाकिताङ्गसङ्घः ।

---

(१) 'श्यावाश्वायाथ तं नृपम्' इति 'क' 'ख' पुस्तकयोः ।

(२) 'स प्रदानमनाः' इति वे० भा० ।

(३) प्रेरयामास इति वे० भा० ।

(४) समानरूपान्स इति वे० भा० ।

तुष्टाव हृष्टान् (१) मरुतो विशिष्टैरर्थैर्वचोभिः परितुष्टचित्तः ॥ १२ ॥
सम्प्राप्य सर्वं स्वमनीषितं तदा मरुद्गणेभ्यो मुदितात्मवद्भ्यः ॥१३॥
तदाऽभवदृषिः सूक्तद्रष्टा श्यावाश्वनामकः ।
पुरुमीह्ळगृहं पश्चाद्गत्वा लब्ध्वा गवां शतम् (२) ॥१४॥
दाल्भ्यो (३) मन्त्रदृशे राज्ञा चोदितः स्वसुतां ददौ ।
पुरुमीह्ळस्तरन्तश्च तद्भार्या च शशीयसी ॥ १५ ॥
दाल्भ्यो यो रथवीत्याख्यः सप्त ये मरुतां गणाः ।
ते तस्मै यद्ददुस्तुष्टास्तत्केष्ठेत्यत्र वर्ण्यते ॥१६॥ इति ।

तथा च बृहद्देवता ( ५।५०-८१ )—

राजर्षिरभवद्दार्भ्यो (४) रथवीतिरिति श्रुतः ।
स यक्ष्यमाणो राजर्षिरभिगम्य(५) प्रसाद्य च ॥५०॥
आत्मानं कार्यमर्थं च ख्यापयन् प्राञ्जलिः स्थितः ।
अवृणीतर्षिमात्रेयमार्त्विज्यायार्चनानसम् ॥५१॥
स सपुत्रोऽभ्यगच्छत्तं राजानं यज्ञसिद्धये ।
श्यावाश्वश्चात्रिपुत्रस्य(६) पुत्रः खल्वर्चनानसः ॥५२॥
साङ्गोपाङ्गान् सर्ववेदान् यः पित्राध्यापितो मुदा ।
अर्चनानाः सपुत्रोऽथ गत्वा नृपमयाजयत् ॥५३॥
यज्ञे च (७) विततेऽपश्यद्राजपुत्रीं यशस्विनीम् ।
स्नुषा मे राजपुत्री स्यादिति तस्य मनोऽभवत् ॥५४॥
श्यावाश्वस्य च तस्यां वै सक्तमासीत्तदा मनः ।
संयुज्यस्व मया राजन्निति याज्यं च सोऽब्रवीत् ॥५५॥

---

( १ ) 'द्रष्टान्' इति वे० भा० ।
( २ ) 'पश्चात्पुनर्गृहं गत्वा भूयो लब्ध्वा गवां शतम्' इति वे० भा० ।
( ३ ) 'दार्भ्यो' इति 'क' 'ख' पुस्तकयोः ।
( ४ ) 'दालभ्यो' इति वे० दी० ।
( ५ ) 'राजात्रिमभिगम्य' इति मु० बृ० तथा वे० दी० च ।
( ६ ) 'श्यावाश्वस्त्वत्रिपुत्रस्य' इति वे० दी० ।
( ७ ) 'यज्ञेऽथ' इति वे० दी० ।

(१) श्यावाश्वाय सुतां दित्सुर्महिषीं स्वां नृपोऽब्रवीत् ।
किं ते मतमहं कन्यां श्यावाश्वाय ददामि हि ॥५६॥
अत्रिपौत्रो(२)ऽदुर्बलो हि जामाता त्वावयोरिति ।
राजानमब्रवीत्सापि नृपर्षिकुलजा ह्यहम् ॥५७॥
नानृषिर्नौ तु जामाता नैष मन्त्रान् हि दृष्टवान् ।
ऋषये दीयतां कन्या वेदस्याम्बा भवेत्तथा (३) ॥
ऋषिं (४) मन्त्रदृशं वेदपितरं मन्यते यतः ॥५८॥
(५) प्रत्याचष्टे स तं राजा सह संमन्त्र्य भार्यया ॥
अनृषिर्नौ न (६) जामाता कश्चिद्भवितुमर्हति ॥५९॥
प्रत्याख्यात ऋषिस्तेन यज्ञे वृत्ते (७) न्यवर्तत ॥
श्यावाश्वस्य तु कन्यायां (८) मनो नैव न्यवर्तत ॥६०॥
ततस्तु तौ निवृत्येत (९) उभावेवाभिजग्मतुः ॥
(१०) शशीयसीं तरन्तं च पुरुमीह्ळं च पार्थिवम् ॥६१॥
तरन्तपुरुमीह्ळौ तु राजानौ वेददृश्युषी ।
ताभ्यां तु चक्रतुः पूजामृषिभ्यां नृपती स्वयम् ॥६२॥

---

(१) (५६–५८) सार्धश्लोकत्रयमिदं षड्गुरुशिष्यस्य वेदार्थदीपिकातो बृहद्देवतायां मुग्धानलेन तथा 'क' पुस्तकेऽपि ग्रन्थकारेण गृहीतम् ।

(२) 'अत्रिपुत्रो' इति मु० बृ० ।

(३) 'भवेद्यथा' इति वे० दी० ।

(४) 'ऋषिरू०' इति मु० बृ० तथा वे० दी० ।

(५) 'प्रावोचत्त्वथ०' इति 'क' पुस्तके । 'इति तद्वचनं श्रुत्वा प्रत्याचष्ट मुनिं नृपः' इति वे० दी० ।

(६) 'अनृषिर्नैव०' इति मु० बृ० तथा वे० दी० ।

(७) 'वृत्ते यज्ञे' इति मु० बृ० तथा वे० दी० ।

(८) 'कन्याया' इति मु० बृ० ।

(९) 'ततस्तौ तु निवर्तेताम्' इति मु० बृ० ।

(१०) अत्र वेदार्थदीपिकायां श्लोकाः किञ्चिद्भेदेन वर्तन्ते । अतस्तेऽत्र पृथक्त्वेनोद्धृताः । ते यथा–

(१) ऋषिपुत्रं महिष्याश्च दर्शयामास तं नृपः ।
तरन्तानुमता चैव (२) प्रादाद्बहुविधं वसु ॥६३॥
अजाविकं गवाश्वं च श्यावाश्वाय (३) शशीयसी ।
[ अत्रिं याज्यार्चितौ गत्वा पिता पुत्रौ स्वमाश्रमम् ॥६४॥
अभ्यवादयतामत्रिं महर्षिं दीप्ततेजसम् ।
श्यावाश्वस्य मनस्यासीत् मन्त्रस्यादर्शनादहम् ॥६५॥
न लब्धवांस्तु तां कन्यां (४) हन्त सर्वाङ्गसुन्दरीम् (५) ॥
अप्यहं मन्त्रदर्शी स्यां भवेद्धर्षो महान् मम ॥६६॥
इत्यरण्ये चिन्तयतः प्रादुरासीन्मरुद्गणः । ] (६)
ददर्श संस्थितान् पार्श्वे तुल्यरूपान् महात्मनः ॥६७॥
समानवयसश्चैव मरुतो रुक्मवक्षसः (७) ।
तांस्तुल्यवयसो दृष्ट्वा देवान्पुरुषविग्रहान् ॥ ६८ ॥
(८)श्यावाश्वो विस्मितोऽपृच्छत्केष्ठेति (ऋ॰ ५।६१।१) मरुतस्तदा ।
ततस्तु(९) मरुतो देवान् रुद्रसूनून्(१०)अबुध्यत ॥६९॥

---

तेन स्वस्थो वसेत्युक्तो नृपोऽगान्मन्दिरं प्रति ॥१२॥
अर्चनानाः सपुत्रोऽथ याज्यावस्य नृपौ पथि ।
तरन्तपुरुमीळ्हाख्यौ प्राप्य पुत्रमदर्शयत् ॥१३॥
तौ चक्रतुस्तयोः पूजां विददश्वसुतौ नृपौ ।
तरन्तमहिषी तत्र नाम्ना ख्याता शशीयसी ॥१४॥

(१) 'तस्यै स दर्शयामास त्वृषिपुत्रं महातपाः' इति वे॰ दी॰ ।
(२) 'सास्मै' इति वे॰ दी॰ ।
(३) 'महिषी सा' इति वे॰ दी॰ ।
(४) '॰ वानहं कन्यां' इति मु॰ बृ॰ ।
(५) 'सर्वाङ्गशोभनाम्' । इति मु॰ बृ॰ ।
(६) अतः प्राक् श्लोकत्रयं नीतिमञ्जर्या हस्तलिखितपुस्तकेषु न दृश्यते तदत्र बृहद्देवताया उद्धृतम् ।
(७) 'समानवयसो रुक्मवक्षसः पुरुषाकृतीन्' इति वे॰ दी॰ ।
(८) 'श्यावाश्वो विस्मितोऽपश्यत्केष्ठा नरचतुष्कतः' इति वे॰दी॰ ।
(९) 'ततः स' इति वे॰ दी॰ ।
(१०) 'रुद्रपुत्रान्' इति वे॰ दी॰ ।

य ईं वहन्त (ऋ०५.६१.११) इत्याभि (१) र्बुद्ध्वा तुष्टाव तानृषिः (२)
अतिक्रमं हि तं मेने ऋषिर्विपुलमात्मनः ॥ ७० ॥
यच्च (३) दृष्ट्वैव तुष्टाव यच्च केष्ठेति पृष्टवान् ।
स्तुताः स्तुत्या तया प्रीता गच्छन्तः पृश्निमातरः ॥७१॥
(४) अवमुच्य स्ववक्षोभ्यो रुक्मं तस्मै ददुस्तदा (५) ।
[ मरुत्सु तु प्रयातेषु श्यावाश्वः सुमहायशाः (६) ॥७२॥
रथवीतेर्दुहितरमगच्छन्मनसा तदा ।
स सद्य ऋषिरात्मानं (७) प्रवक्ष्यन् रथवीतये (८) ॥७३॥
एतं मे स्तोममित्याभ्यां(ऋ०५.६१.१७।१८)दौत्ये रात्रीं न्ययोजयत्।(९)
(१०) रात्रावनिद्रां जानामि मम रात्रि महाद्युते ।
रथवीतिर्महिष्या मां मन्त्रयुक्तं निवेदय ।
रथवीतिमपश्यन्तीं (११) सम्प्रेक्ष्यार्षेण चक्षुषा ॥७४॥
रम्ये हिमवतः पृष्ठे एष क्षेतीति (ऋ० ५.६१.१९) चाब्रवीत्(१२) ।

---

(१) य ईं वहन्तेत्यादिभि० इति वे० दी० ।
(२) 'तांस्तथा' इति मु० बृ० ।
(३) 'यन्न' इति मु० बृ० ।
(४) अस्य श्लोकार्धस्य स्थाने वेदार्थदीपिकायामयं श्लोकोदृश्यते ।
अथास्य मरुतो रुक्मान् स्ववक्षोभ्योऽवमुच्य ते ।
कण्ठे चासज्य त्रिदिवं प्रययुस्तस्य पश्यतः ॥
(५) इयं कथाऽत्रैव नीतिमञ्जर्यां हस्तलिखितपुस्तकेषु समाप्ता दृश्यते । कथापरिसमाप्त्यर्थमानन्तरीयाः श्लोका बृहद्देवताया वेदार्थदीपिकायाश्च अत्रोद्धृत्य लिखिताः ।
(६) अतः परं वेदभाष्ये श्लोकार्धमिदं दृश्यते 'प्रादुर्भूतार्षमात्मानं ज्ञात्वाऽत्रिकुलनन्दनः' इति ।
(७) 'ससत्यमृषिमात्मानम्' इति वे० भा० ।
(८) ऋषित्वमात्मनस्तत्र विवक्षू रथवीतये इति वे० दी०
(९) दूत्ये रात्रिं न्यवेदयत् इति वे० दी । 'दौत्ये रात्रिं न्यवेदयत्' इति वे० भा० ।
(१०) श्लोकोऽयं वेदार्थदीपिकायामेव वर्तते ।
(११) 'मपश्यन्तं' इति वे० भा० तथा वे० दी० ।
(१२) 'सोऽब्रवीत्' इति वे० भा० ।

ऋषेर्नियोगमाज्ञाय देव्या रात्र्या प्रचोदितः ॥७५॥
आदाय कन्यां तां (१) दार्भ्यं (२) उपेयायार्चनानसम् ।
पादौ तस्योपसंगृह्य स्थित्वा (३) प्रह्वः कृताञ्जलिः ॥७६॥
रथवीतिरहं दार्भ्य (४) इति नाम शशंस च (५) ।
मया संगतिमिच्छन्तं (६) त्वां प्रत्याचक्षि यत्पुरा ॥७७॥
तत्क्षमस्व नमस्तेऽस्तु मा च मे भगवन्क्रुधः (७) ।
ऋषेः पुत्रः स्वयमृषिः पिताऽसि भगवन्नृषेः (८) ॥७८॥
हन्त प्रतिगृहाणेमां स्नुषामित्येवमब्रवीत् (९) ।
(१०) पाद्यार्घ्यमधुपर्कैश्च पूजयित्वा स्वयं नृपः ॥७९॥

---

(१) 'कन्यकां' इति वे० भा० ।
(२) 'दातुम्' इति वे० भा०, 'दाल्भ्य' इति वे० दी० ।
(३) 'स्थितः' इति वे० दी० ।
(४) 'दाल्भ्य इति' वे० दी० ।
(५) 'इति नाम शशंस सः' इति वे० भा० । इति स्वं नाम चाब्रवीत् इति वे० दी० ।
(६) 'संयोगमिच्छन्तं' इति वे० भा० ।
(७) 'मे मा स्म भगवन्क्रुधीः' इति वे० भा० ।
(८) 'भगवानृषेः' इति वे० भा० ।
(९) 'मित्येनमब्रवीत्' इति वे० भा० ।
(१०) एतत्सन्दर्भमाश्रित्य अतः परमपि षट् श्लोका वेदार्थदीपिकायां दृश्यन्ते । तेषां त्रय एवात्रोपरिष्टादुद्धृताः । अपरे च सूक्तार्थं विशदीकुर्वन्तीति मूलत एव विद्वद्भिर्विलोकनीयाः ।

वेदभाष्ये तु—
'तस्मै ददावश्वशतं स राजा स्वलङ्कृतां चापि सुतां स्नुषार्थम् ।
विवाहकालेऽपि ददौ नरेन्द्रः शतं हयानां दुहितुः सहस्रम् ॥
गवां सहस्रं वसु च प्रभूतं तस्मै तपोऽन्तेऽथ वनं जगाम' ।

तथा चान्यत्र—
कन्यां दत्वा कृतार्थं तं श्यावाश्वोऽथ वनं गतम् ।
रथवीतिमपश्यन्तं संप्रेक्ष्यार्षेण चक्षुषा ।
इत्यादि ।

शुल्कमश्वशतं दत्त्वा अनुजज्ञे गृहान्प्रति ।
शशीयसी तरन्तं च पुरुमीह्ळं च पार्थिवम् ॥८०॥
षड्भिः सनदिति (ऋ० ९.६१.९-१०) स्तुत्वा जगामार्चिरपि क्षयम् ॥
अत्र वेदार्थदीपिकायां षड्गुरुशिष्यः—
पाद्यार्घ्यं मधुपर्कं च शुल्कमश्वशतं तथा ।
पूर्वं दत्त्वाऽत्रिपुत्राय श्यावाश्वाय ददौ सुताम् ॥३२॥
रुक्माभरणयुक्तं तु सोऽत्रिर्दृष्ट्वा स्वपौत्रकम् ।
महान्प्रसादो मरुतामिति हृष्टो बभूव ह ॥३३॥
अथात्रिः पुत्रमित्येव श्यावाश्वं बह्वमन्यत ।
श्यावाश्वः कृतदारोऽस्तौत् स्वोपकारकरान्बहून् ॥३४॥ ] (१)

तथाऽनुक्रमणी—"केष्ठैकोना गायत्रं श्यावाश्वोऽत्र वैददश्वी तरन्तपुरुमीह्ळौ दाल्भ्यं रथवीतिं मरुतश्च दानतुष्टः प्रशशंस । बुद्ध्वा च तरन्तमहिषीं शशीयसीं पञ्चम्यनुष्टुप् नवमी सतोबृहती" इति । (का० स० ऋ० ९।६१)

तथा पुरुषमेधे नाराशंसमेतत्सूक्तं विनियुक्तम् । तथा सूत्रम् श्यावाश्वं तृतीयं यथा । श्यावाश्व अर्चनानसो विददश्वौ सनिं ससान'। केष्ठा नर इति च सूक्तमिति च ( सां० श्रौ० सू० १६।११।७-९ ) ।

येन नराः प्रशस्यन्ते स नाराशंसो मन्त्रः ( नि० ९।९ ) इति यास्कवचनान्नाराशंससंज्ञा ज्ञेया ।

तत्र ऋक् ( ऋ०. ९.६१.१ )–

**के ष्ठां नरः श्रेष्ठतमा य एकएक आयय । परमस्याः परावतः ॥**

**के । स्थ । नरः । श्रेष्ठऽतमाः । यः । एकःऽएकः । आऽयय । परमस्याः । पराऽवतः ॥ ९२ ॥**

---

( १ ) इमां कथामधिकृत्यास्य सूक्तस्य ( ऋ० ५।६१ ) पञ्च ऋचोऽत्रोदाहृताः । ताश्च १, ६, ८, १७, १९ संख्यका भवन्ति ता उपरिष्टाद् द्रष्टव्याः ।

श्यावाश्वो गायत्र्या मरुतोऽपृच्छत् । ऋचोऽयमर्थः ।

हे नरः नेतारो मरुतः यूयं श्रेष्ठतमाः अत्यन्तश्रेष्ठाः के ष्ठ के स्थ के भवथ । एवं स्वरूपानिश्चयात् सन्दिह्य ब्रवीति । ये यूयं एकएकः प्रत्येकं आयय आगच्छथ । कस्मादित्युच्यते । परमस्याः परावतः अत्यन्तदूरदेशादन्तरिक्षादित्यर्थः (१) । परावत इति दूरस्येति निघण्टुः ( ३।२६ ) ।

के ष्ठेति 'सितां सधस्थात्स्तनिहि०' ( ऋ० प्रा० ५।१२ ) इति षत्वे प्राप्ते 'अन्यैरेकारात्' ( ऋ० प्रा० ५।१ ) इति निषिद्धे 'सूरिभिष्याम दिवि षंतु के ष्ठ०' (ऋ० प्रा० ५।१७) इति निपातनात् षत्वम् । दधिम मदतादित्वाद्दीर्घः ( ऋ० प्रा० ८।१९ ) ।

श्रेष्ठतमा इति दृष्ट्वा दातारं श्रेष्ठतममुक्तवान् ।

जातिं परिहृत्य गुणेष्वादरं कुर्यादित्यर्थं आह (२)—

गुणेष्वेवादरं कुर्यान् नजातौ जातु तत्त्ववित् ।
शशीयसी स्तुता पुंसः श्यावाश्वेन गरीयसी ॥८४॥

यस्तत्त्ववित् सगुणेष्वेव यत्र गुणास्तत्रादरं कुर्यात् । जातु कदाचित् जातौ प्रशस्यजातौ न कुर्यात् । श्यावाश्ववत् । यथा श्यावाश्वेन शशीयस्यां दानादिबहवो गुणा दृष्टाः । तान् गुणान् दृष्ट्वा साऽज्ञा स्त्र्यपि पुंसः अदातुः पुरुषादियं गरीयसी श्रेष्ठा इति स्तुता । तेन तस्याः स्त्रीत्वादप्रशस्तजातेर्गुणबाहुल्याद् गुणेष्वेवादरः कृत इत्यर्थः ।

तदर्थेयमृक्—( ऋ० ९. ६१. ६ )

उत त्वा स्त्री शशीयसी पुंसो भवति वस्यसी ।
अदेवत्रादराधसः ।

---

( १ ) 'आकाशात्' इति 'ग' पुस्तके ।

( २ ) 'यत्र गुणास्तत्रादरं कुर्यात्' इति 'ख' पुस्तके ।

उत । त्वा । स्त्री । शशींयसी । पुंसः । भवति ।
वस्यंसी । अदेंवऽत्रात् । अराधसंः ॥ ९३ ॥

श्यावाश्वो गायत्र्या शशीयसीं तुष्टाव ।

ऋचोऽयमर्थः । उतापि च त्वा एका शशीयसी (१) स्त्री । त्व शब्द एकपर्यायः । अप्येकः पश्यन्निति यास्कः ( नि० १।१९ ) । त्वसमासिमेत्यनुच्चानीति निघातः (२) । सा एव अदेवत्रात् (३) देवान् यन्नायते स्तुत्यादिना स देवत्रः ततोऽन्योऽदेवत्रः तस्मात् । अराधसः (४) न विद्यते यजनयोग्यं राधो धनं यस्य सः अराधाः तस्मात्पुंसः पुरुषात् वस्यसी वसीयसी (५) श्रेष्ठा भवति ।

तस्माद्गुणेष्वेवादरं कुर्यादित्यर्थः ।

या भर्त्तुरादेशवर्त्तिनी साऽर्धशरीरिणीत्यर्थ आह—

आदेशवर्त्तिनी पत्युर्भवेत् साऽर्धशरीरिणी ।
कः शक्नोति स्तुतिं कर्त्तुं तरन्तस्येव तत्पतेः ॥८५॥

या स्त्री भर्तुः भरणशीलस्य पत्युः आदेशवर्त्तिनी भवति साऽर्धशरीरिणी भवति । नान्या । तत्पतिः तस्याः पतिः तस्य आदेशवर्त्तिन्याः पत्युः । पतिः समास एव ( पा० १. ४. ८ ) इतिघिसंज्ञा । भाग्यत्वात् स्तुतिं कर्तुं वक्तुं कः पुमान् शक्नोति । आदेशवर्त्तिन्याः पत्युः स्तुतिं वक्तुं समर्थः कोपि न भवतीत्यर्थः । कस्येव तरन्तस्येव । यथा शशीयस्या आदेशवर्तिन्याः पत्युः तरन्तस्य श्यावाश्व ऋषिः स्तुतिं वक्तुं न शशाक ।

---

( १ ) 'शशीयसीति एतन्महिष्या नाम' इति वे० भा० ।

( २ ) यद्वा उतेत्ययमेवकारार्थे। स्त्रीषु सैव प्रशस्येत्यर्थः। त्वसमसिमनेमेत्यनुच्चानीति वचनात् 'त्वेति निघातः' इति वे० भा० ।

( ३ ) 'देवा न येन त्रायन्ते स्तुत्यादिना स अदेवत्रः तस्माद्' इति वे० भा० ।

( ४ ) 'राधो धनम् दानार्हधनरहिताल्लुब्धकादित्यर्थः' इति वे०भा०

( ५ ) 'वरीयसी' इति 'ग' पुस्तके ।

तदर्थेयमृक्–( ऋ० ९. ६१. ८ )

उत घा नेमो अस्तुतः पुमाँ इति ब्रुवे पणिः ।
स वैरदेय इत्समः ॥

उत । घ । नेमः । अस्तुतः । पुमान् । इति । ब्रुवे । पणिः । सः । वैरऽदेये । इत् । समः ॥१४॥

श्यावाश्वस्तरन्तं गायत्र्या तुष्टाव ।

ऋचोऽयमर्थः (१) पणिः स्तोता । पण स्तुतौ । नेमः शशीयस्याः आदेशवर्त्तिन्याः अर्धभूतः । तरन्तः पुमान पुरुमनाः अस्तुतः । वहुधा स्तुतोऽपि अनिभाग्यत्वात अस्तुत एव इति ब्रुवे । स्तुति वक्तुं न शक्नोमीति । त्वो नेम इत्यर्धवाचिनौ (नि० ३।२०) । जायापत्योर्मिलितयोरेककार्यकर्तृत्वादेक (२) एव । 'अर्द्धो ह वा एष आत्मनो यज्जायेति' शतपथे ( श० ब्रा० ५।२।१।१० ) तस्मान्नेम इत्युक्तम् । स तरन्तः वैरदेये (३) अमित्रान् वारयन्तीति वीरास्तैर्दातव्यं धनं वैरदेयं तस्मिन् धने सम सर्वेभ्यो दातेत्यर्थः (४)।

प्रेरकात् कार्यसिद्धिर्भवतीत्यर्थ (५) आह—

राजदर्शन(६)भिक्षायां कन्यासंवरणे तथा ।
प्रेरकात् कार्यसिद्धिः स्याच्छावाश्वस्य यथा पुरा ॥८६॥

---

( १ ) उतघापि च । घेति पूरणः । नेमः-त्वो नेम इत्यर्धस्येति निरुक्तम् ( नि० ३।२० ) इत्यत्राधिकं वे० भा० ।

( २ ) नेमः अर्धः जायापत्योर्मिलित्वैककार्यकर्तृत्वादेक एव पदार्थः । अर्धशरीरस्य भार्येत्यादिस्मृतेः इति वे० भा० ।

( ३ ) वीरा धनानां प्रेरयितारो दानशीलाः तैर्दातव्यं धनं वैरदेयम् इति वे० भा० ।

( ४ ) 'इदिति पूरणः' इति वे० भा० ।

( ५ ) 'कार्यसिद्धिरित्यर्थं आह, इति 'ग'पुस्तके ।

( ६ ) 'राजसंसदि' इति 'क' पुस्तके ।

राज्ञो दर्शने भिक्षुकस्य भिक्षायां कन्यायाः संवरणे ग्रहणे श्यावाश्वस्य ऋषेर्यथा पुरा कार्यसिद्धिर्जाता । प्रेरकाच्छशीयस्याः राज्ञः तरन्तस्य दर्शनं पुरुमीह्ळतो भिक्षा सञ्जाता तथान्येषामपि । एतेषु प्रेरकं विना कार्यसिद्धिर्न जायते । श्यावाश्वस्य प्रेरकात् कन्यासंवरणं जातम् ।

तदर्थेयमाख्यानपूर्वा ऋक् ( ऋ० ५. ६१. १७ )—

**एतं मे स्तोमंमूर्म्ये दार्भ्याय परां वह ।**

**गिरों देवि रथीरिंव ॥**

**एतम् । मे । स्तोमम् । ऊर्म्ये । दार्भ्याय परां । वह ।**
**गिरः । देवि । रथीःऽइव ॥ ९९ ॥**

श्यावाश्वो गायत्र्या रात्रिं विवाहदौत्ये प्रेरयति ।

सम्पन्नऋषिभावस्य श्यावाश्वस्यार्चनानसः ।
रथवीतिसुतायाश्च विवाहं शौनकोऽब्रवीत् ॥ १ ॥
मरुत्सु तु प्रयातेषु श्यावाश्वः सुमहायशाः ।
प्रादुर्भूतार्षमात्मानं (१) ज्ञात्वाऽत्रिकुलनन्दनः ॥ २ ॥
रथवीतेर्दुहितरमगच्छन्मनसा तदा ।
स सत्यमृषिमात्मानं प्रवक्ष्यन् रथवीतये ॥ ३ ॥
एतं मे स्तोममित्याभ्यां दौत्ये रात्रिं न्यवेदयत् ।
ऋषेर्नियोगमाज्ञाय देव्या रात्र्या प्रणोदितः ॥ ४ ॥
आदाय कन्यकां दातुमुपेयायार्चनानसम् ।
पादौ तस्योपसंगृह्य स्थित्वा प्रह्वः कृताञ्जलिः ॥ ५ ॥
रथवीतिरहं दार्भ्य इति नाम शशंस सः ।
मया संयोगमिच्छन्तं त्वां प्रत्याचक्षि यत्पुरा ॥ ६ ॥
तत्क्षमस्व नमस्तेऽस्तु मे मा स्म भगवन् क्रुधीः ।
ऋषेः पुत्रः स्वयमृषिः पितासि भगवन्नृषेः ॥ ७ ॥

---

( १ ) 'प्रादुर्भूतर्षिमात्मानम्' इति 'क' पुस्तके ।

हन्त प्रतिगृह्णाणेमां स्नुषामित्येनमब्रवीत् ॥ ८ ॥

तस्मै ददावश्वशतं स राजा स्वलङ्कृतां चापि सुतां स्नुषार्थम् ।

गवां सहस्रं वसु च प्रभूतं तप्तुं तपोऽन्तेऽथ वनं जगाम ॥ ९ ॥

अयमृचोऽर्थः । हे ऊर्म्ये रात्रि देवि । रात्र्यास्तन्नाम (१) ( निघण्टु १।७ ) । मे मदीयम् एतं स्तोमं मरुद्भ्यः कृतं स्तोत्रम् अहं मन्त्रदृग्भूत्वा मरुदादीन् स्तुतवानित्येवं परा मत्तः पराङ्मुखी दार्भ्याभिमुखी (२) भूत्वा वह प्रापय । तत्र दृष्टान्तः । (३) हे देवि गिरः स्तुतीः मरुद्विषयाः रथेऽभिप्रेतं वस्तु रथीर्यथा स्थापयित्वा अभिमनप्रदेशं (४) प्रापयति तद्वत् ।

एवं प्रेरकात् कार्यसिद्धिर्जाता ।

वयसः परिणामे माया त्याज्येत्यर्थं (५) आह—

कृत्वान्ते सुकृतं प्राज्ञो न पुत्रस्त्रीरतो (६) भवेत् ।

श्यावाश्वाय सुतां दत्त्वा रथवीतिर्वनं ययौ ॥८७॥

प्राज्ञः पुमान् पूर्ववयसि सुकृतं यज्ञकन्यादानादिसुकृतसञ्चयं कृत्वा अन्ते वयसि मायया पुत्रस्त्रीरतो न भवेत् । किन्तु तपोवनरतो भवेत् । रथवीतिवत् । यथा रथवीतिः पूर्वे वयसि यज्ञादिसुकृतं कृत्वा श्यावाश्वाय कन्यां दत्त्वा अन्ते वयसि प्राप्ते वनं ययौ ।

तदर्थेयमृक् ( ऋ० ९. ६१. १९ )—

एष क्षेति रथवीतिर्मघवा गोमतीरनु ।

पर्वतेष्वपश्रितः ॥

---

( १ ) ऊर्म्येति रात्रिनाम इति वे० भा० ।

( २ ) 'दार्भ्यायाभिमुखी इति 'ग' पुस्तके । दार्भ्याय श्यावाश्वाय' इति वे० भा० ।

( ३ ) 'तदेवादरार्थमुच्यते हे रात्रि देवि' इति वे० भा० ।

( ४ ) 'अभिमतं देशम्' इति 'क' 'ग' पुस्तकयोः ।

( ५ ) 'त्याज्येत्याह' इति 'ग' पुस्तके ।

( ६ ) 'न पुनः स्त्रीरतो०' इति 'ग' पुस्तके ।

एषः । क्षेति । रथऽवीतिः । मघऽवा । गोऽमतीः ।

अनु । पर्वतेषु । अपऽश्रितः ॥ ९९ ॥

श्यावाश्वो गायत्र्या रथवीतिं तुष्टाव ।

कन्यां दत्त्वा कृतार्थं तं श्यावाश्वोऽथ वनं गतम् ।

रथवीतिं तपस्यन्तं सम्प्रेक्ष्यार्षेण चक्षुषा ॥

रम्ये हिमवतः पृष्ठे एष क्षेतीति ( ऋ० ५।६१।१९ ) सोऽब्रवीत् ।

ऋचोऽयमर्थः । एष रथवीतिः मघवा धनवान् गोमतीः उदकवतीः नदीरनु अनुसृत्य पर्वतेषु हिमवत्प्रान्तेषु अपाश्रितः आश्रितः सन् क्षेति निवसति । तत्रान्ते वयसि निवासमकरोदित्यर्थः ।

एष क्षेति—एष स्य स चेति ऊष्मा परिलुप्यते त्रयाणाम् ( ऋ० प्रा० २।८।११ ) इत्यूष्मलोपः ।

काष्ठमपि स्तुतं सद् विकासितं (१) भवतीत्याह—

(२) अचेतनानि काष्ठानि विकसन्ति स्तुतान्यपि ।

स्तुत्या विकसिता वीति पेटिका सप्तवध्रिणा ॥

यद्यपि काष्ठानि अचेतनानि चेतनारहितानि भवन्ति तथापि स्तुतानि विकसन्ति विवृतानि भवन्ति । यथा सप्तवध्रिणा ऋषिणा वीति विजहीति ( ऋ० ५. ७८. ५ ) स्तुत्या पेटिका काष्ठमयी विकसिता विवृता कृता । स्तुत्या सर्वं विकाश्यते इति स्तुतिप्रशंसोक्ता ।

तदर्थेयमितिहासपूर्विका ऋक् ( ऋ० ५.७८.५ )—

विजिहीष्व वनस्पते योनिः सूष्यन्त्या इव ।

श्रुतं मे अश्विना हवं सप्तवध्रिं च मुञ्चतम् ॥

---

( १ ) 'विकसतीत्याह' इति 'ग' पुस्तके ।

( २ ) श्लोकोऽयं 'ग' पुस्तके त्वेवं दृश्यते—

'अचेतनान्यपि ततः स्तुतानि विकसन्ति हि ।

यत्सप्तवध्रिणा वीति पेटिकाऽपि विकासिता' ॥ इति ।

वि । जिहीष्व । वनस्पते । योनिः । सूष्यन्त्याःऽइव ।

श्रुतम् । मे । अश्विना । हवम् । सप्तऽवंध्रिम् । च ।

मुञ्चतम् ॥ १६ ॥

अत्र ब्रुवन्तीतिहासं सप्तवध्रेः पुराविदः ।

भ्रातृव्याः(१) पेटिकायां तमृषिं प्रक्षिप्य यत्नतः ॥१॥

मुद्रां कृत्वा गृहे स्वीये (२) रक्षयित्वा (३) न्यवेशयन् ।

न सङ्गच्छेत भार्यां स्वां (५) यथा रात्रौ तथा कृतम् ॥२॥

प्रातः प्रातः समुद्घाट्य निर्मथिष्यन्ति (६) तं मुनिम् ।

एवं स्थित्वा चिरं कालं पेटायां दुःखितः कृशः ॥३॥

उपायं चिन्तयामास निर्गमस्य चिरं मुनिः ।

हृदि निश्चित्य नासत्यावस्तौषीद् हृष्टमानसः ॥४॥

तमश्विनौ समागत्य समुद्घाट्य च पेटिकाम् ।

उद्धृत्य तमृषिं शीघ्रं तावदृष्टौ बभूवतुः ॥५॥

स ऋषिर्भार्यया सार्धं रमित्वाऽथ(७) पुनर्भयात् ।

प्रातरेत्य पुनः पेटां प्रविश्य प्रागिव स्थितः ॥६॥

पेटानिवाससमये दृष्टवानृग्द्वयं तथा (८) ॥ ७ ॥

सप्तवध्रिरश्विनावनुष्टुभा तुष्टाव । ऋचोऽयमर्थः । हे वनस्पते वनस्पतिविकाररूपे पेटिके विजिहीष्व विगच्छ विवृता भव । सूष्यन्त्याः प्रसोष्यमाणायाः स्त्रियाः (९) योनिरिव । प्रसव-

(१) 'भ्रातृव्यम्' इति 'ग' पुस्तके, 'भ्रातृव्यः' इति 'क' पुस्तके ।

(२) 'स्वीयगृहे' इति 'ग' पुस्तके ।

(३) 'रक्षां कृत्वा' इति 'ग' पुस्तके ।

(४) 'न्यवेशयत्' इति 'क' पुस्तके ।

(५) 'भार्यां स' इति 'ग' पुस्तके ।

(६) 'निर्गमिष्यन्ति तं' इति 'ग' पुस्तके ।

(७) 'रमयित्वा' इति 'क' 'ग' पुस्तकयोः ।

(८) 'तदा' इति वे० भा० ।

(९) 'स्त्रियः' इति 'ग' पुस्तके ।

काले यथा स्त्रिया योनिर्विंङ्गता भवति तथा भवेति । षूङ् प्राणिप्रसवे लटि शतरि (१) रूपं तदर्थं हे अश्विना अश्विनौ मे मम हवं आह्वानं श्रुतं शृणुतम् । श्रुत्वा आगत्य च सप्तवध्रिं मामृषिं मुञ्चतं मोचयतम् ।

तथा ऋग्विधाने ( श्लो० २६०-२६१ )—

विजिहीष्व वनस्पते तादिदं च्यावनं स्मृतम् ॥२६०॥
यं च्यावयितुकामः स्याच्च्यावयेत्तमिदं जपन् (२) ।

भरद्वाजस्योत्पत्तिदर्शनायेतिहासः (३)-

पुरुषेण प्रजोत्पत्तौ कर्तव्य आदरो यतः ।
अत्र्यादीनसृजत् सत्रं कृत्वाऽऽदरात्प्रजापतिः ॥८८॥

प्रजोत्पत्तौ प्रजोत्पत्त्यर्थं महानादरः पुरुषेण कर्त्तव्यः । 'येन केनाप्युपायेन पुत्रस्य जननं चरेत्' इत्युक्तत्वात् । प्रजापतिदृष्टान्तेन द्रढयति । प्रजापतिरपि ब्रह्मा प्रजाकामः सन् प्रजाप्रदं सत्रं कृत्वा 'त्रिसांवत्सरं प्रजापतिकामानाम्' ( सां० श्रौ० सू० १३।२८।४ ) इति दर्शनात् । आदरतो अत्र्यादीन् प्रजाः असृजत् ससर्ज ।

---

( १ ) 'शत्रन्तं रूपम्' इति 'ग' पुस्तके । वेदभाष्ये तु लटि शतरि रूपं, संज्ञापूर्वस्य विधेरनित्यत्वाद्गुणाभावः । प्रसवोन्मुख्याः स्त्रियाः योनिरिवेति ।

( २ ) अतः परमृग्विधानस्थश्लोका इमामेव ऋचमधिकृत्य वर्तन्ते । ते यथा—

'द्विषन्तं वा पदाऽऽक्रम्य भूमौ पांसुमयीं कृतिम् ॥ २६१ ॥
निष्पेदयन्निव सङ्ग्रामाच्च्यवते नात्र संशयः ॥
स्त्रियं गर्भप्रमूढां वा पाययेदनुमन्त्रितम् ॥२६२॥
उदकं च्यावनेनैव गर्भोऽधश्च्यवते सुखम् ॥

( ३ ) भरद्वाजस्योत्पत्तिदर्शनाय सुभाषितार्थदर्शनाय चेतिहासः इति 'क' 'ख' पुस्तकयोः ।

अत्र बृहद्देवता ( ५।९७-१०३ )—

त्रिसांवत्सरिकं सत्रं प्रजाकामः प्रजापतिः ।
आहरत् सहितः साध्यैर्विश्वेदेवैः सहेति च (१) ॥९७॥
तत्र वाग् दीक्षणीयायामाजगाम शरीरिणी ।
तां दृष्ट्वा युगपत् तत्र कस्याथ वरुणस्य च ॥ ९८ ॥
शुक्रं चस्कन्द तद्वायुरग्नौ प्रास्यद् यदृच्छया (२) ।
ततोऽर्चिषो (३) भृगुर्जज्ञेऽङ्गारेभ्योऽङ्गिरा (४) ऋषिः ॥ ९९ ॥
प्रजापतिसुतौ (५) दृष्ट्वा तुष्टा (६) वागभ्यभाषत ।
आभ्यामृषिस्तृतीयोऽपि भवेदत्रैव (७) मे सुतः ॥ १०० ॥
प्रजापतिस्तथेत्युक्तः प्रत्यभाषत भारतीम् (८) ।
ऋषिरात्रिस्ततो जज्ञे सूर्यानलसमद्युतिः ॥ १०१ ॥
योऽङ्गारेभ्य ऋषिर्जज्ञे तस्य पुत्रो बृहस्पतिः ।
बृहस्पतेर्भरद्वाजो विदथीति य उच्यते (९) ॥ १०२ ॥

तथाऽऽह यास्कः । अर्चिषि भृगुः सम्बभूवेत्यादि (नि० ३. १७.) बृहस्पतेर्भरद्वाजो जात इत्युक्तम् ।

---

( १ ) 'विश्वैश्चैवेति नः श्रुतम्' इति वे० दी० ।। 'विश्वैर्देवैः सहेति च' इति मु० बृ० ।

( २ ) 'तद्द्वाभ्यामग्नौ प्रास्तं यदृच्छया' इति 'ग' पुस्तके ।

( ३ ) 'ततोऽर्चिभ्यो' इति वे० दी०, मु० बृ० ।

( ४ ) 'अङ्गारेष्वङ्गिरा' इति वे० दी० मु० बृ० ।

( ५ ) 'प्रजापतिं सुतौ' इति वे० दी०, मु० बृ० ।

( ६ ) 'दृ ( हृ ? ) ष्टा' इति मु० बृ० 'क' पुस्तके च । 'दृष्ट्वा' इति 'ग' पुस्तके ।

( ७ ) 'भवत्वत्रैव' इति वे० दी० ।

( ८ ) प्रजापतिस्तथेत्याह भाषमाणां तु भारतीम् इति वे० दी० ।

( ९ ) अतः परं बृहद्देवतायां द्वे पङ्क्ती दृश्येते । ते यथा—
'मरुत्स्वासीद् गुरुर्यश्च स एवाङ्गिरसो नपात् ।
सपुत्रस्य तु तस्यैतन्मण्डलं षष्ठमुच्यते ॥ १०३ ॥ इति

परदारपराङ्मुखः श्रेयानित्यर्थे बार्हस्पत्यभरद्वाजस्योत्पत्तिं (१) दर्शयन्नाह—

**स स्याद् बृहस्पतेः श्रेयान् परदारपराङ्मुखः (२) ।**
**भरद्वाजस्तदा जातो भ्रातृस्त्रीगो बृहस्पतिः ॥८९॥**

यः पुमान् परदारपराङ्मुखो भवति स बृहस्पतेरपि श्रेयान् भवति । बृहस्पतिरपि परदारपराङ्मुखो नाऽभूत् । कुतः । भरद्वाजऋषिस्तदा तस्मिन् काले जातः । यदा बृहस्पतिः बृहतां पतिः । तद्बृहतोः कर० ( पा० ६. १. १५७ वा० ) इति सुट् । ज्येष्ठभ्रातृस्त्रीगोऽभूत् । ज्येष्ठभ्रातृस्त्रियं ममतामभजत् । तद्दर्शयति । ममताया गर्भभूतं दीर्घतमसं शप्त्वा दीर्घतमस उत्पत्तिः पूर्वमुक्ता ( पृ० ११९–१२१ ) । ततो बृहस्पतिर्भ्रातृजायां ममतां चकमे ।

शप्त्वा चैनं (३) ममतया सम्बभूव बृहस्पतिः ।
(४) [ ततो बृहस्पतेर्गर्भो ममतायामभूत्तथा ॥ १० ॥
पूर्वगर्भो दीर्घतमास्तदथाच्यावयद् बलात् ।
स्वमातुरुदराद्गर्भः स्वयं च निरगात्ततः ॥ ११ ॥
बृहस्पतेः स पुत्रो वै भरद्वाज इति श्रुतः । ]
भरद्वाजं हि सा जज्ञे चेतसो हि ( वै )बृहस्पतेः ।
अत्रान्तरे तु भरतो (५) दौष्यन्तिश्चक्रवर्त्यभूत् ॥ १२ ॥
सपुत्रेषु मृतेष्वार्त्तो (६) बृहस्पत्युपदेशतः ।
दत्तपुत्रविधानेन भरद्वाजं गृहीतवान् ॥ १३ ॥
(७) दौष्यन्तेर्भरतस्यासीद्भरद्वाजः सुतस्ततः ।

---

( १ ) 'उत्पत्तिस्थानं' इति 'क' पुस्तके ।
( २ ) 'परदारापरा०' इति 'क' 'ख' पुस्तकयोः ।
( ३ ) 'गर्भं' इति वे० दी० ।
( ४ ) इमाः क्रोडाङ्किताः पङ्क्तयः वेदार्थदीपिकायामेव दृश्यन्ते ।
( ५ ) 'दौःषन्तिः' 'दौष्षन्तिः' इति 'क' 'ख' पुस्तकयोः ।
( ६ ) 'मृतेष्वास' इति 'क' पुस्तके ।
( ७ ) श्लोकार्द्धमिदं 'क' पुस्तके नास्ति ।

स्वपत्न्यां पुष्करिण्यां च पञ्चपुत्रानजीजनत् ॥ १४ ॥
सुहोत्रं शुनहोत्रं च नरं गर्गमृजिश्विनम् ।

इति भरद्वाजस्य द्विपितृत्वं दर्शितम् । तथानुक्रमणी (का० स० ऋ० ६।१२) सुहोत्रादयोऽनुक्तगोत्रा भारद्वाजाः पौत्रा बृहस्पतेर्दौष्यन्तेर्वा भरतस्य चेति ।

एवं भरद्वाजस्योत्पत्तिं प्रदर्श्य प्रातराहुतेः फलम् ऋग्दृष्टान्तेनाह—

सर्वे यज्ञाः समृध्यन्ते विधिवत् प्रातराहुतेः ।
तीर्थावगाहः पुत्रश्च गर्वपापौ हि नश्यतः ॥९०॥

वेदोक्तप्रकारेण प्रातराहुतेः सकाशात् सर्वे यज्ञा ज्योतिष्टोमादयः समृध्यन्ते प्रातराहुत्या सर्वेषां यज्ञानां समृद्धिर्भवति । न केवलं तया यज्ञसमृद्धिः तीर्थावहगाहादिः सर्वक्लेशः कृतो भवति । तस्या दानात् पुत्रश्च जायते । गर्वपापौ हि तस्या दानान्नश्यतः नाशं प्राप्नुतः ।

तदर्थेयमृक् ( ऋ. ६.३.२ )—

ईजे यज्ञेभिः शशमे शमीभिर्ऋधद्वारायाग्नये ददाश ।
एवा चन तं यशसामजुष्टिर्नांहो मर्तं नशते न प्रदृप्तिः ॥

ईजे । यज्ञेभिः । शशमे । शमीभिः । ऋधत्ऽवाराय । अग्नये । ददाश । एव । चन । तम् । यशसाम् । अजुष्टिः । न । अंहः । मर्तम् । नशते । न । प्रऽदृप्तिः ॥९८॥

भरद्वाजस्त्रिष्टुभाऽग्निं तुष्टाव । ऋचोऽयमर्थः । यो यजमानः ऋधद्वाराय ऋधत् समृद्धं वारं वरणीयं धनं यस्यासौ ऋधद्वारो अग्निः तस्मै अग्नये ददाश प्रातराहुत्यादिना निमित्तेन हवींषि ददाति स यजमानः यज्ञेभिः सर्वैर्ज्योतिष्टोमादिभिः ईजे इष्टवान्भवति । यज्ञेभिरित्यत्र 'अतो भिस ऐस्' (पा० ७-१-९) न भवति । 'बहुलं छन्दसि' (पा० ७-१-८) इति वचनात् । तथा शमीभिः तीर्थकृच्छ्रचान्द्रायणादिभिः कर्मभिः शशमे शान्तो भवति ।

अग्निहोत्रहोमात् सर्वं(१) फलं भवतीत्यर्थः।(अपि च तं यजमानं) यशसां यशस्विनां पुत्राणां यशोयुक्तानां पुत्राणां वा अज्रुष्टिरप्राप्तिर्न नशतें न प्राप्नोति। तं यजमानं नैव प्राप्नोति। स पुत्रवान् भवतीत्यर्थः। तं मर्त्तं मनुष्यं यजमानं अंहः पापं तथा प्रदृप्तिः (२) गर्वश्च न नशते न प्राप्नोति। एवा चन भजा राये०(ऋ० प्रा० ८.३९) इति दीर्घः(३)।

तथा च महाभारते—

गजाश्वरथदानानि हेमभारशतानि च।
गवां कोटिसहस्राणि तुल्यानि प्रातराहुतेः ॥१॥
यो दद्यात् काञ्चनं मेरुं पृथिवीं च ससागराम्।
तत् सायंप्रातर्होमस्य तुला भवति वा न वा (४) ॥२॥

स य एवंविधं विराट्सम्पन्नमग्निहोत्रं जुहोति सर्वान् कामानाप्नोतीति श्रुतेः ( कौ० ब्रा० २।३ )।

यत्र गुरुस्तुष्यति (५) तत्र देवाः साहाय्यं कुर्वन्तीत्यर्थ आह—

देवाः कुर्वन्ति साहाय्यं गुरुर्यत्र प्रणम्यते (६)।
जघानेन्द्रसहायोऽरीनभ्यावर्ती गुरोर्नतेः ॥९१॥

यत्र गृहे गुरुः प्रणम्यते यः गुरुं दक्षिणाभोजनादिना सन्तोषयति तत्र देवा इन्द्रादयः साहाय्यं कुर्वन्ति। यथा अभ्यावर्ती राजा गुरोः नृपतेः नत्यादिना गुरुं तोषयेत् तुष्टो गुरुस्तस्याभ्यावर्त्तिनः साहाय्यार्थं इन्द्रं तुष्टाव। स्तुतः स एवागत्य तस्य साहाय्यं चकार। ततोऽभ्यावर्ती इन्द्रसहायः संन् अरीन् वाराशिखान् जघानेति।

---

( १ ) 'आग्नेयेन योगेन सर्वं फलं लभते' इत्यर्थः' इति वे० भा०।
( २ ) 'अनर्थहेतुः प्रदर्पश्च' इति वे० भा०।
( ३ ) 'अद्यादित्वाद् ( ऋ० प्रा० ७।३३ ) दीर्घः' इति 'क' 'ख' पुस्तकयोः।
( ४ ) श्लोकोऽयं 'ग' पुस्तके न दृश्यते।
( ५ ) तुष्यते इति 'क' 'ख' पुस्तकयोः।
( ६ ) 'अत्र प्रणम्यते गुरुः' इति 'क' पुस्तके।

तदर्थमितिहासपूर्वा ऋक् ( ऋ० ६.२७.४ )–

एतत्त्यत्त॑ इन्द्रि॒यम॑चेति॒ येनाव॑धीर्व॒राशि॑खस्य॒ शेषः॑ ।
वज्र॑स्य॒ यत्ते॒ निह॑तस्य॒ शुष्मा॑त्स्व॒नाच्चि॑दिन्द्र पर॒मो द॒दार॑ ॥

ए॒तत् । त्यत् । ते॒ । इ॒न्द्रि॒यम् । अ॒चे॒ति॒ । येन॑ । अव॑धीः । व॒रऽशि॑खस्य । शेषः॑ । वज्र॑स्य । यत् । ते॒ । निऽह॑तस्य । शुष्मा॑त् । स्व॒नात् । चि॒त् । इ॒न्द्र॒ । प॒र॒मः । द॒दार॑ ॥ ९९ ॥

अत्र बृहद्देवता ( ५।१२४–१२८, १३६–१४० )–
अभ्यावर्ती चायमानः प्रस्तोकश्चैव (१) सार्ञ्जयः ।
आजग्मतुर्भरद्वाजं जितौ वारशिखैर्युधि ॥१२४॥
अभिगम्योचतुस्तौ तु प्रणम्याख्याय (२) नामनी ।
युधि वारशिखैर्ब्रह्मन्नावां विद्धि विनिर्जितौ ॥१२५॥
भवत्पुरोहितावावां क्षत्रबन्धून् जयेव हि ।
क्षत्रं तदेव (३) विज्ञेयं ब्रह्म यत् पाति सर्वतः (४) ॥१२६॥
ऋषिः स्तुनस्तथेत्युक्त्वा पुत्रं पायुमभाषत (५) ।
अधर्षणीयौ शत्रूणां कुरुष्वैतौ नृपाविति ॥१२७॥
पितरं स तथेत्युक्त्वा युद्धोपकरणं तयोः ।
जीमूतस्येति सूक्तेन (ऋ०६.७५) पृथक्त्वेनान्वमन्त्रयत्॥१२८॥

---

( १ ) 'प्रस्तोकश्च हि' इति 'क' 'ख' पुस्तकयोः ।
( २ ) 'तौ तं प्रसाद्याख्याय' इति मु० बृ० ।
( ३ ) 'क्षत्रं तदपि विज्ञेयम्' इति मु० बृ० । 'क्षत्रं तु तदपि ज्ञेयम्' इति 'क' 'ख' पुस्तकयोः ।
( ४ ) 'शाश्वतम्' इति मु० बृ० ।
( ५ ) 'ऋषिस्तौ तु तथेत्युक्त्वा पायुं पुत्रमभाषत' इति मु० बृ० ।

सूक्तेनानेन तुष्टाव (१) सङ्ग्रामाङ्गान्यृषिस्तयोः ।
ततः प्रस्थापयामास पुनर्वाराशिखान् प्रति ॥१३६॥
एतत्त्यत्ते(२)चतसृभी राज्ञोः(३)साहाय्यकाम्यया ।
भरद्वाजोऽपि(४) तुष्टाव प्रीतस्तेन पुरन्दरः ॥१३७॥
अभ्यावर्तिनमभ्येत्य हर्यूपीयानदीतटे (५) ।
सहितश्चायमानेन जघानैनान् शचीपतिः ॥१३८॥

तुष्ट इन्द्रोऽभ्यावर्तिना सहितोऽरीञ्जघानेति एतदर्थं (६) भरद्वाजस्त्रिष्टुभेन्द्रं तुष्टाव । ऋचोऽयमर्थः ।

हे इन्द्र येन वीर्येण वराशिखासुरस्य वरशिखा नाम कश्चिदसुरः । तस्य शेषः शेषांसि पुत्रान् शेष इत्यपत्यनामैतत् ( नि० २।२ ) । अवधीः अहिंसीः ते त्वदीयम् एतत्त्यत् तदिदम् इन्द्रियं वीर्यम् अचेति अस्माभिरज्ञायि । चिती संज्ञाने । हे इन्द्र यद्यस्मात् शुष्मात् बलात् शुष्मं तन्नाम ( निघण्टु २।९ ) । निहतस्य प्रेरितस्य त्वदीयस्य वज्रस्य स्वनात् (७) शब्दादेव परमः वराशिखस्य पुत्राणां मध्ये बलाद्याधिक्येनोत्कृष्टः कश्चित्पुत्रो ददार (८) वज्रशब्दं श्रुत्वा स्वयमेव दीर्णोऽभवादित्यर्थः । स्वनः ऋक् तन्नाम ( निघण्टु १।११ ) एवं गुरोर्नतेरिन्द्रेणाभ्यावर्तिनः साहाय्यं कृतम् ।

---

( १ ) 'सूक्तेनानेन तु स्तुत्वा' इति मु० बृ० ।

( २ ) 'एतत्त्यत्तेति चतसृभी' इति 'ग' पुस्तके ।

( ३ ) 'राज्ञो साहाय्यकाम्यया' इति मु० बृ० पाठे विसर्गलोपो न समीचीनः ।

( ४ ) 'भरद्वाजो हि तुष्टाव' इति 'क' 'ख' पुस्तकयोः । 'भरद्वाजोऽभितुष्टाव' इति मु० बृ० ।

( ५ ) 'हर्युपीया०' इति मु० बृ० ।

( ६ ) 'जघानेति भरद्वाजस्त्रिष्टुभा तुष्टावेन्द्रम्' इति 'क' 'ख' पुस्तकयोः ।

( ७ ) 'स्वनाच्चित् ध्वनेरेव' इति वे० भा० । 'ध्वनीन्' इति 'ग' पुस्तके ।

( ८ ) अदीर्यत इति वे० भा० ।

शत्रुभिर्वैरं कृत्वा निःशङ्को न भवेदित्यर्थं आह—

वैरं कृत्वाऽरिभिर्धीमान्न निःशङ्कः सुखी भवेत् ।
वृष्णाऽभ्यावर्तिनोऽशङ्का वाराशिखारयो हताः ॥ ९२ ॥

धीमांस्तु बुद्धिमान्नरः अरिभिः शत्रुभिः सह वैरं कृत्वा वैरमुत्पाद्य निःशङ्को भूत्वा सुखी न भवेत् । यदि भवेन्निःशङ्कस्तर्हि वाराशिखाणामिव विघ्नं जायते । यथा निःशङ्का अभ्यावर्तिनः अरयः शत्रवो वाराशिखाः वृष्णा इन्द्रेण हताः । 'सुत्रामा गोत्रभिद्वज्री वासवो वृत्रहा वृषा' इत्यमरः ( १.१.४९ ) । अभ्यावर्त्तिप्रस्तोकौ अस्माभिर्जिताविति ज्ञात्वा सुखेन स्थितान् वाराशिखानिन्द्रो जघानेति ।

तदर्थेयमृक् ( ऋ० ६.२७.५ )—

वधीदिन्द्रो वरशिखस्य शेषोऽभ्यावर्तिने चायमानाय शिक्षन् ।
वृचीवतो यद्धरियूपीयायां हन्पूर्वे अर्धे भियसाऽपरो दर्त् ॥

वधीत् । इन्द्रः । वरऽशिखस्य । शेषः । अभिऽआवर्तिने । चायमानाय । शिक्षन् । वृचीवतः । यत् । हरिऽयूपीयायाम् । हन् । पूर्वे । अर्धे । भियसा । अपरः । दर्त् ॥ १०० ॥

भरद्वाजस्त्रिष्टुभा इन्द्रं तुष्टाव । अयमिन्द्रः चायमानाय चयमानस्य ( राज्ञः ) पुत्राय अभ्यावर्तिने ( एतन्नामकाय राज्ञे ) शिक्षन् ईप्सितार्थान् (१) प्रयच्छन् वरशिखस्य ( असुरस्य ) शेषः पुत्रान् वधीत् (२) अहिंसीत् । बहुलं छन्दस्यमाङ्योगेऽपीत्यडभावः ( पा० ६.४.७५ ) । कथमवधीदित्युच्यते । यद्

---

( १ ) 'ईप्सितानर्थान्' इति 'क' पुस्तके । 'ईप्सितानि वसूनि' इति वे० भा० ।

( २ ) 'अवधीत्' इति वे० भा० ।

यदा अयमिन्द्रः हरियूपीयायां(१) नद्यां पूर्वे अर्धे प्राग्भागे स्थितान् वृचीवतः वृचीवान्नाम वरशिखस्य कुलोत्पन्नः पूर्वजः तद्गोत्रजान् वरशिखस्य पुत्रान् इन् अवधीव तदा अपरः अपरभागे स्थितो वरशिखस्य श्रेष्ठः पुत्रः भियसा भीत्या दर्व दीर्णोऽभूत् । शेषोऽ-भ्याव०—एकीभवति पादादिरकारः० ( ऋ० प्रा० २।३४ ) इत्येकीभावः। हरियूपीयायामित्यज्ञानां निवारणार्थम् 'ऊष्मान्तस्था०' इत्यनेन 'हरियोजनाय हरियूपीयायाम्' (ऋ० प्रा० १.४।४०) इति शौनकेन यत्नः कृतः ।

यः सम्राट् स मृतोऽपि जीवतीत्यर्थं आह—

विद्यतेऽविद्यमानोपि सम्राट् ख्यातिं बिभर्त्ति यः ।
अभ्यावर्ती ददातेर्हि लट्त्वात्(२) सम्राट् स जीवति ॥९३॥

यो द्विजः वाजपेयेनेष्ट्वा सम्राडयं सम्राडयं इति ख्यातिं कीर्त्तिं बिभर्ति सः अविद्यमानोपि पृथिव्यां विद्यते एव । सम्राट्त्वेन यशसा धार्यत इति जीवति मृतोऽपि । हि यस्मात् अभ्यावर्ती यः सम्राट् स मृतोऽपि पृथिव्याम-विद्यमानोऽपि जीवति इति तत्कथं सम्राट् अभ्यावर्ती चायमानो ददातीति भरद्वाजेन लट् प्रयुक्तः । परन्तु वर्त्तमाने लडिति लट् वर्तमानकाले भवतीति तस्माल्लट्त्वात् सोऽविद्यमानोपि जीवतीत्यवमन्तव्यम् ।

तदर्थेयं सेतिहासा ऋक् ( ऋ० ६.२७.८ )—

द्वयाँ अग्ने रथिनो विंशतिं गा वधूमतो मघवा मह्यं सम्राट् ।
अभ्यावर्ती चायमानो ददाति दूणाशेयं दक्षिणा पार्थवानाम् ॥

द्वयान् । अग्ने । रथिनः । विंशतिम् । गाः । वधूऽ-मतः । मघऽवा । मह्यम् । सम्ऽराट् । अभिऽआवर्ती ।

(१) 'हरियूपीया नाम काचिन्नदी काचिन्नगरी वा तस्यां' इति वे० भा० ।

(२) 'लट्त्वतः' इति 'ग' पुस्तके ।

चायमानः । ददाति । दुःऽनशा । इयम् । दक्षिणा । पार्थवानाम् ॥ १०१ ॥

वारशिखहननान्तरं यत्कृतं तदुच्यते ।

तत्र बृहद्देवता ( ५।१३९, १४१ )–

एवं (१) वारशिखाञ्जित्वा ततोऽभ्यावर्तिसार्ञ्जयौ ॥
भरद्वाजाय गुरवे ददतुर्विविधं वसु ॥ १३९ ॥
ऋषिरप्यभितुष्टाव दानं तत्र च तस्य तु ।
ऋचैकया द्वयांअग्ने सम्राट् ख्याति जगौ तदा (२)॥१४१॥

भरद्वाजो दानदमभ्यावर्तिनं सम्राजं त्रिष्टुभा अग्नये प्रकथयति (३)। किमस्यान्त्या चायमानस्याभ्यावर्तिनो दानस्तुतिरित्यनुक्रमणी ( का० स० ऋ० ६।२७ ) (४)। ऋचोऽयमर्थः। हे अग्ने मघवा मघवान धनवान् ( प्रभूतदानो वा ) सम्राट् वाजपेययाजी (५) चायमानश्चयमानपुत्रः अभ्यावर्ती राजा (६) रथिनः रथसहितान् वधूमतः (७) स्त्रीसहितान् ( स्त्रीयुक्तान् ) द्वयान् मिथुनभूतान् विंशतिं विंशतिसंख्याकान् गाः पशून् मह्यं ददाति

---

( १ ) 'तौ तु' इति मु० बृ० ।

( २ ) 'दत्तं सङ्कीर्तयन् स्वयम्' इति मु० बृ० ।

( ३ ) 'अधुना भरद्वाजः स्वस्मै अभ्यावर्त्तिना दत्तं धनजातमग्नये प्रकथयति' इत्यत्र वे० भा० ।

( ४ ) द्वयाँ अग्ने रथिन इत्यष्टम्यां चायमाननाम्नो युद्धेऽभिमुखगमनात्प्राप्ताभ्यावर्तित्वगुणस्य चायमानस्य राज्ञो दानं स्तौति। अभ्यावर्त्युक्तिरभ्यावर्ती चायमानो ददातीति दर्शनात् प्रशंसार्था इति षड्गुरुशिष्यः ।

( ५ ) राजसूययाजी इति वे० भा० ।

( ६ ) एतदाह्वयो राजा इति वे० भा० ।

( ७ ) सखियुक्तान् कन्यायुक्तान् इति 'ग' पुस्तके ।

प्रयच्छति (१) पार्थवानां पृथोर्वंशजस्याभ्यावर्तिनो राज्ञः सम्बन्धिनी इयं दक्षिणा दूणाशा दुर्नशा केनापि नाशयितुमशक्या भवति। पार्थवानामिति बहुत्वं पूजार्थम्। सम्राडिति 'रेफोष्मणो०' (ऋ० प्रा० ४।१९) इति परिपन्ने प्राप्ते 'सम्राट्शब्दः परिपन्नापवादः' (ऋ० प्रा० ४।२३) इति न। दूणाशेति 'दूढच दूणाश दूळभ०' (ऋ० प्रा० ५।५५) इति दीर्घणत्वौ। 'दूणाश उक्थशासश्च०' (ऋ० प्रा० ९।३६, ३७) इति णकारस्य दीर्घः। 'अपरं वै राज्यं परं साम्राज्यम्' इति शातपथी श्रुतिः (२)।

सीदन्नसाधोरपि गृह्णीयादित्यर्थं आह—

असाधोरपि गृह्णीयात् सीदन् प्रतिग्रहं द्विजः।
भरद्वाजो हि तक्षणः क्षुत्पीडितो जगृहे बृबोः ॥९४॥

सीदन् दारिद्र्यपीडितः सन् द्विजः असाधोरपि 'अन्यत्र कुलटाषण्ढपतितेभ्य' इति निषिद्धादपि आपद्गतः सन् प्रतिगृह्णन्निति विहितत्वात् प्रतिग्रहं गृह्णीयाद्भरद्वाजवत्। हि यस्माद्भरद्वाजो महानपि क्षुत्पीडितः सन् बृबोस्तक्षणकः सकाशात् गवादिप्रतिग्रहं जगृहे गृहीतवान्।

तदर्थेतिहासपूर्वा ऋक् (ऋ० ६. ४५. ३१)—

अधि बृबुः पणीनां वर्षिष्ठे मूर्धन्नस्थात्।
उरुः कक्षो न गाङ्ग्यः ॥

अधि। बृबुः। पणीनाम्। वर्षिष्ठे। मूर्धन्। अस्थात्। उरुः। कक्षः। न। गाङ्ग्यः ॥ १०२ ॥

---

(१) 'प्रायच्छत्' इति वे० भा०।

(२) 'राजा वै राजसूयेनेष्ट्वा भवति सम्राड् वाजपेयेनावरं हि राज्यं परं साम्राज्यं कामयेत वै राजा सम्राड् भवितुमवरं हि राज्यं परं साम्राज्यं न सम्राट् कामयेत राजा भवितुमवरं हि राज्यं परं साम्राज्यम्। स यो वाजपेयेनेष्ट्वा सम्राड् भवति' इत्यादि (श० ब्रा० ५-१-१-१३)

भरद्वाजोऽरण्ये पर्यटन् क्षुधया पिपासया च पीडितः सन् महावने तक्षकर्म कुर्वाणं बृबुं ददर्श । तमुवाच । अतिथिं मामुपागतमवगच्छेति । सोऽभ्युत्थाय प्राञ्जलिर्भरद्वाजमुवाच । अहं तक्षा। तक्ष्णः पतितचाण्डालादिभ्य इव ब्राह्मणा न गृह्णन्तीति मया श्रुतम्। यदि तव धर्मो न पीड्यते तर्हि वद । तव दत्तं न प्रत्याख्यास्यामीति। बृबुस्तथेति वदन्तं तं प्रतिपद्यातिथिधर्मेणोपचचार। स तमुवाच। अहं शूद्रो बहुपशुरमेध्यः। मदीया गावो न पितृदेवातिथीषूपयुज्यन्ते संस्थासु न । भगवता पूर्वमुक्तं तव दत्तं न प्रत्याख्यास्यामीति । तेनात्मानमुद्धरन् स्वर्गभाजः कर्त्तुमेताः गावः प्रतिगृह्यन्तामिति । एवमुक्त्वा तस्मै गवां सहस्रं ददौ । तद्भरद्वाजः प्रतिजग्राह प्रतिगृह्य च पुत्राय भ्रात्रे शयवे चाचचक्षे। अथ शयुः प्रीतमनाः अधि बृबुरित्यनेन तृचेन। ( ऋ० ६।४५। ३१-३३ ) गायत्रेण त्रिष्टुबन्तेन बृबुं तुष्टावेति । तृचोऽन्त्ये बृबुस्तक्षा दैवतमित्यनुक्रमणी ( का० स० ऋ० ६।४७ ) भारद्वाजं चतुर्थं यथा भरद्वाजो बृबौ तक्ष्णि प्रस्तोके चेति ( सां० श्रौ० सू० १६।११।१०, ११ ) । पुरुषमेधे नाराशंसमेतत्तृचं विनियुक्तम्। ऋचोऽयमर्थः।(१) बृबुर्नाम पणीनां तक्षा। पणयो (२) वणिजः तेषां तक्षो बृबुः वर्षिष्ठे मूर्धन् मूर्धनि सर्वेषां दातृयजमानानां मध्ये मूर्धवदुच्छ्रितोऽस्थात् अधिष्ठितोऽभूत्। गाङ्ग्यः कक्षो न। कक्ष इव उन्नतः। यथा गङ्गायाः कूले उन्नते भवो वृक्ष इव (३) उरुः विस्तीर्णः सन् जातितो हीनोऽपि दातृत्वात् सर्वश्रेष्ठो भवतीत्यर्थः। तथा मनुः ( म० स्मृ० १०।१०७ )—

---

( १ ) तत्सकाशाल्लब्धधनो भरद्वाजः तदीयं दानमनेन तृचेनास्तौत्' इत्यधिकं वे० भा० ।

( २ ) पणनात्पणयो वणिजः पतत्संज्ञा असुरा वा इति वे० भा० ।

( ३ ) कक्ष इव इति 'क' पुस्तके ।

भरद्वाजः क्षुधार्तस्तु सपुत्रो निर्जने (१) वने ।
बह्वीर्गाः प्रतिजग्राह न स पापेन लिप्यते (२) ॥
यत्पूतिर्यच्च (३) कुणपं यच्च कीटपिपीलिकम् ।
सर्वं तदग्निर्दहति दैवत्वाच्च न हीयते ॥
एतेनैवोपमानेन यथा वैश्वानरस्तथा ।
ब्राह्मणः सर्ववर्णेभ्य आददानो न दुष्यति ॥

आर्त्तिभङ्गं ये कुर्वन्ति ते सुरा इत्याह—

आर्त्तानामार्त्तिभङ्गं ये कुर्वन्ति ते सुरैः समाः ।
मार्गार्त्ताय हि गर्गाय दर्शितोऽध्वा वने सुरैः ॥९५॥

ये नरा आर्तानां जन्तूनां आर्त्तिभङ्गं कुर्वन्ति ते सुरैः देवैः समाः । देवरूपेण हि विचरन्ति । हि यस्मान्मार्गार्त्ताय मार्गमूढाय गर्गाय ऋषये सुरैः देवैः मार्गो दर्शितः । यथा पूर्वं देवैर्गर्गस्य मार्गार्त्तिभङ्गः कृतः तथेदानीं ये आर्त्तिभङ्गं कुर्वन्ति ते सुरा इति तात्पर्यार्थः ।

इयमाख्यानपूर्वा ऋक् ( ऋ० ६.४७.२० )—

अगव्यूति क्षेत्रमागन्म देवा उर्वी सती भूमिरंहूरणाऽभूत् ।
बृहस्पते प्रचिकित्सा गविष्टावित्था सते जरित्र इन्द्र पन्थाम् ॥

अगव्यूति । क्षेत्रम् । आ । अगन्म । देवाः । उर्वी । सती । भूमिः । अंहूरणा । अभूत् । बृहस्पते । प्र । चिकित्स । गोऽइंष्टौ । इत्था । सते । जरित्रे । इन्द्र । पन्थाम् ॥१०३॥

---

( १ ) 'विजने' इति मुद्रिते म० स्मृ० पुस्तके ।
( २ ) 'बृबोस्तक्ष्णो महायशाः' इति वे० भा० । बृधोस्तक्ष्णो महातपाः' इति । मुद्रिते म० स्मृ० पुस्तके ।
( ३ ) अयं श्लोको मुद्रिते म० स्मृ० पुस्तके न दृश्यते ।

अत्राख्यानम् (१)—

अरण्ये निर्जने गर्गो देवान् भूमिं बृहस्पतिम् ।

इन्द्रं चास्तौव स्वरक्षार्थमृचा मार्गच्युतोऽनया ॥१॥

अगव्यूतीत्यत्र पादे देवान्भूमिं तथोत्तरे (२) ।

बृहस्पतिं तृतीये तु इन्द्र एवोत्तमे स्तुतः ॥२॥

"अगव्यूत्यर्धर्चो लिङ्गोक्तदेवतः" इत्यनुक्रमणी (का० स० ऋ० ६।४७)। गर्ग स्त्रिष्टुभा देवांस्तुष्टाव । ऋचोऽयमर्थः । हे देवाः अगव्यूति अगोचरं गोसंचाररहितं निर्जनं क्षेत्रं देशं आगन्म आगताः स्मः । अतो मां रक्षतेति (३)। उर्वी विस्तीर्णा सती भूमिश्च अंहूरणा अंहवः आहन्तारो दस्यवः तेषां (रमणा) रमयित्री अभूव भवति। यद्वा अंहूरणा अंहस्विनी अतिभययुक्ता अतः पापरूपाऽभूव । अंहुरोंहस्वानंहूरणमित्यप्यस्य भवति (नि० ६।२७) इति यास्केन दर्शितोर्थः। सा रम्या भूत्वाऽस्मान् रक्षतु (४)। हे बृहस्पते त्वं गविष्टौ गवान्वेषणे उपाये प्रचिकित्स प्रवेदय । इत्था इत्थमनेन प्रकारेण सते भवते दुःखमनुभवते जरित्रे स्तोत्रे मह्यं पन्थां पन्थानं मार्गं प्रचिकित्स प्रज्ञापय । 'चिकित्सा' इति एकादशिद्वादशिनोः (ऋ० प्रा० ८।३६) इत्यष्टमोऽक्षरः प्लावितः । गविष्टाविति ओष्ठ्योन्योर्भुग्नमनोष्ठ्ये० (ऋ० प्रा० २।३१) इत्यादिना अनोष्ठ्यत्वाद्वकारागमः ।

आये सति व्ययं कुर्यादित्यर्थ आह—

आयं दृष्ट्वा व्ययं कुर्यात् स एव चतुरो नृणाम् ।

प्रस्तोको गुरवे प्रादात् कोशादि वसु शाम्बरम् ॥९६॥

---

(१) 'अत्रोक्तम्' इति वे० भा० ।

(२) 'देवान्पादे भूमिमथोत्तरे' इति वे० भा० । 'देवान्पादे भूमिं द्वितीयके' इति 'ग' पुस्तके ।

(३) 'इति शेषः' इति वे० भा० ।

(४) 'अस्मानतः साऽपि रक्षतु' इति वे० भा० ।

यः पुमान् आयं आयपदं दृष्ट्वा तस्मादायादल्पव्ययं कुर्यात् स नृणां पुंसां मध्ये चतुरो विचक्षणो ज्ञेयः । तत् प्रस्तोकदृष्टान्तेन द्रढयति । यथा प्रस्तोको राजा शाम्बरं शम्बरासुरं हत्वा इन्द्रेण दत्तं तच्छांबरं वसु धनं कोशादिकमागतं दृष्ट्वा गुरवे गर्गाय ऋषये प्रादात् । तस्मादाये व्ययोऽनायव्ययकर्त्ता चेति निषेधात् ।

तदर्थेयमृक् ( ऋ० ६. ४७. २२ )—

**प्रस्तोक इन्नु राधसस्त इन्द्र दश कोशयीर्दश वाजिनोऽदात् ।**
**दिवोदासादतिथिग्वस्य राधः शाम्बरं वसु प्रत्यग्रभीष्म ॥**

**प्रऽस्तोकः । इत् । नु । राधसः । ते । इन्द्र । दश । कोशयीः । दश । वाजिनः । अदात् । दिवःऽदासात् । अतिथिऽग्वस्य । राधः । शाम्बरम् । वसु । प्रति । अग्रभीष्म ॥ १०४ ॥**

अत्राख्यानम् (१)—

एवं वारशिखाञ्जित्वा प्रस्तोकः साञ्जयो मृधे ।
भरद्वाजाय गुरवे विविधा दक्षिणा (२) ददौ ॥ १ ॥
ता (३) गृहीत्वा गृहान् गच्छन्निन्द्रं प्रति यदृच्छया ।
ददर्शार्चाऽभितुष्टाव भरद्वाजः शतक्रतुम् ॥ २ ॥
ऋषेर्दृष्ट्वा विभूतिं स गर्गं पप्रच्छ वृत्रहा ।
युष्मभ्यं कतमो राजा धनमेतद्ददाविति ॥ ३ ॥
अथ विस्तरशो गर्गो यो यस्मै यद्ददौ धनम् ।
ऋग्भिश्चतसृभिः सर्वं तदिन्द्राय न्यवेदयत् ॥ ४ ॥

---

( १ ) इयं कथा पूर्वं किञ्चिद्भेदेन द्वयाँ अग्ने ( ऋ० ६।२७।८ ) इत्यस्या ऋचो व्याख्याने बृहद्देवताश्लोकैः ( बृ० ५।१३९-१४१ ) वर्णिता द्रष्टव्या ।

( २ ) 'विविधां दक्षिणाम्' इति 'क' 'ख' पुस्तकयोः ।

( ३ ) 'तां गृ०' इति 'क' पुस्तके ।

प्रस्तोक इति त्रिष्टुबनुष्टुप् गायत्री द्विपदा सार्ञ्जयस्य प्रस्तोकस्य दानस्तुतिः० इत्यादि अनुक्रमणी (का०स०ऋ० ६।४७) 'अधि बृबुः प्रस्तोक इति चतस्रः' इति सूत्रे (सां० श्रौ० सू० १६।११।१२)।

ऋचोऽयमर्थः। (१) हे इन्द्र ते तव राधसः आराधयितुः स्तोतुः। चतुर्थ्यर्थे षष्ठी। त्वां स्तुवते मह्यं गर्गाय प्रस्तोको राजा दश कोशयीः सुवर्णपूर्णान् दशसंख्याकान् कोशान्। दश वाजिनोऽश्वांश्च नु क्षिप्रं अदात् प्रादात् (२) नु मङ्क्षु तन्नाम (निघण्टु २।१५) इव पूरणः। मिताक्षरेष्वनर्थकाः कमीमिद्विति यास्कः (नि० १।९)। वयं च दिवोदासात् एतत्संज्ञात् प्रस्तोकात्। प्रस्तोकस्य नामचतुष्टयम्। तस्माद्वसु धनं प्रत्यग्रमीष्म प्रतिगृहीतवन्तः। कीदृशं वसु। अतिथिग्वस्य तस्यैव प्रस्तोकस्य स्वभूतं राधः राधकं शाम्बरं शम्बरादसुरादागतं शम्बरं हत्वा त्वया प्रदत्तं तत्प्रत्यग्रभीष्मेति। अश्वथेति चतुर्थनाम। कोशयीरित्यत्र शौनकेनान्यथाध्ययनेन यत्नः कृतः।

अकारस्य स्थाने ऐकारमाहुर्लुम्पन्ति च सयमीकारमुत्तरम्।
बह्वक्षरं द्व्यक्षरतां नयन्ति यथोनयीर्ध्वनयीत्कोशयीरिति॥

(ऋ० प्रा० १४।४३)। वाजिनोऽदात्—अदादवत्रोऽजनयन्तान्यत्या० (ऋ० प्रा० २।४०) इत्यभिनिहितः।

एतदेव हि पाण्डित्यमियमेव विदग्धता।
अयमेव परो धर्मः स्वायादल्पतरो व्ययः(३)॥१॥

इत्यत्राप्युक्तम्।

---

(१) वेदभाष्ये—एतदाद्यासु चतसृषु सृञ्जयपुत्रस्य प्रस्तोकस्य राज्ञो दानस्तुतिः। स एव दिवोदासः अश्वथः अतिथिग्व इति चाख्यायते हे इन्द्र इति।

(२) 'प्रायच्छत्' इति वे० भा०।

(३) अयमपरोऽपि श्लोकः 'क' पुस्तके दृश्यते—

इदमेव परं ज्ञानमिदमेव परं तपः।
अयमेव परो धर्मो यदायान्नाधिको व्ययः॥२॥

देवयष्टा महत्त्वमाप्नोतीत्यर्थं आह—

देवेण्महत्त्वमाप्नोति यदि निन्देदसूयकः ।
अतियाजोऽतियाजत्वं प्राप निन्दत्यृजिश्वनि ॥९७॥

देवान्यजतीति देवेट् । स यदि कश्चिदसूयकः द्विट् स्पर्धां कृत्वा निन्देत् तर्हि तस्मिन् निन्दति सति अतियाजवत् महत्त्वं ज्ञातिश्रैष्ठ्यम् आप्नोत्येव । यथा अतियाजः कश्चिदृषिः तस्य ऋजिश्वा द्विड् द्वेषी भूत्वा निन्दां चकार । तथापि ऋजिश्वनि निन्दति सति आतियाजत्वम् अतियजतीत्यतियाजः तस्य भावोऽतियाजत्वम् अयं आतियाजः इति नाम्ना ख्यातिं प्राप प्राप्तवान् ।

तदर्थेयमृक् ( अ० ६.९२.१ )—

न तद्दिवा न पृथिव्याऽनुमन्ये न यज्ञेन नोत शमीभिराभिः।
उब्जन्तु तं सुभ्व१ः पर्वतासो नि ह्रीयतामतियाजस्य यष्टा॥

न । तत् । दिवा । न । पृथिव्या । अनु । मन्ये । न । यज्ञेन । न । उत । शमीभिः । आभिः । उब्जन्तु । तम् । सुऽभ्वः । पर्वतासः । नि । ह्रीयताम् । अतिऽयाजस्य । यष्टा ॥१०९॥

(१) उत्कृष्टः स्यामहं वेति बुद्ध्या देवानियाज ह (२) । ऋषिस्तदीयं यजनं निराचष्टाद्यया । न तद्दिवेति । ऋजिश्वा त्रिष्टुभा विश्वान् देवान् प्रति अतियाजं निन्दति। आतियाजस्य ऋषेस्तद्यजनं दिवा द्युलोकेन तत्रत्येन देवगणेन युक्तमिति अहं नानुमन्ये नानुमतिं करोमि । न च पृथिव्या पार्थिवेनापि देवगणेन युक्तमिति नानुमन्ये। न च यज्ञेन मयाऽनुष्ठितेन सदृशं तदपि नानुमन्ये।

( १ ) 'अतियाजो नाम कश्चिदृषिरस्माद्दृजिश्वनः' इत्यत्राधिकं वे० भा० ।

( २ ) 'यियक्षुरास' इति वे० भा० ।

उतापि च आभिः शमीभिः अन्यैरपि मया कृतैः एभिः कर्मभिः सदृशमित्यपि नानुमन्ये । मया वशीकृता देवास्तदीयं यजनं नाङ्गीकुर्वन्ति स चानभिज्ञत्वात् सम्यग्यष्टुं न शक्नोतीति भावः। अपि च तमृषिं सुभ्वः सुष्ठु भवन्तः (१) पर्वतासः पर्वताः इन्द्रेण प्रहिताः सन्तः उब्जन्तु हिंसन्तु । उब्जिर्हिंसाकर्मा । तस्यातियाजस्य ऋजिश्वनोऽप्यतिशयेन अहं देवान् यजामीति बुद्ध्या युक्तस्यर्षेः यो यष्टा याजकः स निहीयताम् नितरां हीनो भवतु । इति देवेणमहत्त्वमाप्नोतीति सिद्धम् ।

पणेर्वणिजो (२) मनः कर्कशमित्यर्थं आह—

कः पणेर्दानदं कर्त्तुं शक्नुयात् कर्कशं मनः ।
अशक्तोऽस्य भरद्वाजो ययाचे पूषणं धनम् ॥९८॥

पणेर्वणिजो लुब्धकस्य वार्धुषिकस्य मनः मानसं कर्कशं कठोरम् अदानदं मृदु कोमलं कृत्वा दाने मनः कर्त्तुं को जननीजःतः शक्नुयात् । पणेर्मनो दानदं कर्तुं कोऽपि समर्थो न भवतीत्यर्थः । भरद्वाजवत् । यथा भरद्वाज ऋषिरस्य पणेर्वार्धुषिकस्य मनो दानदं कर्तुमसमर्थः सन् तद्धनं पूषणं देवं ययाचे । अस्य मनो मृदु कृत्वा त्वं दापयेति । आदित्सन्तामित्यादिभिर्ऋग्भिः ।

तत्र ऋक् ( ऋ० ६. ९३. ३ )—

अदि॑त्सन्तं चिदाघृणे पूष॒न् दाना॑य चोदय ।
पणेश्चि॒द्वि म्र॑दा मनः॑ ॥

अदि॑त्सन्तम् । चित् । आ॒घृ॒णे । पूष॑न् । दाना॑य ।
चो॒द॒य॒ । प॒णेः । चि॒त् । वि । म्र॒द॒ । मनः॑ ॥ १०६ ॥

---

( १ ) 'सुष्ठु भवाः' इति 'क' पुस्तके ।
( २ ) 'ग' पुस्तके पणेरिति पदं न दृश्यते ।

भरद्वाजो गायत्र्या पूषणं स्तुत्वा पणेर्धनं ययाचे। हे आघृणे आगतदीप्ते। आघृणिरागतह्रणिरिति यास्कः (नि० ५।९)। पूषन् अदित्सन्तं चित् दातुमनिच्छन्तमपि पुरुषं दानायास्मद्दानार्थं चोदय प्रेरय। पणोश्चित् वणिजो वार्धुषिकस्य लुब्धकस्यापि मनः हृदयं वि म्रद दानार्थं मृदु कोमलं कुरु। म्रदा मनः इति षष्ठं चाष्टाक्षरेऽक्षरम् (ऋ० प्रा० ८।३९) इति दीर्घः।

केन कारणेन वि म्रदेति। एतदर्थप्रतिपादिनी द्वितीया ऋक्—

(ऋ० ६. ५३. ५)—

परि तृन्धि पणीनामारया हृदया कवे।

अथेमस्मभ्यं रन्धय॥

परि। तृन्धि। पणीनाम्। आरया। हृदया। कवे। अथ। ईम्। अस्मभ्यम्। रन्धय॥ १०७॥

हे कवे प्राज्ञ पूषन् पणीनां लुब्धकानां (१) वार्धुषिकानां हृदया हृदयानि कठिनानि आरया सूक्ष्मलोहाग्रो दंडः प्रतोद आरेति (२) तया परितृन्धि परिविध्य। हृद्गतं काठिन्यमपनयेत्यर्थः। अथानन्तरम् ईम् एनान् पणीन् अस्मभ्यं रन्धय वशीकुरु। रध्यतिर्वशगमनेऽपि दृश्यत इति यास्कः (नि० ६।३२)।

एवमादिभिर्बह्वीभिः ऋग्भिः भरद्वाजेन पणेर्मनः स्वयं गृहीतुमशक्तेन पूषा देवो याचितः इति। अतः कः पणेर्मनो दानदं दाने वा कर्तुं प्रभवतीत्युक्तम्।

इति द्याद्विवेदविरचिते नीतिमञ्जरीभाष्ये वेदार्थप्रकाशे चतुर्थाष्टके नीतिवाक्यानि व्याख्यातानि। श्रीरस्तु।

इति चतुर्थाष्टकः समाप्तः।



(१) 'वणिजां लुब्धानाम्' इति 'ग' पुस्तके वेदभाष्ये च।
(२) 'प्रतोद इत्यारेति चाख्यायते' इति वे० भा०।

॥ श्रीः ॥

# अथ पञ्चमाष्टकः ।

तुरीये नीतिवाक्यानि दर्शयित्वा यथामति ।
पञ्चमे नीतिवाक्यानि लिख्यन्ते द्याद्विवेदिना ॥

गुरुं सन्तोषयेदित्यर्थं आह—

गुरुं सन्तोषयेद् भक्त्या विद्याविनयतत्परम् ।
प्रस्तोकाय ददौ पायुः स्तुत्वा तुष्टोऽस्त्रमण्डलम् ॥ ११ ॥

विद्यातत्परं विनयतत्परं गुरुं दक्षिणादिना समर्थः सन्तोषयेत् सन्तुष्टं कुर्यात् । प्रस्तोकवत् । यथा प्रस्तोकेन । 'दशरथान् प्रष्टिमतः शतं गा अथर्वभ्यः । अश्वथः पायवेऽदात्' ( ऋ० ६।४७।२४ ) इत्युक्तेन दानेन तोषितो गुरुः पायुस्तुष्टः स जीमूतस्येति सूक्तेन ( ऋ० ६।७५ ) अस्त्रमण्डलं अस्त्रसमूहं वर्मादि स्तुत्वा सवीर्यं कृत्वा प्रस्तोकाय ददौ । तस्माद्गुरुं तोषयेदित्युक्तम् ।

तदर्थेयमृक् । ( ऋ० ६.७५.१ )—

जीमूतस्येव भवति प्रतीकं यद्वर्मी याति समदामुपस्थे ।
अनाविद्धया तन्वा जय त्वं स त्वा वर्मणो महिमा पिपर्तु ॥

जीमूतस्यऽइव । भवति । प्रतीकम् । यत् । वर्मी । याति । सऽमदाम् । उपऽस्थे । अनाविद्धया । तन्वा । जय । त्वम् । सः । त्वा । वर्मणः । महिमा । पिपर्तु ॥ १०८ ॥

अत्र बृहद्देवता ( ८।१२९–१३५ )—

प्रथमा त्वस्य सूक्तस्य योद्धारं स्तौति वर्मिणम् ।
धनुः स्तौति द्वितीया च(१)तृतीया ज्याभिमन्त्रिणी ॥१२९॥
स्तौति चार्त्नीं चतुर्थी ऋक् (२) इषुधिं स्तौति पञ्चमी ।
अर्धेन सारथिः(थिं) षष्ठ्या रश्मयोऽर्धेन तु स्तुताः (३)॥१३०॥
अश्वांश्च (४) सप्तमी स्तौत्यायुधागारमष्टमी ।
नवमी रथगोपांस्तु दशमी रणदेवताः ॥ १३१ ॥
इषुमेकादशी (५) स्तौति द्वादशी कवचस्तुतिः ।
त्रयोदशी कशां स्तौति हस्तत्राणं चतुर्दशी ॥ १३२ ॥
प्रथमे पञ्चदश्यास्तु पादे पुनरिषुः (६) स्तुतः ।
अयोमुखो(७)द्वितीये तु अर्द्धर्चे वारुणं परम् (८) ॥१३३॥
(९)षोडश्यां त्वस्य सूक्तस्य धनुर्मुक्त इषुः स्तुतः ।
सप्तदश्यां तु युद्धादेः कवचस्य तु बध्यतः ॥ १३४ ॥
स्तुतिरष्टादशी ज्ञेया युयुत्सोः स्तुतिरुत्तमा ।
आशास्ते चोत्तमे पादे ऋषिरात्मन आशिषः ॥ १३५ ॥

जीमूतस्यैवैकोना पायुर्भारद्वाजः सङ्ग्रामाङ्गान्यृक्शोऽभितुष्टावे-त्यनुक्रमणी ( का० स० ऋ० ६. ७५ )।

तथा ऋग्विधाने ( श्लो० ३०० )–

---

( १ ) 'धनुषश्च द्वितीया तु' इति मु० बृ० ।
( २ ) 'स्तौत्यृगार्त्नीं चतुर्थी तु' इति मु० बृ० ।
( ३ ) 'संस्तुताः' इति मु० बृ० ।
( ४ ) 'अश्वांस्तु' इति मु० बृ० ।
( ५ ) 'इषुं चैकादशी' इति मु० बृ० ।
( ६ ) 'दिग्ध इषु' इति मु० बृ० ।
( ७ ) 'अयोमुखी' इति मु० बृ० ।
( ८ ) अर्धेऽस्त्रं वारुणं परे इति मु० बृ० । 'अर्द्धस्तं वरुणं परम्' इति 'ग' पुस्तके ।
( ९ ) इमावन्तिमौ द्वौ श्लोकौ बृहद्देवताया उद्धृतौ मूले न स्तः ।

सङ्ग्राममभ्युद्यताय (१) राज्ञे चैतत् प्रयोजयेत् ।
सर्वाण्यङ्गानि रथ्यांश्च सदश्वांश्चानुमन्त्रयेद् ॥ इति ॥

आश्वलायनः ( आ० गृ० सू० ३।१२।३-६ )—' जीमूतस्येव भवति प्रतीकमिति कवचं प्रयच्छेत् । उत्तरया धनुः उत्तरां वाचयेत् । स्वयं चतुर्थीं जपेत् ' ।

पायुस्त्रिष्टुभा वर्म तुष्टाव । ऋचोऽयमर्थः समदां सङ्ग्रामाणाम् उपस्थे उपस्थाने सति यद् यदाऽयं राजा वर्मी कवची याति तदा लोहमयेन वर्मणा सन्नद्धस्य राज्ञः प्रतीकं रूपं जीमूतस्येव मेघस्येव भवति मेघस्य यादृशं कृष्णं रूपं तादृशमस्य भवतीत्यर्थः । हे राजन् अनाविद्धया शत्रुभिरबाधितया तन्वा शरीरेण शत्रून् जय । वर्मणः स तादृशो महिमा त्वा त्वां पिपर्तु पालयतु । स त्वा—'ऊष्मा परिलुप्यते त्रयाणाम् ( ऋ० प्रा० २।११ ) इति ऊष्मलोपः । धन्वना गा ( ऋ० ६.७५.२ ) इत्यादिभिरस्त्रमण्डलं स्तुत्वा ददाविति ।

योयज्ञियकर्मकर्त्ता स मनुष्यरूपेण देवो भवतीत्यर्थ आह—

न ते मनुष्यास्ते देवा यज्ञियं कर्म कुर्वते ।
याचकश्चैति यं पृष्ट्वा वासिष्ठः स्तौति देववत् ॥ १०० ॥

ये मनुष्याः यज्ञियं यज्ञसम्बन्धि ज्योतिष्टोमादि कर्म कुर्वते ते मनुष्याः न किन्तु मनुष्यरूपेण देवाः । अपरं च यं मनुष्यं याचकः क्षुत्पिपासापीडितः धनाद्यभिलाषी वा असौ उदारः किं करोति क्वास्ते इत्यापृच्छ्य एति आगच्छति सोऽपरो मनुष्यरूपेण देवः ।

तदर्थेयमृक् ( ऋ० ७.१.२३ )—

स मर्तो॑ अग्ने स्वनीक रे॒वानम॑र्त्ये॒ य आ॑जु॒होति॑ ह॒व्यम् ।
स दे॒वता॑ वसु॒वनिं॑ दधाति॒ यं सू॒रिर॒र्थी पृ॒च्छमा॑न॒ एति॑ ॥

---

( १ ) 'सङ्ग्रामं तु प्रयातस्य राज्ञश्चैतत्०' इति ऋग्विधाने ।

सः । मर्तः । अग्ने । सुऽअनीक । रेवान् । अमर्त्ये । यः । आऽजुहोति । हव्यम् । सः । देवता । वसुऽवनिम् । दधाति । यम् । सूरिः । अर्थी । पृच्छमानः । एति ॥१०९॥

वसिष्ठस्त्रिष्टुभाऽग्निं तुष्टाव । चतुर्थेऽहनि एकविंशस्तोमखण्डे 'अग्निं नर' ( ऋ० ७.१ ) 'इत्याज्यम्' ( सां० श्रौ० सू० ११।१५।२ ) । ऋग्विधाने ( श्लो० ३०२ )—पुत्रानायुरथारोग्यमिति(१) । ऋचोऽयमर्थः । हे स्वनीक सुतेजस्क अग्ने स मर्तः मनुष्यः रेवान् धनवान् भवति, निर्धनोऽपि यः अमर्त्ये अमनुष्ये देवात्मनि (२) त्वयि हव्यं हविः आजुहोति । न केवलं स रेवान् स देवता । स एव मनुष्यः देवताभ्यः वसुवनिं धनसंभजनं (३) दधाति धारयति (४) यं मनुष्यं सूरिः प्राज्ञः (५) अर्थी याचकः(६) पृच्छमानः (७) 'असौ उदारः क्वास्ते असावुदारः किं करोति' इति पृच्छन्नेति अभिगच्छति स एवापरो देवता । रेवान्—नकार आकारोपधः० ( ऋ० प्रा० ४.६९ ) इति नलोपे प्राप्ते पादान्तत्वान्न ।

यज्ञे विप्रो व्ययं स्वहस्तेन कुर्यादित्याह(८)—

स्वहस्तेन व्ययं कुर्याद्यज्ञे विप्रः सुसंपदः ।
आहाश्रद्धावृधायज्ञान् पणीनव्ययसम्पदः ॥११०॥

---

(१) ऋग्विधानस्थोऽयं श्लोक एवम्—
'पुत्रानायुरथारोग्यं य इच्छेदव्ययं सुखम् ।
सोऽग्निं नर (ऋ० ७।१) इति सूक्तेन जुहुयादाज्यमन्वहम्' इति ।

(२) 'देवतात्मनि' इति वे० भा० 'ग' पुस्तके च ।

(३) 'धनपोषम्' इति वे० भा० ।

(४) 'यद्वा स देवताऽग्निः वसुवनिं यजमानं दधाति धारयति' इति वे० भा० ।

(५) अग्निपक्षे 'स्तोता' इति वे० भा० ।

(६) अग्निपक्षे तु 'प्रयोजनवान्' वे० भा० ।

(७) अग्निपक्षे कोऽसावग्निरिति वे० भा० ।

(८) 'कुर्यादित्यर्थं आह' इति 'ग' पुस्तके ।

विप्रः स यो विप्रः सुसंपदः भिक्षादिकां सुसम्पदं प्राप्य तस्याः शोभनायाः सम्पदो ध्यायन् स्वहस्तेन यज्ञादौ सत्कर्मणि व्ययं कुर्यात्। यदि सुसंपदं प्राप्य पणयो भवन्ति तान् यज्ञेऽव्ययसम्पदः यज्ञे व्ययरहिताः सम्पदो येषां ते पणयो वार्धुषिकास्तान् पणीन्। अश्रद्धान् न विद्यते यज्ञादौ श्रद्धा येषां तान् अवृधान् स्तुतिभिर्देवानवर्धयतः अयज्ञान् यज्ञहीनान् वृथाकालस्य नेतॄन् वसिष्ठः 'न्यक्रतून्' ( ऋ० ७. ६. ३ ) इत्यनया तान् पणीन् एवं विधानाह। तस्मात्सुसंपदो ( यो ) व्ययं स्वहस्तेन कुर्यात् स मेधावीत्युक्तम्।

तदर्थेयमृक् ( ऋ० ७. ६. ३ )—

न्य॑क्रतून्ग्रथिनो॑ मृध्रवा॑चः पणीँर॑श्रद्धाँ अ॑वृधाँ अ॑यज्ञान्।
प्रप्र तान् दस्यूँ॑रग्निर्वि॑वाय पूर्व॑श्चकारापराँ अय॑ज्यून्॥

नि। अक्रतून्। ग्रथिनः। मृध्रऽवा॑चः। पणीन्। अश्रद्धान्। अवृधान्। अयज्ञान्। प्रऽप्र। तान्। दस्यून्। अग्निः। विवाय। पूर्वः। चकार। अप॑रान्। अय॑ज्यून्॥११०॥

वसिष्ठस्त्रिष्टुभा वैश्वानराग्निं तुष्टाव। पञ्चमेऽहनि आग्निमारुते विनियोगः। प्र सम्राजः ( ऋ० ७।६।१ ) क ईं व्यक्तोति ( ऋ० ७।५६।१ ) सूत्रम् ( सां० श्रौ० सू० १०।५।२४ )। ऋचोऽयमर्थः। अक्रतून् अप्रज्ञान्। केतः केतुः चेतः चित्तं क्रतुः ( निघण्टु ३।९ ) इति तन्नाम। ग्रथिनः (१) अल्पकान् (२) तुच्छान् मृध्रवाचः हिंसितवचस्कान् पणीन् पणिनामकान् वार्धुषिकान् अश्रद्धान् यज्ञादिषु श्रद्धारहितान् अवृधान् स्तुत्या देवानवर्धयतः (३)। अयज्ञान् यज्ञरहितान् (४) तान् दस्यून् देवतस्करान्

---

( १ ) 'अयज्ञान्' इति वे० भा०।
( २ ) 'जल्पकान्' इति वे० भा०।
( ३ ) स्तुतिभिरग्निमवर्धयतः।
( ४ ) 'यज्ञहीनान्' वे० भा०।

(१) तथोक्तं भगवता 'तैर्दत्तानप्रदायैभ्यो यो भुंक्ते स्तेन एव स' ( भ० गीता ३।१२ ) इति । अग्निः प्रप्र अत्यन्तं निर्विवाय निवारयति । नितरां गमयति (२) तदेवाह–पूर्वः मुख्यः सन्नग्निः अयज्यून् अयजमानान् अपरान् जघन्यान् चकार करोति । पणींर् तथा दस्यूँ रग्निः–'ईकारोकारोपहितो रेफमेषु । स्वरेषु च' ( ऋ० प्रा० ४।६९,७० ) इति स्वरपरत्वान्नकारस्य रेफः । उपधानुनासिकत्वम् 'नकारस्य लोप रेफ०' ( ऋ० प्रा० ४।८० ) इति ।

यस्मिन्दिने देवा हविर्गृह्णन्ति तदेव सुदिनमित्याह–

गृह्णात्यग्निर्हविर्देवैर्यस्योपविश्य बर्हिषि ।
सुदिनं हि दिनं तस्य वसिष्ठोक्तं वचो ब्रुवे ॥१०२॥

यस्य यजमानस्य विप्रस्य यज्ञादौ कर्मणि बर्हिषि स्तीर्णे अग्निः देवैः सह उपविश्य हविः सोमपशुचरुपुरोडाशादीनि हवींषि गृह्णाति । क्र्यादित्वात् श्ना ( पा० ३।१।८१ ) ग्रहि ज्या० ( पा० ६।१।१६ ) इति सम्प्रसारणम् । स्वीकरोति तस्यैव यजमानस्य दिनं दिवसं सुदिनम् । यस्मिन्नग्न्यादय इज्यन्ते तत् सुदिनं भवति । 'शरीरयात्रापि च ते न प्रसिद्ध्येदकर्मणः' ( भ० गीता ३।८ ) इति भगवतोक्तत्वाद्देवा यस्मिन्नेज्यन्ते तद् वृथादिनामित्युक्तं भवति । न द्याह्वयोऽहं स्वबुद्ध्या ब्रुवे किन्तु वसिष्ठेन 'त्वामीळते' इत्यनया ' ( ऋ० ७.११.२ ) उक्तं वचो ब्रुवे ।

तत्र ऋक् ( ऋ० ७.११.२ )–

त्वामीळते अजिरं दूत्याय हविष्मन्तः सदमिन्मानुषासः ।
यस्य देवैरासदो बर्हिरग्नेऽहान्यस्मै सुदिना भवन्ति ॥

त्वाम् । ईळते । अजिरम् । दूत्याय । हविष्मन्तः । सदम् । इत् । मानुषासः । यस्य । देवैः । आ । असदः ।

(१) 'वृथा कालस्य नेतॄन्' इति वे० भा० ।
(२) 'नितरां गमयेत्' वे० भा० ।

बर्हिः । अग्ने । अहानि । अस्मै । सुऽदिना । भवन्ति ॥ १११ ॥

वसिष्ठस्त्रिष्टुभाऽग्निं तुष्टाव । प्रातरनुवाके (१) विनियुक्ता । हे अग्ने अजिरं क्षिप्रं, (२) अजिरं भुरण्युरिति तन्नाम (निघण्टु २।१५)। मानुषासः (३) मनुष्याः हविष्मन्तो यजमानाः सदमित् सदैव दूत्याय दूतकर्मणि (णे) हविर्वहनाय त्वामीळते स्तुवन्ति (४)। किमर्थमित्यत आह । यस्य हविष्मतः बर्हिः देवैः सार्धम् आसदः त्वं अधितिष्ठसि। अस्मै हविष्मते यजमानाय अहानि दिनानि सुदिना सुदिनानि शोभनदिनानि भवन्ति । सुपां सुलुक्० (पा० ७. १. ३९) इति डादेशः । अयष्टुस्तद्व्यतिरिक्तकर्म कुर्वतः सदा दुर्दिनं भवतीत्यवगन्तव्यम् । 'स्वाध्मानं वाचः सुदिनत्वमह्नाम्' (ऋ० २. २१. ६) इति ।

असदः इति यच्छब्दान्निघाताभाव इति (पा०८।१।३०)

महान्तः सर्वदा स्तुत्या इत्याह—

गुणप्रशंसया कार्यं महता मानवर्धनम् ।
क्षिप्तोऽग्नावरिभिः शक्तिर्नेन्द्रप्रशंसया मृतः ॥१०३॥

गुणानां प्रशंसा गुणप्रशंसा तया महतां गरीयसां पुंसां मानस्य वर्धनं प्राज्ञेन कार्यम् । महतां गुणप्रशंसया शक्तिवदापद्भङ्गो भवति । यथा पूर्वं शक्तिर्वसिष्ठपुत्र ऋषिः अग्नौ ज्वाल्यमाने अरिभिः शत्रुभिः सौदासैर्दहनाय क्षिप्तः सन् इन्द्रक्रतुमित्यन्तेन प्रगाथा (ऋ० ७. ३२. २६) अर्द्धर्चेनेन्द्रं प्रशशंस शिष्टेन वसिष्ठश्च । तथा इन्द्रप्रशंसया शक्तिर्न मृतः । तस्मान्मानवर्धनमभ्युदयाय भवति ।

---

(१) 'प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः' इति वे० भा०।
(२) 'क्षिप्रगामिनम्' इति वे० भा० ।
(३) 'मानुषाः' वे० भा० ।
(४) 'याचन्ते' इति वे० भा० ।

तदर्थमितिहासपूर्वा ऋक् ( ऋ० ७. ३२. २६ )–

इन्द्र क्रतुं न आ भर पिता पुत्रेभ्यो यथा ।
शिक्षा णो अस्मिन्पुरुहूत यामनि जीवा ज्योतिरशीमहि ॥

इन्द्र । क्रतुम् । नः । आ । भर । पिता । पुत्रेभ्यः । यथा । शिक्ष । नः । अस्मिन् । पुरुऽहूत । यामनि । जीवाः । ज्योतिः । अशीमहि ॥११२॥

तत्राख्यानम् (१)–

वसिष्ठस्य सुतः शक्तिः पुष्पाद्यर्थं वनं ययौ(२) ।
राज्ञः सुदासो दासास्तु वासिष्ठं ददृशुश्च तम् ॥१॥
विश्वामित्रप्रयुक्तैस्तु रक्षोभिर्वेष्टिताश्च ते(३) ।
वनाग्नौ प्राक्षिपंश्चैनं देवभक्तोऽयमित्युत ॥२॥
आस्तिकोऽयं वसिष्ठस्य पुत्र इत्येव चाऽवदन् (४) ।
प्रक्षिप्यमाणः सोऽपश्यदिन्द्र क्रतुमिति त्वृचम् ॥३॥
अर्धर्चमुक्तवानाद्यं ततोऽदह्यत वह्निना (५) ।
चिरायमाणे पुत्रे तु पुत्रस्नेहपरिप्लुतः ॥४॥
मार्गविक्षिप्तनयनो वासिष्ठोऽभ्यागमद्वनम् ।
दग्धं पुत्रमथ श्रुत्वा भूतेभ्यः शोककर्शितः(६) ॥५॥
दृष्ट्वा तु दग्धशेषं तु (७) शिक्षा णादि समापयत् ।

---

(१) वेदार्थदीपिकायामिदमाख्यानं 'पुरा किल' इत्यारब्धम् ।
(२) 'ययौ वनम्' इति वे० दी०, 'ग' पुस्तके च ।
(३) 'तैः' इति 'क' 'ग' पुस्तकयोः ।
(४) 'च क्रुधा' इति वे० दी० ।
(५) 'सोऽग्निना' इति वे० दी० ।
(६) '० कर्षितः' इति 'ग' पुस्तके ।
(७) 'ज्ञात्वा तु दृष्टशिष्टं तु' इति वे० दी० ।

(१) अथार्धर्चत्रयं शिष्टमवक्ष्यन्(२) मम(३) वै सुतः ॥६॥
अजीविष्यदयं सम्यक् स सुखी (४) शरदां शतम् ।
इन्द्रक्रतुं द्वृचे शक्तिराद्येऽर्धर्चे (५) विकल्पितः ॥७॥
ऋषिर्वसिष्ठः सूक्तस्य देवता त्विन्द्र एव हि ।
इत्युक्त्वा धृतिमालम्ब्य प्रययावाश्रमं पुनः ॥८॥
एवं तु शाट्यायनकं वदन्ति ब्राह्मणं किल ।
आद्यार्द्धर्चमेव शक्तिर्दृष्टवान् दग्ध एव सः ॥९॥
द्वृचं सर्वं वसिष्ठस्तु दृष्टवानिति ताण्डकम् ।
[ (६) इति ब्राह्मणवैमत्यं विकल्पाय प्रदर्शितम् ] ॥१०॥

'सौदासैरग्नौ प्रक्षिप्यमाणः शक्तिरन्त्यं प्रगाथम्(७)' इति सर्वानुक्रमणी ( का० स० ऋ० ७।३२ )। वासिष्ठोऽकामयत प्रजायेय(८) प्रजया पशुभिराभिसौदासान् भवेयमिति ( कौ० ब्रा०४।८) आश्विने सौर्ये क्रतौ 'उदितं सौर्याणि ।' उदु त्यं जातवेदसमिति नव, ( सां० श्रौ० सू० ९।२०।२०-२१ ) तथा 'प्रगाथं शंसति' इति ब्राह्मणे (९) (कौ० ब्रा० १८।२) विनियोगः ।

---

( १ ) 'यद्य०' वे० दी० ।
( २ ) '०मद्रक्ष्यन्' वे० दी० ।
( ३ ) 'मन्म' इति 'ग' पुस्तके ।
( ४ ) 'सुखी च' इति वे० दी० ।
( ५ ) '०राद्यार्द्धर्चे' इति 'क' 'ग' पुस्तकयोः ।
( ६ ) श्लोकार्धमिदं वेदार्थदीपिकायामधिकम् ।
( ७ ) आलेभे सोऽर्धर्चं उक्तेऽदह्यत । तं पुत्रोक्तं वसिष्ठः समापयतेति शाट्यायनकं वसिष्ठस्यैव हतपुत्रस्यार्षमिति ताण्डकम्' इत्यवशिष्टो भागः ।
( ८ ) हतपुत्रः प्रजायेय इति कौ० ब्रा० ।
( ९ ) 'प्रगाथं शंसति पशवो वै प्रगाथः पशूनामेवाऽऽप्त्या' इति । अत्र पञ्चविंशं ब्राह्मणम् ( ४।७।२-३ ) इन्द्र क्रतुं न आभरेति प्रगाथो भवति । वसिष्ठो वा एतं पुत्रहतोऽपश्यत् स प्रजया पशुभिः प्राजायत यदेष प्रगाथो भवति प्रजात्यै' ।

ऋचोऽयमर्थः। हे इन्द्र नः अस्मभ्यं क्रतुं कर्म प्रज्ञानं वा आभर आहर। हृग्रहोः० (पा० ३-१-८४ वा०) इति भत्वम्। अपि च यथा पिता पुत्रेभ्यो धनं प्रयच्छति तथा नः अस्मभ्यं शिक्ष धनं देहि। हे पुरुहूत बहुभिराहूत (अस्मिन्) यामनि यज्ञे जीवाः वयं ज्योतिः सौर्यं (१) अशीमहि प्रतिदिनं प्राप्नुयाम। शिक्षा ण इत्यद्यादित्वाद् (ऋ० प्रा० ७।३३) दीर्घे कृते प्लुताकारान्तम्० (ऋ० प्रा० ५।५८) इति णत्वम्।

पुत्राणामन्यायः पितुर्हृदि न भवतीत्यर्थं आह—

कृतापराधपुत्राणामन्यायो न पितुर्हृदि।
पाशद्युम्नस्य यज्ञस्य हन्तॄंस्तुष्टाव वारुणिः॥१०४॥

कृतोऽपराधो यैस्ते कृतापराधाः कृतापराधाश्च ते पुत्राश्च कृतापराधपुत्राः तेषां कृतापराधपुत्राणां पितुर्हृदि जनकस्य हृदयेऽन्यायो न भवति। मम पुत्रा अपराधिन इति न। वासिष्ठपुत्रदृष्टान्तेन द्रढयति। यथा वारुणिर्वसिष्ठः पाशद्युम्नस्य सम्बन्धिनो यज्ञस्य हन्तॄन् पुत्रांस्तुष्टाव। तेषामपराधेनाऽपि प्रीतो वासिष्ठः स्वसुतान् 'दूरादिन्द्रम्' इत्यनया तुष्टाव।

तत्र ऋक् (ऋ० ७. ३३. २)—

दूरादिन्द्रमनयन्नासुतेन तिरो वैशन्तमति पान्तमुग्रम्।
पाशद्युम्नस्य वायतस्य सोमात्सुतादिन्द्रोऽवृणीता वसिष्ठान्॥

दूरात्। इन्द्रम्। अनयन्। आ। सुतेन। तिरः। वैशन्तम्। अति। पान्तम्। उग्रम्। पाशऽद्युम्नस्य। वायतस्य। सोमात्। सुतात्। इन्द्रः। अवृणीत। वसिष्ठान्॥११३॥

(१) 'सूर्यम्' वे० भा०।

तत्राख्यानम् । यदा वसिष्ठपुत्राः सुदासं राजानम् अया· जयन् तदा (१) पाशद्युम्नाख्यो ( ऽपि ) राजा सोमान् यष्टु- मुद्यमं चकार । तदा ते वसिष्ठपुत्राः पाशद्युम्नं तिरस्कृत्य तदीय- यागे (२) सोमं पिबन्तम् इन्द्रं मन्त्रबलेन तस्मादाच्छिद्य सुदासो यज्ञे स्थापयामासुरिति (३) । 'श्वित्यञ्चः पञ्चूना संस्तवो वसिष्ठस्य सपुत्र- स्य (४)' इत्यनुक्रमणी ( का० स० ऋ० ७।३३ ) ।

ऋचोऽयमर्थः । वैशन्तं(५)अत्र वेशन्तशब्देन सोमाधारश्चमसो लक्ष्यते । तत्रस्थं सोमं वैशन्तम् । वेशन्तहिमवद्भ्यामण् ( पा० ४।४।११२ ) तत्र भव इत्यर्थे । पान्तं पिबन्तम् उग्रम् उद्गूर्णम् इन्द्रं सुतेन सुदासो यज्ञेऽभिषुतेन सोमेन हेतुना तिरः पाशद्युम्नं तिरस्कृत्य दूरादनयन् वसिष्ठा मन्त्रबलेनानीतवन्तः । इन्द्रोऽपि वायतस्य वयतः पुत्रस्य पाशद्युम्नस्य । द्वितीयार्थे षष्ठी । वायतं पाशद्युम्नं अति अतिहाय सुदासो यज्ञेऽभिषुतात् सोमाद्धेतोः वसिष्ठान् वसिष्ठ पुत्रान् । 'अत्रिभृगुकुत्सवसिष्ठ० ( पा० २।४।६५ ) इति बहुत्वे अणो लुक् । अवृणीत पाशद्युम्नस्य यागे चमसस्थं सोमं पिबन्निन्द्रस्तं पाशद्युम्नं तिरस्कृत्य मन्त्रसामर्थ्यबलेन सुदासो यज्ञे आवाहनकाले वसिष्ठानाजगामेत्यर्थः । अनयन्नासुतेन इत्यत्र 'पदान्तीयो ह्रस्वपूर्वो०' ( ऋ० प्रा० ६।१५ ) इति नकारस्य द्वित्वम् । इन्द्रोऽवृणीता इति 'यकाराद्यक्षरं परं वकाराद्यपि०' ( ऋ० प्रा० २।३५ ) इति

---

( १ ) 'तदैव' वे० भा० ।

( २ ) 'तदीये यागे' वे० भा० ।

( ३ ) 'तदेतद्वृत्तान्तं कीर्त्तयन् वसिष्ठः स्वसुतान् अनेन मन्त्रेण स्तौति' इति वे० भा० ।

( ४ ) '०इन्द्रेण वा संवाद' इत्यवशिष्टोंऽशः ।

( ५ ) 'वेशन्तः पल्वलम्' इति वे० भा० ।

वकारपरत्वादभिनिहितः । 'एकादशिद्वादशिनोः०' ( ऋ० प्रा० ८.३६ ) इति अष्टमत्वाद्दीर्घः ।

कुटुम्बे सीदति (१) धर्मविदकृत्यमपि कुर्यादित्याह—

कुटुम्बे पीड्यमाने तु धर्मान्नेक्षेत धर्मवित् ।
वसिष्ठः स्वापयामास यन्मुषे(२)वारुणं जनम्॥ १०५॥

कुटुम्बे क्षुधा पीड्यमाने पोष्यवर्गे सीदति सति श्रुतिस्मृतिज्ञः धर्मान् तदुक्तान् शिलोञ्छादीन् नेक्षेत नावलोकयेत् । 'अप्यकार्यशतं कृत्वा भर्तव्यः' इत्युक्तत्वात् । वासिष्ठवदकृत्यमपि कृत्वा भूषणाच्छादनाशनैः कुटुम्बं तोषयेत् । यथा वसिष्ठो धर्मज्ञोऽपि पोष्यपोषणाय मुषे (३) चोरयितुं गतः । गत्वा तदर्थं वारुणं जनं वरुणसम्बन्धि मात्रादि कुटुम्बं यदर्जुनसारमेयेत्यादिभिः सप्तभिः ( ऋ० ७.५५. २-८ ) निद्रार्थं स्वापयामास । तद्दर्शनायेतिहास-पूर्वा ऋचः प्रस्वापिन्यः 'बृहत्यादयोऽनुष्टुभः प्रस्वापिन्यः०' (४) इत्युक्तत्वात् ( का० स० ऋ० ७.५५ ) । तत्रेतिहासः-

(५) वशिष्ठः क्षुधितो(६) ऽन्नार्थी त्रिरात्रालब्धभोजनः ।
चतुर्थरात्रौ चौर्याय (७) वारुणं गृहमेत्य तु (८) ॥१॥

---

(१) 'कुटुम्बे क्षुधा सीदति' इति 'ग' पुस्तके ।

(२) 'यन्मुखे' इति 'क' पुस्तके ।

(३) 'मुखे' इति 'क' पुस्तके ।

(४) पूर्णोऽशस्तु-अमीवहाष्टौ वास्तोष्पत्याद्या गायत्री शेषास्त्र्युपरिष्टाद् बृहत्यादयोऽनुष्टुभः प्रस्वापिन्य उपनिषद् इति ।

(५) अत्रारम्भे षड्गुरुशिष्यः—
'आसां प्रस्वापिनीत्वं तु कथासु परिकल्प्यते' इति ।

(६) 'तृषितो' इति वे० भा० वे० दी० च ।

(७) 'चौर्यार्थं' वे० भा० वे० दी० च ।

(८) 'तु' इति वे० भा० ।

कोष्ठागारे प्रवेशाय (१) पालकश्वादिसुप्तये (२) ।

यदर्जुनेति (३) सत्तर्चं ददर्श च जजाप च ॥२॥

तथा बृहद्देवता ( ६।११-१४ )–

वरुणस्य गृहान् रात्रौ वसिष्ठः स्वप्नमाचरन् (४) ।

प्रविवेशाऽथ(५) तं तत्र श्वा नद्गन्नभ्यवर्तत (६) ॥११॥

क्रन्दन्तं सारमेयं स धावन्तं दष्टुमुद्यतम् ।

यदर्जुनेति च त्रिभिः(७) सान्त्वयित्वा व्यसुष्वपत् (८) ॥१२॥

एवं (९) प्रस्वापयामास (१०) जनमन्यं च वारुणम् ॥

ततः स (११) वरुणो राजा स्वान् पाशान् प्रत्यमुञ्चत(१२) ॥१३॥

स बद्धः पितरं सूक्तैश्चतुर्भिरिति उत्तरैः ।

अभितुष्टाव धीरा०(ऋ० ७।८६) इति मुमोचैनमथान्त्यया (१३)॥१४॥

तथा ऋग्विधाने ( श्लो० ३११ )–

अमीवहेति सूक्तेन भूतानि स्वापयेन्निशि ।

न हि प्रस्वापनं किञ्चिदीदृशं विद्यते क्वचित् ॥

वसिष्ठस्त्युपरिष्टाद् बृहत्यादिभिः त्र्यष्टकद्वादशकवतीभिः अनुष्टुब्भिः सारमेयं वारुणं च जनं तुष्टाव ।

---

( १ ) 'कोष्ठागारप्रवेशाय' इति वे० भा० वे० दी० च ।
( २ ) 'पालकत्वादि०' इति 'क' 'ग' पुस्तकयोः ।
( ३ ) 'यदर्जुनादि' इति वे० दी० ।
( ४ ) 'स्वप्न आचरत्' इति मु० बृ० ।
( ५ ) 'प्राविवेशाथ' इति मु० बृ० ।
( ६ ) '०धावत' इति मु० बृ० ।
( ७ ) 'द्वाभ्याम्' इति वे० भा० तथा मु० बृ० ।
( ८ ) 'ह्यसुष्वपत्' इति वे० भा० । 'व्यसूषुपत्' इति 'क' पुस्तके
( ९ ) 'स तं' इति मु० बृ० ।
(१०) 'प्रस्थापयामास' इति वे० भा० ।
(११) 'ततस्तु' इति मु० बृ० ।
(१२) 'स्वैः पाशैः प्रत्यवध्यत' इति मु० बृ० ।
(१३) '०वं ततः पिता' इति मु० बृ० ।

तत्र ऋचः ।

( ऋ० ७.५५.२ )–

यदर्जुन सारमेय दतः पिशङ्ग यच्छसे ।

वीव भ्राजन्त ऋष्टय उप स्रक्वेषु बप्सतो नि षु स्वप ।

यत् । अर्जुन । सारमेय । दतः । पिशङ्ग । यच्छसे ।

विऽइव । भ्राजन्ते । ऋष्टयः । उप । स्रक्वेषु । बप्सतः नि । सु । स्वप ॥ ११४ ॥

हे अर्जुन श्वेतवर्ण (१) सारमेय सरमा ( नाम ) देवशुनी तस्याः पुत्र (२) । स्त्रीभ्यो ढक् ( पा० ४।१।१२० ) । हे पिशङ्ग केषुचिदङ्गेषु पिङ्गलवर्ण एवंभूत हे शुनक त्वं दतः दन्तान् । पद्दन्नो० ( पा० ६. १. ६३ ) इति दतादेशः । यत् यदा यच्छसे विवृणोषि अस्मान् दष्टुमित्यर्थः । तदा (३) वीव भ्राजन्त ऋषयः यथाऽऽयुधानि विशेषेण भासन्ते तथा । उप अस्मत्समीपे बप्सतो भक्षयतः तव दन्ताः स्रक्वेषु स्रक्वासु ओष्ठप्रदेशेषु भासन्ते । स्रक्वाशब्द ओष्ठप्रदेशवाची (४) । तथाभूतस्त्वमिदानीं सु सुष्ठु निष्वप नितरां निद्रां कुरु ।

( ऋ० ७.५५.३ )—

स्तेनं राय सारमेय तस्करं वा पुनः सर ।

स्तोतॄनिन्द्रस्य रायसि किमस्मान्दुच्छुनायसे नि षु स्वप ॥

स्तेनम् । राय । सारमेय । तस्करम् । वा । पुनःऽसर ।

स्तोतॄन् । इन्द्रस्य । रायसि । किम् । अस्मान् । दुच्छुनऽयसे । नि । सु । स्वप ॥ ११५ ॥

---

( १ ) 'श्वेत' इति वे० भा० ।

( २ ) 'कुलोद्भव' इति वे० भा० ।

( ३ ) 'तदानीम्' इति वे० भा० ।

( ४ ) 'ओष्ठप्रदेशविशेषवाची' इति वे० भा० ।

हे पुनःसर गतमेव देशं पुनः सरतीति हे पुनःसर तादृग्भूत हे सारमेय त्वं स्तेनं प्रच्छन्नधनापहारी स्तेनः तं तस्करं प्रत्यक्षधनापहारी तस्करः तं वा राय गच्छ। इन्द्रस्य स्तोतॄनस्मान् किं रायसि गच्छसि। अस्मान् दुच्छुनायसे दुष्टशुनक इव किं धावसे (१) निषुस्वप अत्यन्तं निद्रां कुरु।

(ऋ० ७.५५.४)–

त्वं सूकरस्य दर्दृहि तव दर्दर्तु सूकरः।
स्तोतॄनिन्द्रस्य रायसि किमस्मान्दुच्छुनायसे नि षु स्वप।

त्वम्। सूकरस्य। दर्दृहि। तव। दर्दर्तु। सूकरः। स्तोतॄन्। इन्द्रस्य। रायसि। किम्। अस्मान्। दुच्छुनऽयसे। नि। सु। स्वप ॥११६॥

हे सारमेय त्वं सूकरस्य वराहस्य। द्वितीयार्थे षष्ठी। दर्दृहि विदारय। दृ विदारणे। सूकरोऽपि तव दर्दर्तु विदारयतु। तयोः नित्यवैरत्वात् (२)। अस्मान् मा दशेत्यर्थः ( स्तोतॄन् इत्यर्धर्चः पूर्वस्यामृचि व्याख्यातः )

(ऋ० ७.५५.५)–

सस्तु माता सस्तु पिता सस्तु श्वा सस्तु विश्पतिः।
ससन्तु सर्वे ज्ञातयः सस्त्वयमभितो जनः॥

सस्तु। माता। सस्तु। पिता। सस्तु। श्वा। सस्तु। विश्पतिः। ससन्तु। सर्वे। ज्ञातयः। सस्तु। अयम्। अभितः। जनः॥ ११७॥

---

(१) 'किं बाधसे' इति वे० भा०।
(२) 'युवयोर्नित्यवैरित्वात्' इति वे० भा०।

हे वरुण (१) माता त्वदीया जननी सस्तु स्वपितु। पिता च सस्तु स्वपितु। अन्यो यः श्वा शुनकः सस्तु। विश्पतिः जामाता (२) सस्तु। सर्वे ज्ञातयः बान्धवाः ससन्तु स्वपन्तु। अभितः परितः स्थितोऽयमपि सर्वो जनः सस्तु स्वपितु। स्वपिति सस्तीति द्वौ स्वपितिकर्माणौ ( निघण्टु ३।२२ )।

(ऋ० ७.५५.६)–

य आस्ते यश्च चरति यश्च पश्यति नो जनः।
तेषां संहन्मो अक्षाणि यथेदं हर्म्यं तथा॥

यः। आस्ते। यः। च। चरति। यः। च। पश्यति। नः। जनः। तेषाम्। सम्। हन्मः। अक्षाणि। यथा। इदम्। हर्म्यम्। तथा॥ ११८॥

यः जनः अस्मिन् प्रदेशे आस्ते उपविशति (३) यश्च चरति गच्छति। यः ( च ) जनः नोऽस्मान् पश्यति एवंभूतानां तेषां जनानाम् अक्षाणि अक्षीणि (४) संहन्मः संहनाम। संहतिर्निमीलनम्। निमीलयामेत्यर्थः। यथा इदं हर्म्यं प्रत्यक्षेणोपलभ्यमानं प्रासादादिस्थावरात्मकं वस्तु (५) निश्चलं भवति तथेमे सर्वे निश्चला भवन्त्वित्यर्थः।

( ऋ० ७.५५.७ )–

सहस्रशृङ्गो वृषभो यः समुद्रादुदाचरत्।
तेना सहस्येना वयं नि जनान्त्स्वापयामसि॥

---

( १ ) 'हे सारमेय' इति वे० भा०।
( २ ) यद्वा विशां जनानां पालको गृही इति वे० भा०
( ३ ) 'तिष्ठति' इति वे० भा०।
( ४ ) 'इन्द्रियाणि' इति वे० भा०।
( ५ ) 'वस्तुजातम्' इति वे० भा०।

सहस्रऽशृङ्गः । वृषभः । यः । समुद्रात् । उत्ऽआचरत् । तेन । सहस्येन । वयम् । नि । जनान् । स्वापयामसि ॥ ११९ ॥

सहस्रशृङ्गः सहस्रकिरणः वृषभः कामानां वर्षिता यः सूर्यः समुद्रादम्बुधेः सकाशात् उदाचरत् उदागच्छति । तेन सहस्येन अभिभवित्रा सूर्येण वयं स्तोतारः जनान् सर्वान् स्वापयामसि (१) स्वापयामः । तेना इति 'सहस्येन सुश्रवसं०' (ऋ० प्रा० ७.३७) इति दीर्घः । सहस्येना इति 'षष्ठं चाष्टाक्षरेऽक्षरम्' ( ऋ० प्रा० ८.३९ ) इति दीर्घः । जनान्त्स्वाप० 'टकारनकारयोस्तु आहुः०' ( ऋ० प्रा० ४।१७ ) इति तकारागमः ।

( ऋ० ७.९९.८. )–
प्रोष्ठेशया वह्येशया नारीर्यास्तल्पशीवरीः ।
स्त्रियो याः पुण्यगन्धास्ताः सर्वाः स्वापयामसि ॥

प्रोष्ठेऽशयाः । वह्येऽशयाः । नारीः । याः । तल्पऽशीवरीः । स्त्रियः । याः । पुण्यऽगन्धाः । ताः । सर्वाः । स्वापयामसि ॥ १२० ॥

याः यादृश्यः नारीः स्त्रियः (२) प्रोष्ठेशयाः प्राङ्गणे (३) शयानाः याः वह्येशयाः वह्यं वाहनं तस्मिन् शयानाः याः तल्पशीवरीः तल्पे शयानाः स्त्रियः याः पुण्यगन्धाः कर्पूरादिपवित्रगन्धाः(४) ताः तादृशीः सर्वाः स्त्रीः स्वापयामसि वयं स्वापयामः

---

( १ ) निष्वापयामसि नितरां स्वापयामः इति वे० भा० ।
( २ ) 'नार्यः स्त्रियः' इति वे० भा० 'ग' पुस्तके च ।
( ३ ) 'प्राङ्कणे' इति वे० भा० ।
( ४ ) 'मङ्गल्यगन्धाः' इति वे० भा० ।

निद्रां कारयामः। तस्माद्वसिष्ठः कुटुम्बार्थं तस्करो बभूवेति सिद्धम्।
तथा मनुः (म० स्मृ० १०।१०४)—

ब्राह्मणः सर्ववर्णेभ्य आददानो न दुष्यति।
जीविका(१)त्ययमापन्नो योऽन्नमत्ति यतस्ततः॥
आकाशमिव पङ्केन न स पापेन लिप्यते॥ इति।

पर्वतप्रायात् स्नेहात् तिलमात्रं तु सौहृदं निश्चलमित्याह—

बहुस्नेहात् सुहृत्सख्यात् सुहृत्सख्यं स्थिरं भवेत्।
नासत्यौ विन्दयामास यद्वसिष्ठो निमन्त्रणे॥१०६॥

सुहृच्छब्देनात्र मातामहपितामहकुलोत्पन्ना मातुलपितृव्यकादय उच्यन्ते। बहुस्नेहेन यत्सुहृत्सख्यम्। सख्युर्यः (पा० ५.१.१२६) इति भावे यः। तस्माद्बहुस्नेहात् सुहृत्सख्यात् सुहृद्भिः सह यत्सख्यं तत्स्थिरं भवेत्। तद्वसिष्ठोक्तेन द्रढयति। नासत्ययोः अश्विनोर्निमन्त्रणे आमन्त्रणे आह्वाने यत्सौहृदं तद्वसिष्ठो विन्दयामास।

तत्र ऋक् (ऋ०७.७२.२)—

आ नो॑ दे॒वेभि॒रुप॑ यातम॒र्वाक् स॒जोष॑सा नासत्या॒ रथे॑न।
यु॒वोर्हि नः॑ स॒ख्या पित्र्या॑णि समा॒नो बन्धु॑रु॒त तस्य॑ वित्तम्॥

आ। नः॒। दे॒वेभिः॑। उप॑। या॒त॒म्। अ॒र्वाक्। स॒ऽजोष॑सा। ना॒स॒त्या॒। रथे॑न। यु॒वोः। हि। नः॒। स॒ख्या। पित्र्या॑णि। स॒मा॒नः। बन्धुः॑। उ॒त। तस्य॑। वि॒त्त॒म्॥ १२१॥

वसिष्ठस्त्रिष्टुभाऽश्विनौ तुष्टाव। हे नासत्या नासत्यौ अश्विनौ युवां देवेभिरितरैर्देवैः सह सजोषसा समानप्रीतौ परस्परं सन्तौ नोऽस्माकमर्वागभिमुखं रथेन उप समीपे आयातम् आगच्छतम्।

(१) 'जीविता०' इति मुद्रितायां मनुस्मृत्याम्।

आगमने वन्धुत्वातिशयमाह–युवोः युवयोः (१) नः अस्माकञ्च सख्या सख्यानि पित्र्याणि पितृतः प्राप्तानि। नेदानीं स्तुत्याद्युपाधिना प्राप्तानि भवन्तीत्यर्थः। तदेवाह–उतापि च युवयोर्मम च वन्धुर्वन्धकः पितामहः समानः एक एव। विवस्वान् वरुणश्चोभावपि कश्यपाददितेर्जातौ। विवस्वानाश्विनोर्जनकः वरुणो वसिष्ठस्येति। एवं समानवन्धुत्वम्। अभवान्मिथुनमिति, यमश्विना ददथुः इत्यस्यां स्पष्टमुक्तम् ( पृ० ७३ )। तस्य वित्तम् तस्येति कर्मणि षष्ठी। तद्वन्धुत्वं (२) वित्तं जानीतम्। इति वसिष्ठेन सुहृत्सख्यं ज्ञापितं तस्मादेवमुक्तम्।

महतां पुत्रो याचितो मनसोऽधिकं ददातीत्यर्थ आह—

याच्यमानो महत्सूनुर् ददाति मनसोऽधिकम्।
नाहुषायाम्बुकामाय ब्रह्मजाऽदाद् घृतं पयः॥ १०७॥

महत्सूनुर्महत्पुत्रो याच्यमानो याचकैः प्रार्थ्यमानः सन् मनसोऽप्यधिकं मनसि कल्पितादधिकं सरस्वतीवद्ददाति। यथा ब्रह्मजा ब्रह्मणो जाता 'पञ्चम्यामजातौ' ( पा० ३. २. ९८ ) इति पञ्चम्यर्थे डः। महत्पुत्री सरस्वती अम्बुकामाय अम्बुनि कामो यस्यासौ अम्बुकामः तस्मै नाहुषाय घृतं पयश्च अदाद्दत्तवती। तद्दर्शनायेतिहासपूर्वा ऋक् ( ऋ० ७. ९५. २ )–

एकाऽचेतत्सरस्वती नदीनां शुचिर्यती गिरिभ्य आसमुद्रात्।
रायश्चेतन्ती भुवनस्य भूरेर्घृतं पयो दुदुहे नाहुषाय॥

एका। अचेतत्। सरस्वती। नदीनाम्। शुचिः। यती। गिरिऽभ्यः। आ। समुद्रात्। रायः। चेतन्ती। भुवनस्य। भूरेः। घृतम्। पयः। दुदुहे। नाहुषाय॥१२२॥

---

( १ ) 'युवोर्हि युवयोः खलु' इति वे० भा०।
( २ ) 'तं बन्धुं तद्बन्धुत्वं वा' इति वे० भा०।

तथा च (१) बृहद्देवता ( ६।२०-२४ )-

राजा वर्षसहस्राय दीक्षिष्यन्नाहुषः पुरा ।
चचारैकरथेनैतां (२) ब्रुवन् सर्वाः समुद्रगाः ॥ २० ॥
यक्ष्ये वहत मे भोगान् (३) द्वन्द्वशोऽप्यथवैकशः (४) ।
प्रत्यूचुस्तं नृपं नद्यः (५) स्वल्पवीर्याः कथं वयम् ॥ २१ ॥
वहेम भोगान् (६) सर्वांस्ते यज्ञे वर्षसहस्रके (७) ।
सरस्वतीं प्रपद्यस्व सा ते वक्ष्यति (८) नाहुष ॥ २२ ॥
तथेत्युक्त्वा जगामाथ पावनीं स (९) सरस्वतीम् ।
सा चैनं प्रतिजग्राह दुदुहे च पयो घृतम् ॥ २३ ॥
एतदत्यद्भुतं कर्म सरस्वत्या नृपं प्रति ।
वारुणिः कीर्तयामास प्रथमस्य (१०) द्वितीयया (११) ॥२४॥

सहस्रसंवत्सरेण क्रतुना यक्ष्यमाणो नाहुषो नाम (१२) सरस्वतीं नदीं प्रार्थयामास । सा च तस्मै सहस्रसंवत्सरपर्याप्तं पयो घृतञ्च प्रददौ ( अयमर्थोऽत्र प्रतिपाद्यते )। वसिष्ठस्त्रिष्टुभा सरस्वतीं तुष्टाव । नदीनामन्यासां मध्ये शुचिः पवित्रा (१३) गिरिभ्यः

( १ ) 'अत्राख्यानम्' इति 'ग' पुस्तके ।
( २ ) '० रथेनैनाम्' इति 'क' पुस्तके । '० रथेनेमाम्' इति मु० बृ० ।
( ३ ) 'भागान् मे' इति मु० बृ० ।
( ४ ) 'वाथवैकशः' इति मु० बृ० ।
( ५ ) 'सद्यः' इति 'क' 'ख' 'ग' पुस्तकेषु ।
( ६ ) 'भागान्' इति मु० बृ० ।
( ७ ) 'सत्रे वार्षसहस्रिके' इति मु० बृ० ।
( ८ ) 'वहति' इति 'ग' पुस्तके ।
( ९ ) 'जगामाशु आपगां स०' इति मु० बृ० ।
(१०) 'सरस्वतीदेवताकयोर्द्वयोः सूक्तयोः ( ऋ० ७।९५-९६ ) प्रथमसूक्तस्येत्यर्थः ।
(११) द्वितीयया ऋचेत्यर्थः । ( ऋ० ७।९५।२ ) ।
(१२) 'नाहुषो नाम राजा' इति वे० भा० ।
(१३) 'शुद्धा' इति वे० भा० ।

सकाशाद् आसमुद्रात् समुद्रपर्यन्तं यती गच्छन्ती एका सरस्वती नदी अचेतत् नाहुषस्य प्रार्थनायामचेतीत् (१) चिती संज्ञाने। तथा भुवनस्य भूतजातस्य भूरेर्बहुलस्य रायो धनानि चेतन्ती प्रज्ञापयन्ती प्रयच्छन्ती नाहुषाय राज्ञे घृतं पयश्च सहस्रसंवत्सरपर्याप्तं (२) दुदुहे दुग्धवती दत्तवती। अत्र निरुक्तम् (२।२३)—'तत्र सरस्वतीत्येतस्य नदीवद्देवतावच्च निगमा भवन्ति' इत्युक्तत्वादत्र सरस्वती नदीवत् स्तूयते॥

गुणतो महत्त्वं धनतो नेत्याह—

महत्त्वं धनतो नैव गुणतो वै महान् भवेत्।

सीदन् ज्यायान् वासिष्ठोऽभूद् मण्डूका धनिनोऽल्पकाः॥१०८॥

धनेन यो महान् स महान् न। 'धनवृद्धान् गुणैर्हीनान् धृतराष्ट्र विवर्जयेद्' (३) इत्युक्तत्वात्। यो विनयादिनिर्मलगुणैरुपेतः स वै महान् भवेत्। वासिष्ठवत्। यथा वासिष्ठेन दुर्गतेन मण्डूकान् स्तुत्वा गवादिधनं नीतं तथापि सीदन्नपि वासिष्ठो ज्यायान् ज्येष्ठो बभूव। ज्य च (पा० ५. ३. ६१) इति ज्यादेशः। ज्यादादीयसः (पा० ६. ४. १६०) इत्यात्वम्। मण्डूका दातारो धनिनोऽपि यदि निर्गुणाः तर्हि अल्पकाः क्षुद्रा अभूवन्।

तत्र ऋक् (ऋ० ७. १०३. १०)—

गोऽमा॑युरदाद॒जमा॑युरदा॒त्पृश्नि॑रदा॒द्धरि॑तो नो॒ वसू॑नि।

गवां॑ म॒ण्डूका॒ दद॑तः श॒ताानि॑ सहस्रसा॒वे प्र ति॑रन्त॒ आयुः॑॥

गोऽमा॑युः। अ॒दा॒त्। अ॒ज॒ऽमा॑युः। अ॒दा॒त्। पृश्निः॑। अदा॒त्। हरि॑तः। नः॒। वसू॑नि। गवा॑म्। म॒ण्डूकाः॑। दद॑तः। श॒तानि॑। स॒ह॒स्र॒ऽसा॒वे। प्र। ति॒र॒न्ते॒। आयुः॑॥१२३॥

---

(१) 'प्रार्थनामज्ञासीत्' इति 'ग' पुस्तके वे० भा० च।

(२) 'सहस्रसंवत्सरक्रतोः पर्याप्तम्' इति वे० भा०।

(३) 'विसर्जयेद्' इति 'ग' पुस्तके।

वसिष्ठः पर्जन्यस्तुतिसंहृष्टान् मण्डूकांस्त्रिष्टुभा तुष्टाव। वसिष्ठो वर्षकामः पर्जन्यं तुष्टाव तं मण्डूका अन्वमोदन्तेति यास्कः ( नि० ९।६ )। वृष्टिकामेनैतत्सूक्तं जप्तव्यम् (१)। अयमर्थः। गोमायुः गोरिव मायुः शब्दो यस्य तादृशोऽयं मण्डूकः। वग्नुः उपब्दिः मायुः इति वाङ्नाम ( निघण्टु १।११ )। नः अस्मभ्यं वसूनि धनानि अदात्(२)। तथा अजमायुः अजस्येव मायुर्यस्य सोऽप्यदात् (२)। तथा पृश्निवर्णः अदात् (२)। हरितः हरिद्वर्णः अदात् (२)। एते नोऽस्मभ्यं धनं दत्तवन्तः। तथा मण्डूका एते सर्वे गवां शतानि अपरिमिता गाः ददतः प्रयच्छन्तः मह्यं (३) सहस्रसावे सहस्र-संख्याका ओषधयः सूयन्त इति सहस्रसावो वर्षर्तुः तस्मिन्नायुर्जीवनं प्रतिरन्ते प्रवर्द्धयन्तु। प्रपूर्वस्तिरतिर्वर्धनार्थः (४)। असुनीते मनो अस्मास्वित्यत्र यास्कदर्शनात् ( नि० १०।४० )।

वृथापवादभङ्गाय प्रयत्नः कर्त्तव्य इत्यर्थ आह—

मिथ्यापवादभङ्गाय प्रयतेत विचक्षणः।
वसिष्ठः शपथं कृत्वा शापं दत्त्वाऽमलोऽभवत् ॥१०९॥

मिथ्याऽलीको योऽपवादः तद्भङ्गाय यः विचक्षणः स प्रयतेत। वसिष्ठवत् प्रयत्नं कुर्यात्। यती प्रयत्ने। यथा वसिष्ठो यातुधानापवाद-भङ्गार्थम् 'अद्या मुरीय' इत्यनया ( ऋ० ७.१०४.१५ ) शपथं कृत्वा अपवादवक्तुः शापं दत्त्वा अमलो निर्मलोऽभवत्। तस्मादपवादभङ्गार्थं यत्नः

---

(१) ऋग्विधानस्थः श्लोकस्त्वेवम्—
अनश्नता तु जप्तव्यं वृष्टिकामेन यत्नतः।
पञ्चरात्रे व्यतीते तु महद्वर्षमवाप्नुयात् ॥ ३२७ ॥
(२) 'ददातु' इति वे० भा०।
(३) 'अस्मभ्यं प्रयच्छन्तः' इति वे० भा०।
(४) 'वर्द्धनाय' इति 'ग' पुस्तके। प्रपूर्वकस्य तिरतेरनेकशः प्रयोगा अस्माभिः पूर्वं (पृ०८३) दत्ता द्रष्टव्याः।

कर्त्तव्य इत्युक्तम् । 'इन्द्रासोमा पञ्चाधिकैन्द्रासौमं राक्षोघ्नं शापाभिशापप्रायम्' इत्यनुक्रमणी ( का० स० ऋ० ७।१०४ ) अथाभिशपथाभिशापौ अद्या मुरीयेति यास्कः (१) ( नि० ७।४ ) ।

तत्र ऋक् ( ऋ० ७.१०४.१९ )–

**अ॒द्या मु॑रीय॒ यदि॑ यातु॒धानो॒ अस्मि॒ यदि॒ वायु॑स्त॒तप॒ पूरु॑षस्य ।**
**अधा॒ स वी॒रैर्द॒शभि॒र्वि यू॑या॒ यो मा॒ मोघं॒ यातु॑धा॒नेत्याह॑ ॥**

**अ॒द्य । मु॒री॒य॒ । यदि॑ । या॒तु॒ऽधानः॑ । अस्मि॑ । यदि॑ । वा॒ । आयुः॑ । त॒तप॑ । पुरु॑षस्य । अध॑ । सः । वी॒रैः॑ । द॒शऽभिः॑ । वि । यू॒याः॑ । यः । मा॒ । मोघ॑म् । यातु॑ऽधान । इति॑ । आह॑ ॥ १२४ ॥**

'ऋषिर्ददर्श राक्षोघ्नं पुत्रशोकपरिप्लुतः' (२) ॥
इति बृहद्देवता ( ६।२८ ) ।
'इन्द्रासोमेति सूक्तं तु जपेच्छत्रुनिबर्हणम्' (३)
इति ऋग्विधानम् ( श्लो० ३२९ )

ऋचोऽयमर्थः । यद्यहं वसिष्ठो यातुधानो राक्षसोऽस्मि तर्हि अद्य अस्मिन्नेव दिने मुरीय म्रिये । वा अथवा यद्यहं राक्षसो भूत्वा आयुः पुरुषजीवनं ततप । तप सन्तापे । हिंसितवानस्मि । तर्हि अद्य म्रिये । अध अथ एवं न स्यात् । तर्हि यो दुर्जनः मा मां मोघं निष्फलं यातुधान राक्षस इति सम्बोधनं

---

( १ ) निरुक्ते—अथापि शपथाभिशापौ ॥ 'अद्या मुरीय यदि यातुधानो अस्मि' । 'अधा स वीरैर्दशभिर्वियूया' इति ।

( २ ) अस्य द्वितीयार्धन्तु—'हते पुत्रशते तस्मिन् सौदासैर्दुःखितस्तदा' ।

( ३ ) 'जपेच्चैतच्छतावरम्' इति ऋग्विधाने । अस्यापरार्द्धं तु-'किञ्चिद्दद्याद् द्विजेभ्योऽन्ते स्तृणुते सर्वशात्रवान्' ॥ ३२६ ॥

कृत्वाऽऽह स दशभिः वीरैः पुत्रैः वियूयाः वियुक्तो भवतु। छान्दसो मध्यमपुरुषः। (१) पादादित्वादद्योति दीर्घः ( ऋ० प्रा० ७.३३ ) पूरुषस्येति 'अर्धर्चान्ते तु पूरुषः' ( ऋ० प्रा० ९.३९ ) इति दीर्घः।

'मिथ्यापवादभङ्गेषु यत्नं कुर्याद्विचक्षणः।
कृष्णोऽपि रत्नमानीय यदुवर्गेऽभवत् सुखी'॥

इति (२) चारुचर्याप्रसङ्गादाह।

दुर्जनस्वभावमाह (३)—

दुर्जनाना स्वभावोऽयं भृशं निन्दन्ति यत् सतः।
वसिष्ठस्य दुरात्मानो यातुधानेति येऽब्रुवन्॥११०॥

दुर्जनानां दुष्टानामयमेव स्वभावः एतत् सहजं यत् सतः सत्पुरुषान् भृशमत्यर्थं निन्दन्ति। वसिष्ठदृष्टान्तेन द्रढयति। तथा ये दुर्जना दुरात्मानो वसिष्ठस्य निर्मलस्य सतो यातुधान राक्षस इति सम्बोध्याऽब्रुवन्। किञ्च वसिष्ठस्य कुम्भो योनिः कुम्भाज्जात इति मन्त्रा वदन्ति। 'सत्रेह जाता विषिता०' इत्यादयः ( ऋ० ७-३३-१३ )।

तत्र वासिष्ठी ऋक् (ऋ० ७.१०४.१६)–

यो मा ऽयातुं यातुधानेत्याह यो वा रक्षाः शुचिरस्मीत्याह।
इन्द्रस्तं हन्तु महता वधेन विश्वस्य जन्तोरधमस्पदीष्ट॥

यः। मा। अयातुम्। यातुऽधान। इति। आह। यः। वा। रक्षाः। शुचिः। अस्मि। इति। आह। इन्द्रः।

---

(१) 'सार्धमद्यादिभिः प्लुतैः पादादौ व्यञ्जनोदयम्' इति प्रातिशाख्यसूत्रम्।

(२) काव्यमालायां मुद्रितचारुचर्यापुस्तकेऽयं श्लोको नोपलब्धः। ( का० मा० गु० १ )

(३) 'ग' पुस्तकेऽवतरणिकेयं नास्ति। 'वसिष्ठस्त्रिष्टुभा यातुधानत्वं परिहरति' इत्युक्त्वा ऋचमाह।

तम् । हन्तु । महता । वधेन । विश्वस्य । जन्तोः । अधमः । पदीष्ट ॥ १२९ ॥

तत्र बृहद्देवता ( ५।१४३-१५९ )–

प्राजापत्यो मरीचिर्हि मरीचेः कश्यपोऽभवत् (१)
तस्य देव्योऽभवन् जाया दाक्षायण्यस्त्रयोदश ॥१४३॥
अदितिर्दितिर्दनुष्टीला (२) दनायुः सिंहिकाविगौ (३) ।
गोधा वृशा वरिष्ठा (४) च सुरभिर्विनता तथा ॥१४४॥
कद्रूश्चैवेति दुहितॄः कश्यपाय ददौ स च ।
तासु देवासुराः सिद्धाः (५) गन्धर्वोरगराक्षसाः ॥१४५॥
वयांसि च पिशाचाश्च जज्ञिरेऽन्याश्च(६) जातयः ।
तत्रैका त्वदितिर्नाम (७) द्वादशाजनयत् सुतान् ॥१४६॥
(८) मित्रश्चैवार्यमांशश्च भगो वरुण एव च ।
धाता चैव विधाता च विवस्वांश्च महाद्युतिः ॥१४७॥
त्वष्टा पूषा तथैवेन्द्रो द्वादशो विष्णुरुच्यते ।
द्वन्द्वं तस्यास्तु जज्ञेऽथ (९) मित्रश्च वरुणश्च ह ॥१४८॥
तयोरादित्ययोः सत्रे दृष्ट्वाऽप्सरसमुर्वशीम् ।
रेतश्चस्कन्द तत्कुम्भे न्यपतद् (१०) वासतीवरे ॥१४९॥

---

( १ ) 'मारीचः कश्यपो मुनिः' इति मु० बृ० ।
( २ ) 'दनुः काला' इति मु० बृ० ।
( ३ ) 'सिंहिका मुनिः' इति मु० बृ० ।
( ४ ) 'क्रोधा विश्वा वरिष्ठा०' इति मु० बृ० ।
( ५ ) 'देवासुराश्चैव०' इति मु० बृ० ।
( ६ ) 'जज्ञिरेऽस्याश्च०' इति 'क' पुस्तके ।
( ७ ) 'त्वदितिर्देवी०' इति मु० बृ० ।
( ८ ) 'भगश्चैवार्यमांशश्च मित्रो वरुण एव च' इति मु० बृ० ।
( ९ ) 'तज्जज्ञे' इति मु० बृ० ।
( १० ) 'ह्यपतद्०' इति 'क' पुस्तके ।

तेनैव तु मुहूर्त्तेन वीर्यवन्तौ तपस्विनौ ।
अगस्त्यश्च वसिष्ठश्च तत्रर्षी सम्बभूवतुः ॥१५०॥
बहुधा पतिते शुक्रे कलशेऽथ जले स्थले ।
स्थले वसिष्ठश्च ऋषिः सम्बभूवर्षिसत्तमः (१) ॥१५१॥
कुम्भे त्वगस्त्यः सम्भूतो जले मत्स्यो महाद्युतिः (२) ।
उदियाय ततोऽगस्त्यो शम्यामात्रो महातपाः(३) ॥१५२॥
मानेन सम्मितो यस्मात् तस्मान्मान्य इहोच्यते ।
(४) यद्वा कुम्भादृषिर्जातः कुम्भेनापि हि मीयते ॥१५३॥
कुम्भ इत्यभिधानं तु परिमाणस्य लक्ष्यते ।
ततोऽप्सु गृह्यमाणासु वसिष्ठः पुष्करे स्थितः ॥१५४॥
सर्वतः पुष्करं तच्च विश्वे देवा अधारयन् ।
उत्थाय सलिलात्तस्मात् तेपेऽथ सुमहत्तपः (५) ॥१५५॥
(६) नामास्य गुणतो जज्ञे वसतेः श्रैष्ठ्यकर्मणः ।
अदृश्यमृषिभिर्हीन्द्रं सोऽपश्यत्तपसा पुरा ॥१५६॥
सोमभागानथो तस्मै प्रोवाच हरिवाहनः ।
ऋषयो वा इन्द्रमिति ब्राह्मणात्तद्धि दृश्यते ॥१५७॥
वसिष्ठश्च वसिष्ठाश्च ब्राह्मणा ब्रह्मकर्मणि ।
सर्वकर्मसु यज्ञेषु दाक्षिणीयतमास्तथा ॥ १५८ ॥
तस्माद्येऽद्यापि वासिष्ठाः सदस्याः स्युस्तु कर्हिचित् ।
अर्हयेद्दक्षिणाभिस्तान् भाल्लवेयी श्रुतिस्त्वियम् ॥१५९॥

---

(१) 'वसिष्ठस्तु मुनिः सम्भूत ऋषि०' इति मु० बृ० ।
(२) 'महामुनिः' इति 'क' पुस्तके ।
(३) 'महायशाः' इति मु० बृ० ।
(४) इदमर्धं बृहद्देवतात उद्धृतमत्र ।
(५) 'अथ तेपे महत्तपः' इति मु० बृ० ।
(६) अतः परं श्लोकचतुष्टयमुच्यमानं ( १५६-१५९ ) सन्दर्भवैशद्याय बृहद्देवतात उद्धृत्यात्र दत्तम् ।

'(१)उर्वश्यप्सरा०' इत्यादि ( नि० ५.१३ ) तस्या दर्शनान्मित्रावरुणयो रेतश्चस्कन्द ( नि० ५।१४ ) इति यास्कः। 'मित्रावरुणयोर्दीक्षितयोरुर्वशीमप्सरसं दृष्ट्वा'(२) (का०स०ऋ०१.१६६) इत्यानुक्रमणी। एवं वसिष्ठस्य कुम्भयोनित्वम्।

वसिष्ठः पूर्वोक्तया त्रिष्टुभा यातुधानत्वं परिहरति। ऋचोऽयमर्थः। यो दुर्जनः मा माम् अयातुम् अयातुधानम् अराक्षसं सन्तं हे यातुधान हे राक्षस इत्याह ब्रूते। वा अथवा यो दुष्टो रक्षाः सन् अहं वसिष्ठः शुचिरस्मि (३) इत्याह ब्रूते तम् (४) इन्द्रो देवः महता (५) वधेन वज्रेण। स्रकः वृकः वधः इति तन्नाम ( निघण्टु-२।२० )। हन्तु हिनस्तु स च विश्वस्य सर्वस्य जन्तोः जनस्य अधमो निकृष्टः सन् पदीष्ट पततु। अधमस्पदीष्ट इति 'दिवस्पृथिव्या अधमस्पदीष्ट०' (ऋ० प्रा० ४।५७) इति निपातनात् सत्वम्। तथा स्मृतिः—

दह्यमानाः सुतीव्रेण नीचाः परयशोऽग्निना।
अशक्तास्तत्पदं गन्तुं ततो निन्दां प्रकुर्वते॥

कनिष्ठाः पुत्रवत् पाल्या इत्यर्थं आह—

कनिष्ठाः पुत्रवत् पाल्याः भ्रात्रा ज्येष्ठेन निर्मलाः।
प्रगाथो निर्मलो भ्रातुः प्रागात् कण्वस्य पुत्रताम्॥१११॥

---

( १ ) 'उर्वश्यप्सरा उर्वभ्यश्नुत उरुभ्यामश्नुत उरुर्वा वशोऽस्याः। अप्सरा अप्सारिण्यपि वाऽप्स इति रूपनामाप्सातेरप्सानीयं भवत्यादर्शनीयं व्यापनीयं वा स्पष्टं दर्शनायेति शाकपूणिः। यदप्स इत्यभक्षस्य। अप्सो नामेति व्यापिनः। तद्रा भवति रूपवती तदनयात्तमिति वा तदस्यै दत्तमिति वा' इति सम्पूर्णं निरुक्तवचनम् ( नि० ५।१३ )।

( २ ) 'दृष्ट्वा वासतीवरे कुम्भे रेतोऽपतत्ततोऽगस्त्यवसिष्ठावजायेताम्' इत्यवशिष्टो भागः।

( ३ ) 'शुद्धो भवामि न राक्षसोऽस्मि' इति वे० भा०।

( ४ ) 'तमुभयविधं राक्षसं' इति वे० भा०।

( ५ ) 'महता प्रौढेन वधेनायुधेन' इति वे० भा०।

ज्येष्ठेन भ्रात्रा 'वृद्धस्य च' ( पा० ५।३।६२ ) इति ज्यादेशः। ये निर्मलाः प्रीतिकरास्ते कनिष्ठाः। 'युवाल्पयोः कन्०' ( पा० ५।३।६४ ) इति कनादेशः। पुत्रवत् पुत्रतुल्याः पालनीयाः। प्रगाथदृष्टान्तेन द्रढयति। यदि प्रगाथः निर्मलः कुटिलो नाभूत्तर्हि कण्वस्य ज्येष्ठस्य भ्रातुः पुत्रतां प्रागात् प्राप्तवान्।

तत्प्रदर्शनायेतिहासः (१)–

प्रगाथो घोरतनयः कण्वे ज्येष्ठे तु निर्गते।
प्रविश्य तद्गृहं श्रान्तः(२) तत्पत्न्यङ्के निषण्णवान् ॥१॥
सुष्वाप च ततः कण्वः क्षुधितोऽभ्यागतो वनात्।
पत्नीमपृच्छत् क्रोधान्धस्त्वदङ्के कः स्वपित्ययम् ॥ २ ॥
सा त्वब्रोचत् कनिष्ठोऽयं (३) पुत्रवत् पालितो मया।
युष्मज्जनन्यङ्क (४) इव विश्वस्तः स्वपिति प्रभो ॥ ३ ॥
जहि कोपं शाम्य मुने पुत्र एवावयोरिति।
इति पत्न्या वचः श्रुत्वा गतक्रोध उवाच सः ॥४॥
अद्यप्रभृति न भ्राता मम पुत्रस्त्वयन्त्विति (५)।
(६) इत्थं भ्रातुस्तु कण्वस्य प्रगाथः पुत्रतामगात् ॥५॥

तत्र बृहद्देवता ( ६।३५–३९ )–

कण्वश्चैव प्रगाथश्च घोरपुत्रौ बभूवतुः।
गुरुणा तावनुज्ञातावूषतुः सहितौ वने ॥३५॥
वसतोस्तु तयोस्तत्र कण्वपत्न्याः शिरः (७) स्वपत्।

---

(१) इतिहासोऽयं षड्गुरुशिष्येण स्वीयवेदार्थदीपिकायां कात्यायनसर्वानुक्रमणीविवृतावष्टममण्डलानुक्रमणीव्याख्यानारम्भे उद्धृतो द्रष्टव्यः।

(२) 'शान्तः' इति वे० दी०।

(३) 'सोवाच त्वत्कनिष्ठोऽयं०' इति वे० दी०।

(४) 'जनन्यङ्कमत्या' इति वे० दी०।

(५) ०पुत्रो भवत्विति इति वे० दी०।

(६) श्लोकार्धमिदं वेदार्थदीपिकात उद्धृतम्।

(७) 'शिरोऽस्वपत्' इति 'क' पुस्तके।

कृत्वा कनीयान् कण्वस्तु (१) उत्सङ्गे नान्वबुध्यत ॥ ३६ ॥
शप्तुकामस्तु (२) तं कण्वः क्रुद्धः पतितशङ्कया (३) ।
बोधयामास पादेन दिधक्षन्निव तेजसा ॥ ३७ ॥
विदित्वा तस्य तं भावं (४) प्रगाथः प्राञ्जलिः स्थितः ।
मातृत्वे च पितृत्वे च वरयामास तावुभौ ॥ ३८ ॥
स घौरो वाऽथ काण्वो वा (५) वंशजैर्बहुभिः सह ।
ददर्शान्यैश्च सहित ऋषिर्मण्डलमष्टमम् ॥ ३९ ॥

आद्यं द्वृचं प्रगाथोऽपश्यत् स घौरः सन् भ्रातुः कण्वस्य पुत्रतामगात् इत्यनुक्रमणी ( का० स० ऋ० ८।१ ) इति काण्वस्य प्रगाथपुत्रत्वं निगादितम्।

आपदि असाधोरपि प्रतिग्रहं कुर्यादित्यर्थं आह—

**आपद्गतो हि गृह्णीयाद्राज्ञोऽसाधोरपि स्त्रियः ।**
**दानं मेधातिथिर्लेभे राज्ञः स्त्रीत्वविपाकजम् ॥११२॥**

'दुर्गतो द्विजो न राज्ञः प्रतिगृह्णीयाल्लुब्धस्य' इति, 'दशवेश्यासमो नृपः' इति यदुक्तमनापादि तदापादि न । राजतोऽपि गृह्णीयादित्यत्रमुक्तम् । तथा—'असाधोरपि गृह्णीयात् सीदन् प्रतिग्रहो द्विजः' इत्युक्तत्वात् । तथा स्त्रिया अपि—'अन्यत्र कुलटाषण्ढपतितेभ्य' इत्यनापादि ज्ञेयम् । 'अवीरा स्त्रीस्वर्णकार' इति स्त्रियो भोजनादिनिषिद्धं तदनापादि एतत् सर्वं मेधातिथिदृष्टान्तेन द्रढयति । यथा मेधातिथिः सीदन्नासङ्गाद्राज्ञः स्त्रीरूपादसाधोरपि स्त्रीत्वविपाकजं कर्मविपाकजं दानं लेभे जग्राह । तथानुक्रमणी ( का० स० ऋ० ८. १ ) प्लायोगिश्चासङ्गो यः स्त्री भूत्वा पुमानभूत् स मेधातिथये दानं दत्त्वेति ।

---

( १ ) 'कण्वस्य' इति मु० बृ० ।
( २ ) 'हन्तुकामस्तु' इति 'क' पुस्तके ।
( ३ ) 'पापाभिशङ्कया' इति मु० बृ० ।
( ४ ) 'तद्भावम्' इति 'क' 'ख' पुस्तकयोः ।
( ५ ) मूले तु-'स घौरो वाऽथ काण्वो वेति' इत्येव परिसमापितम् । पूर्णश्लोकस्तु बृहद्देवताया अत्र दत्तोऽस्ति ।

अग्निः पोष्य इत्यपरेण श्लोकेनाह—

नित्यं पूज्यतमं ह्यग्निं तोषयेन्नैव रोषयेत् ।
आसङ्गोऽग्निरुषः स्त्रीत्वं लब्ध्वाऽसुखं यदवाप्तवान्॥ ११३॥

अतिशयेन पूज्यः पूज्यतमः तं पूज्यतमं नित्यं निरन्तरं चरुपुरोडाशादिना धीमान् सन्तोषयेत् । नैत्र रोषयेत् । नैव तं रोषयेत् हविःप्रदानाभावाद् रुष्टं न कुर्यात् । आसङ्गदृष्टान्तेन द्रढयति । यथाऽऽसङ्गो राजाऽग्निं हविषामप्रदानेन अग्नेरपूजनात् स्त्रीत्वं लब्ध्वा यद्यस्मादसुखमाप्तवान् । तस्मादग्निं प्रीणयेदित्युक्तम् ।

स्त्रीषु नारी का इति प्रश्न आह—

आर्त्ताऽऽर्त्ते मुदिते प्रीता नार्यर्ये स्त्रीषु सा भवेत् ।
खिन्नेऽस्मिन् शश्वती खिन्ना प्रीते प्रीताऽऽप्तपुंस्त्वके॥ ११४॥

या नारी अर्ये स्वामिनि भर्तरि । अर्यः स्वामिवैश्ययोः ( पा० ३. १. १०३ ) इति यत् । अर्यः स्वामी आर्त्ते दुःखिनि आर्त्ता दुःखिता तस्मिन् मुदिते सति या प्रीता मुदिता सा स्त्री नारी भवेत् । 'यतश्च निर्धारणम्' ( पा० २. ३. ४१ ) इति सप्तमी । अन्या न । तत् शश्वतीदृष्टान्तेन द्रढयति । यथा शश्वती नारी अस्मिन् भर्तरि खिन्ने गतपुंस्त्वे सति खिन्ना दुःखिता आप्तपुंस्त्वके प्रीते सति प्रीता हृष्टा तस्मात् सा नारी सर्वत्र निगदिता । शश्वती नार्यभिचक्ष्येति ( ऋ० ८. १. ३४ ) यमी नारी च शश्वती चेति । पत्नी चास्याङ्गिरसी शश्वती पुंस्त्वमुपलभ्यैनं प्रीताऽन्त्यया तुष्टावेति ।

तत्र ऋक् ( ८. १. ३४ )—

अन्व॑स्य स्थू॒रं द॑दृशे पु॒रस्ता॑दन॒स्थ ऊ॒रुर॑व॒रम्ब॑माणः ।
शश्व॑ती॒ नार्य॑भि॒चक्ष्या॑ह॒ सुभ॑द्रमर्य॒ भोज॑नं बिभर्षि ॥

अनु॑ । अ॒स्य॒ । स्थू॒रम् । द॒दृ॒शे॒ । पु॒रस्ता॑त् । अ॒न॒स्थः । ऊ॒रुः । अ॒व॒ऽरम्ब॑माणः । शश्व॑ती । नारी॑ । अ॒भि॒ऽचक्ष्य॑ । आ॒ह॒ । सु॒ऽभ॑द्रम् । अ॒र्य॒ । भोज॑नम् । बि॒भ॒र्षि॒ ॥ १२६ ॥

तत्रेतिहासः—

निघण्टुतः समाहृत्य प्रयोगानेव वैदिकान्।
दृष्ट्वेतिहासमस्पष्टं विस्पष्टः सूचितो मया ॥

आसीत् प्लयोगजा नामो विष्णुरागमे शतार्कदः।
वेकनाटः स मेनाऽभूत् तविषीतक्महेलतः ॥

यः प्लयोगस्य जाः पुत्रः नामः प्रशस्य आसीत्। कीदृशः। विष्णोर्यज्ञस्य शग्मे कर्मणि शतं बहु अर्कोऽन्नं ददातीति तादृशः पूर्वं बहुयज्ञादिकं कृत्वाऽन्नं दत्वा पश्चाल्लोभेन वाणिज्यं चकार। तस्मात् स वेकनाटः कुसीदी तविष्या तक्मस्य तक्मापत्यमिति। तक्मः शेषः अप्नः गयः जाः इति तन्नाम ( निघण्टु० २।२ )। तविषी—तक्माग्निः तस्य हेलतः क्रोधतः। हेळः हरः इति क्रोधनाम ( निघण्टु २।१३ ) मेना स्त्री अभूत्। अग्नेर्बलपुत्रत्वमोजसा बलेन मथ्यमानो जायते ( नि० ८।२ ) इति यास्कात् (१)। यदा वाणिज्यमाश्रितं तदाऽग्निशापेन स्त्री जातेत्यर्थः।

कुविद्धर्म गृहीत्वेति मेध्यातिथिर्वरं ददौ।
अस्तूरुग्नामयो राष्ट्रिंस्तूतुजित् प्राप्य वैतसम् ॥

ततो मेध्यातिथिरिति वरं ददौ। कुवित् बहु भर्म हिरण्यं गृहीत्वेति। किं हे राष्ट्रिन् ईश्वर तव ये ग्नामयः स्त्रीमुखं ऊरु बहुलमस्तु। किं कृत्वा। तूतुजित् क्षिप्रं वैतसं पुंस्त्वं प्राप्य स्तुहि स्तुहीति तुष्टाव ऋग्भिः चतसृभिः ( ऋ० ८।१।३०–३३ )। प्लुमत् ततः प्लुमत् स्वयं स्तुहि स्तुहीदेते० इति चतसृभिर्ऋग्भिः ( ऋ० ८।१।३०–३३ ) आत्मानं तुष्टाव।

अत्रचाङ्गिरसदक्तौ सा शेपं नारी च शश्वती।
दृष्ट्वा तुष्टाव भर्त्तारमन्वस्य स्थूरमित्यया ( ऋ० ८।१।३४ )

---

(१) 'यथो एतदोजसो जातमुतमन्य एनमिति चाहेत्ययमप्यग्निरोजसा बलेन मथ्यमानो जायते तस्मादेनमाह सहसः पुत्रं सहसः सूनुं सहसो यहुम्' इति।

शश्वती नारी अक्तौ रात्रौ भर्तुः शेपं पुंस्त्वं अवचाकशत् अपश्यत् दृष्ट्वा अन्वस्य स्थूरमित्यनया दृष्ट्वा भर्त्तारं तुष्टाव। तथाऽनुक्रमणीभाष्ये-

'प्लयोगनाम्नः पुत्रो राजाऽऽसङ्गाभिधानः अग्नेः शापात् स्त्रीत्वमनुभूय पश्चान्मेध्यातिथेः प्रसादात् पुमान् बभूवेति'। तं प्राप्त-पुंस्त्वं रात्रावुपलक्ष्य प्रीता शश्वती अनया त्रिष्टुभा तमस्तौत्।

तथा बृहद्देवता ( ६।४०-४१ )—

तुष्टावाङ्गिरसी (१) नारी क्षपायां (२) शश्वती पतिम् ॥४०॥
स्त्रियं सन्तं पुमांसं तं मासेन (३) कृतवानृषिः ॥ इति।

'मेधातिथिं षष्ठं यथा प्लायोगिः स्त्री सती पुमान् बभूव' (सां० श्रौ० सू० १६।११।१७)। ऋचोऽयमर्थः। (४) अस्या सङ्गस्य पुरस्तात् पुरोभागे गुह्यप्रदेशे स्थूरं स्थूलम्। स्थूलः समाश्रितमात्रो महान् भवतीति यास्कोक्तत्वात् (नि० ६।२२)। स्थूरं वृद्धं पुंस्त्वं (५) अनु ददृशे अनुदृश्यते। अनस्थः अस्थिरहितः सर्वावयवः ऊरुः (६) विस्तीर्णः अवरम्बमाणः अतिदीर्घत्वेनावाङ्मुखं लम्बमानः। शश्वती नामाङ्गिरसः सुता नारी तस्यासङ्गस्य भार्या अभिचक्ष्य एवंभूत-मवयवं निशि दृष्ट्वा तं भर्त्तारमाह। हे अर्य स्वामिन् भर्त्तः सुभद्रं शोभनं कल्याणरूपं भोजनं भोगं भोगसाधनं वा बिभर्षि धारय-

---

( १ ) अतः पूर्वं बृहद्देवतायां पङ्क्तिरियं दृश्यते—
'प्राचिदैन्द्राणि चत्वारि अन्वस्य स्थूरमित्यृचि'। इति।

( २ ) 'वसन्ती' इति मु० बृ०।

( ३ ) 'तमासङ्गं' इति मु० बृ०।

( ४ ) अत्र वेदभाष्ये प्लायोगेराख्यानमेवम्—अयमासङ्गो राजा कदाचिद्देवशापेन नपुंसको बभूव तस्य पत्नी शश्वती भर्तुर्नपुंसकत्वेन खिन्ना सती महत्तपस्तेपे। तेन च तपसा स च पुंस्त्वं प्राप। प्राप्त-पुंव्यञ्जनं तं रात्रावुपलभ्य प्रीता शश्वती अनया तमस्तौत्'।

( ५ ) 'वृद्ध सत् पुंव्यञ्जनं' इति वे० भा०।

( ६ ) यद्वा ऊरुः सुपां सुलुक्० (पा० ७।१।३९) इति द्विवचनस्य सुः। ऊरू प्रति अवलम्बमानो भवति।

सीति। डुभृञ् धारणपोषणयोः। जुहोत्यादित्वाच्छ्लुः। ( पा० २।४।७५ )। श्लौ ( पा० ६।१।१० ) इति द्वित्वम्। भृञामित् ( पा० ७।१।७६ ) इत्यभ्यासस्येत्व। समं जीमाभरयः स्त्रीणां जीवनभोजन इत्युक्तत्त्वात तं दृष्ट्वा हृष्टा।

आदरं दृष्ट्वा सद्भिर्निमन्त्रितैर्गन्तव्यमित्याह—

लज्जा त्यक्त्वैव गन्तव्यमादरेण निमन्त्रितैः।
शक्रस्यामन्त्रणे प्रोक्तं युवजानेर्निदर्शनम् ॥ ११५ ॥

यत्र कुत्रचित् कश्चित्प्रियः आदरेण निमन्त्रयति तत्र सद्भिर्लज्जां त्यक्त्वैव पुनः पुनर्गन्तुं लज्जां परित्यज्य गन्तव्यम्। एतच्छक्रस्येन्द्रस्यामन्त्रणे आह्वाने युवजानेः युवतिर्जाया यस्यासौ युवजानिः। जायाया निङ् (पा०५.४.१३४) इति निङ्। तस्य निदर्शनं कृत्वा मेधातिथिप्रियमेधाभ्यां प्रोक्तम्।

तत्र ऋक् ( ऋ० ८. २. १९ )—

ओ षु प्र याहि वाजेभिर्मा हृणीथा अभ्य१स्मान्।
महाँ इव युवजानिः ॥
ओ इति। सु। प्र। याहि। वाजेभिः। मा।
हृणीथाः। अभि। अस्मान्। महान्ऽइव। युवऽजानिः॥ १२७॥

महाव्रते अशीत्यां विनियुक्ता(१) 'तृचानि इन्द्र इत्सोमपा एक इत्यष्टौ' ( सां० श्रौ० सू० १८।७।४ ) इति। प्रियमेधमेधातिथी गायत्र्या इन्द्रं तुष्टुवतुः। हे इन्द्र त्वं वाजेभिर्वाजैः अस्मभ्यं दातव्यैरन्नैः सार्धं अस्मान् आभिमुख्येन सु सुष्ठु प्रकारेण ओ आ उ याहि शीघ्रं आयाह्येव आगच्छैव। आगच्छन् सन् मा हृणीथाः मा क्रुध्यस्व। हृणीयतिः क्रुध्यतिकर्मा ( निघण्टु २।१२ )

( १ ) अत्र 'तृचानि' इति पदं मुद्रितश्रौतसूत्रग्रन्थे तृतीयसूत्रस्याङ्गभूतं यथा 'तानि पञ्चदश तृचानि ॥ ३ ॥ इन्द्र इत्सोमपा एक इत्यष्टौ' ॥४॥ इति।

यद्वा लज्जां मा कृथाः। हृणीङ् (१) लज्जायां कण्ड्वादौ पठितः। तत्र दृष्टान्तः। महान् युवजानिरिव। यथा गुणैर्वयसाधिको युवत्याः भर्त्ता फलादि गृहीत्वा स्वभार्यां प्रति लज्जां त्यक्त्वाऽऽगच्छति तद्वत्त्वं लज्जां त्यक्त्वाऽऽगच्छेत्यर्थः। 'भोजनं तु गतं जीर्णमादरं त्वजरामरम्' इत्युक्तत्वात्। ओषु-स्वबह्वक्षरेण (ऋ० प्रा० ५.५) इति षत्वम्।

जामाता दुःसह इत्यर्थ आह—

यद्वदन्तीति तत् सत्यं जामाता दशमो ग्रहः।
ऊचे मेधातिथिर्हीन्द्रं प्रियमेधश्च तद्गुणान् ॥११६॥

लोका इति यद्वदन्ति तत् सत्यम्। इतीति किम्। जामाता भगिनी-दुहित्रादेर्भर्त्ता यथा नव ग्रहाः पीडां कुर्वन्ति तथा जामाता दशमो ग्रहः पीडते। हि यस्मात्तद्गुणान् तस्य जामातुर्गुणान् इन्द्रस्याह्वाने इन्द्रं प्रति प्रियमेधः मेधातिथिश्च प्रोचाते। 'इदं वसो द्विचत्वारिंशन्मेधातिथिराङ्गिरसश्च प्रियमेधः०' इत्युक्तत्वात् ( का० स० ऋ० ८।२ ) गायत्र्या इन्द्रं तुष्टुवतुः

तत्र ऋक् ( ऋ० ८.२.२० )-

मो ष्व१द्य दुर्हणावान्त्सायं करदारे अस्मत्।
अश्रीर इव जामाता।

मो इति। सु। अद्य। दुःऽहनावान्। सायम्। करत्। आरे। अस्मत्। अश्रीरःऽइव। जामाता ॥१२८॥

अयमर्थः। दुर्हणावान् परैर्दुःसहं हननं दुर्हणं तद्वान् इन्द्रः अद्य इदानीं अस्मदारे अस्माकं समीपे आगच्छतु। सु सुष्ठु अतिशयेन आगच्छन् सायं दिवसस्यावसानकालं मा उ करत् मा

(१) 'ह्री लज्जायां' इति 'क' पुस्तके।

कार्षीव। करोतेर्माङि लुङि 'कृमृदृरुहिभ्यश्छन्दसि' (पा० ३.१.५९) इति च्लेरङ्। सायंकाल आगमने दृष्टान्तः। अश्रीरो जामातेव। जायत इति जाः अपत्यं तन्निर्माता दुहितुः पतिः जामाता। कीदृशः। अश्रीरः न श्रीः अश्रीः साऽस्यास्तीत्यश्रीरः। मत्वर्थीयो रः। गुणैर्विहीनः। कुत्सितो जामाता असकृत् स्यालादिभिराहूतोऽपि(१) आसायंकालं विलम्बेत तद्वत्त्वं कालविलम्बं मा कृथा इति तद्गुणानूचुरित्युक्तम्।

इति श्रीद्विवेदपुरुषोत्तमसूनुना द्विवेद्याह्वयेन विरचिते नीतिमञ्जरीभाष्ये पञ्चमाष्टके नीतिवाक्यानि। शुभमस्तु।

इति पञ्चमाष्टकः समाप्तः॥

(१) 'आहूयमानोऽपि' इति वे० आ०।

॥ श्रीः ॥

# अथ षष्ठाष्टकः

सरस्वतीमहं वन्दे सभाष्या नीतिमञ्जरी ।
याद्विवेदस्य चाज्ञस्य मुखे स्थित्वा कृता यया ॥१॥

अधर्मे मतिं न कुर्यादित्यर्थ आह–

तृणं वज्रायते नृणामधर्मे धीर्यदा भवेत् ।
फेनेनापि दृढं शक्रश्चिच्छेद नमुचेः शिरः ॥११७॥

इयमाख्यायिका । पुरा किलेन्द्रोऽसुराञ्जित्वा नमुचिमसुरं ग्रहीतुं न शशाक । स च युद्ध्यमानस्तेनासुरेण जगृहे । स च गृहीत्वेन्द्रमेतम वोचत् त्वा विसृजामि रात्रावह्नि च शुष्कार्द्रेणायुधेन यदि मा न हिंसी-रिति (१) । स इन्द्रहस्तेन विसृष्टः सन्नहोरात्रयोः सन्धौ शुष्कार्द्रविलक्षणेन फेनेन तस्याधर्मरूपस्य शिरश्चिच्छेद । 'तेनेन्द्रो नमुचेरसुरस्य व्युष्टायां रात्रौ अनुदित आदित्ये न दिवा नक्तमिति शिर उदवासयत्' इति शतपथे ( श० ब्रा० १२।७।३।२ ) हरिवर्णं भवतीन्द्रश्च वै नमुचिश्चासुरः समद-धाती न नौ नक्तमित्यादिपञ्चविंशतिप्रपाठके स्पष्टमुक्तम् । गोषूक्त्यश्वसूक्ति-नाविन्द्रं गायत्र्या तुष्टवतुः । 'यदिन्द्राहं यथा त्वम्' । ( ऋ० ८।१४ ) इति पञ्चदश इति महाव्रते ( ऐ० आ० ५।२।१ ) । अथ चतुःशतं गायत्री-रिति खण्डे ( सां० श्रौ० सू० १८।१३।५ ) विनियोगः ।

अथ तत्र ऋक् ( ऋ० ८.१४.१३ )–

अपां फेनेन नमुचेः शिर इन्द्रोदवर्त्तयः ।
विश्वा यदजयः स्पृधः ।

---

( १ ) 'ग' पुस्तकेऽत्रैवाख्यानमिदं समाप्तम् ।

अपाम् । फेनेन । नमुचेः । शिरः । इन्द्र । उत् । अवर्तयः । विश्वाः । यत् । अजयः । स्पृधः ॥१२९॥

अयमर्थः । हे इन्द्र त्वम् (१) अपां फेनेन (२) वज्रीभूतेन नमुचेः असुरस्य शिरः उदवर्त्तयः शरीरादुद्गतमवर्त्तयः अच्छेत्सीः (३) इत्यर्थः । कदेति चेत् । यद्यदा विश्वाः सर्वाः स्पृधः स्पर्धमानाः आसुरीः सेनाः अजयः जितवानसि ।

'अत्रा दासस्य नमुचेः शिरो यदवर्तयो मनवे गातुमिच्छन्, ( ऋ० ५।३०।७ ),

'युजं हि मामकृथा आदिदिन्द्र शिरो दासस्य नमुचेर्मथायत्' ( ऋ० ५।३०।८ ) ।

इति निगमौ ॥

दुर्जनं द्वयुं ब्रुवन्नाह—

कार्यं हन्ति परोक्षे वै प्रत्यक्षे च प्रियंवदः ।
ऋषिभिर्विधिर्द्वयुं प्राह तं समश्नोतु (४) पातकम् ॥११८॥

यः दुर्जनः परोक्षे अक्ष्णां परः परोक्षः तस्मिन् परोक्षे दुष्कीर्तिकरो भूत्वा कार्यं हन्ति । च अपरं प्रत्यक्षे समीपे प्रियंवदो भवति । प्रियवशे वदः खच् (पा० ३. २. ३८) इति खच् । खित्वान्नुम् (पा० ६. ६. ६७) ।

---

( १ ) 'तेन विसृष्टस्त्वम्' इति 'ग' पुस्तके ।

( २ ) 'अहोरात्रयोः सन्धौ शुष्कार्द्रविलक्षणेन अपां फेनेन' इति 'ग' पुस्तके ।

( ३ ) असैत्सीरिति 'क' पुस्तके । 'अभैत्सीः' इति 'ग' पुस्तके ।

( ४ ) 'स्वयमश्नोतु' इति 'ग' पुस्तके ।

इरिबिठिर्ऋषिः तमुभयवक्तारं शत्रुं द्वयुं पातकं सर्वं समश्नोतु । सम्यग् व्याप्नोतु इति प्राह ।

तत्र ऋक् ( ऋ० ८. १८. १४ )–

**समित्तमघमश्नवद् दुःशंसं मर्त्यं रिपुम् ।**

**यो अस्मत्रा दुर्हणावाँ उप द्वयुः ॥**

**सम् । इत् । तम् । अघम् । अश्नवत् । दुःऽशंसम् मर्त्यम् । रिपुम् । यः । अस्मऽत्रा । दुःऽहनावान् । उप । द्वयुः ॥ १२० ॥**

इरिम्बिठिरुष्णिहा आदित्यांस्तुष्टाव । 'पूर्वावष्टाक्षरौ पादौ तृतीयो द्वादशाक्षरः' ( ऋ० प्रा० १६।२९ ) इति उष्णिहो लक्षणम् ।

हे आदित्याः दुःशंसं दुष्कीर्त्तिकरं रिपुं शत्रुं सन्तं मर्त्यं मनुष्यं इत् एवम् अघं पापं समश्नवत् सम्यग्व्याप्नोतु । तं कम् । यो मर्त्यः अस्मत्रा । देवमनुष्यपुरुषपुरुमर्त्येभ्यो० (पा० ५।४।५६) इति त्रा । अस्मासु अस्मद्विषये (१) दुर्हणावान् दुष्टहननवान् भूत्वा द्वयुः द्वाभ्यां प्रकाराभ्यां युक्तो भवति । अयमर्थः । प्रत्यक्षं हितं वदति परोक्षे चाहितं तादृशः कपटो द्वयुरुच्यते । यश्चास्मद्विषये एवं-विधः कपटो भवति तं पापं (२) व्याप्नोत्वित्यर्थः ।

दुर्हणावान् 'ऋकाररेफषकारा०' ( ऋ० प्रा० ५।४० ) इति णत्वे प्राप्ते 'अहकारेष्वधिक०' ( ऋ० प्रा० ५।५३ ) इति निषिद्धे हकारत्वादत्र प्राप्तिः ।

---

( १ ) 'अस्मद्विषयाय' इति 'क' पुस्तके ।

( २ ) 'व्याप्नोतीत्यर्थः' इति 'क' पुस्तके ।

उक्तं च ।

परोक्षे कार्यहन्तारं प्रत्यक्षे प्रियवादिनम् ।
वर्जयेत्तादृशं मित्रं विषकुम्भं पयोमुखम् ॥

पुरः साधुवद्वक्ति मिथ्याविनीतः परोक्षे करोत्यर्थनाशं हताशः ।
भुजङ्गप्रयातोपमं यस्य चित्तं त्यजेत्तादृशं दुश्चरित्रं कुमित्रम् ॥
इति हलायुधे ॥

अग्निपरिचर्याप्रकारमाह—

समिदाहुतिनत्याऽग्निं वेदैः परिचरेद् द्विजः ।
पापान्मुच्येत सर्वस्मात् सोभर्युक्तं वचो ब्रुवे ॥११९॥

समिधाग्निं दुवस्यत घृतैर्बोधयतातिथिम् ।
आस्मिन्हव्या जुहोतन । ( ऋ० ८. ४४. १ )—

इति ऋगुक्त्युक्तत्वात् 'पालाशं' ( पालाशीं ) समिधमभ्यादधाति । सोमो वै पलाश इति ब्राह्मणे ( कौ० ब्रा० २।२ ) समिदाधानेन सोमहुतिफलत्वात् 'यः समिदाधानं कृत्वा यथोक्ता आहुतीर्हुत्वा नमस्कृत्वा तमग्निं यथाशक्ति वेदमादित आरभ्य शक्तितोऽहरहर्जपेत् । स चार्वाक् तर्पणात् कार्यः । पश्चात् प्रातराहुतेरिति प्रातराहुत्यनन्तरं वेदाध्ययनम् । अहरहः स्वाध्यायमधीयीतेति वेदैर्द्विजः परिचरेत् । स सर्वस्मात्पापात् प्रमुच्यते । तस्य न किमप्येनः परिशिष्यते । तत्कथम् । सौभरिणा 'यः समिधा य आहुती' (ऋ०८।१९।५) इत्यादिभिर्यदुक्तं वचः तदहं द्याह्वयो ब्रुवे । सौभरिः काकुभेन प्रगाथेन छन्दसाऽग्निं स्तौति । मध्यमश्चेत् ककुप् (१) ( का० स० द्वा० ५०

---

( १ ) 'द्वादशक इत्येव ।
द्वादशाक्षरको मध्ये त्वष्टकावभितो यदि । सोष्णिक्ककुबिति प्रोक्ता 'वयमुत्वामपूर्व्य' ( ऋ० ८।२१।१ ) इति षड्गुरुशिष्यः ।

९।३)। अयुजौ जागतौ सतो बृहतीति काकुभः प्रगाथः (१)। (का० स० द्वा० प० ११।३) ककुप् चेत् पूर्वा काकुभ इत्यनुक्रमणी (का० स० द्वादशकाण्डी ११।३)। बार्हतो बृहतीपूर्वः ककुप्पूर्वस्तु काकुभ इति प्रातिशाख्ये (ऋ० प्रा० १८।१)।

तत्र ऋक् (ऋ० ८. १९. ५)–

यः समिधा य आहुती यो वेदेन ददाश मर्त्तो अग्नये।
यो नमसा स्वध्वरः।

यः। सम्ऽइधा। यः। आऽहुती। यः। वेदेन। ददाश। मर्तः। अग्नये। यः। नमसा। सुऽअध्वरः॥१३१॥

अयमर्थः। यो (२) मर्त्तो मनुष्यः स्वध्वरः शोभनेनाध्वरेण ज्योतिष्टोमादिना युक्तः सन् समिधा पालाशादिनेध्मेन यश्चाहुती आहुत्या आज्यसोमपुरोडाशादिसाध्यया। यश्च वेदेन ब्रह्मयज्ञादि-वेदाध्ययनेन नमसा नमस्कारेण अग्नये ददाश परिचरति तस्येद-र्वन्त इत्युत्तरत्र सम्बन्धः।

तत्र ऋक् (ऋ० ८. १९. ६)—

तस्येदर्वन्तो रंहयन्त आशवस्तस्य द्युम्नितमं यशः।
न तमंहो देवकृतं कुतश्चन न मर्त्यकृतं नशत्॥

तस्य। इत्। अर्वन्तः। रंहयन्ते। आशवः। तस्य।

---

(१) 'बृहतीस्थाने ककुप् चेत् काकुभः प्रगाथः। मध्यमश्चेत्क-कुबित्युक्तम्। उत्तरा सतोबृहत्येव पूर्ववत्। चतुर्थी बृहती तृतीयो द्वादशकोऽयुजौ जागतौ सतोबृहतीत्युक्ते' इति षड्गुरुशिष्यः।

(२) इयं पाकयज्ञप्रशंसापरेति भगवताऽऽश्वलायनेन व्याख्याता (आ० गृ० सू० १।४५) इत्यत्राधिकं वे० भा०।

द्युम्निऽतमम् । यशः । न । तम् । अंहः । देवऽकृतम् । कुतः । चन । न । मर्त्यऽकृतम् । नशात् ॥ १३२ ॥

तस्येव तस्यैव आशवः शीघ्रगन्तारः (१) अर्वन्तः अश्वाः । आशु अर्वा वाजी तन्नाम ( निघण्टु-१।१४ ) । रंहयन्ते वेगं कुर्वन्ति शत्रून् प्रसहन्ते इत्यर्थः । तस्यैव द्युम्नितमं दीप्तिमत्तमं यशः कीर्त्तिश्च भवति (२) । अपि च देवकृतं देवेषु विहिताकरणेन यत्कृतं अंहः पापं कुतश्चन कस्मादपि हेतोः न नशत् व्याप्नोति (३) । अशत् नशदिति तन्नाम (निघण्टु० २।१८) । न च मर्त्यकृतं (४) मनुष्येषु हिंसादि तन्न । इत्येवं पापक्षयकामेनाग्निशुश्रूषा कार्येत्युक्तं भवति ।

ब्राह्मणावमाननं न कार्यमित्यर्थं आह–

ब्राह्मणान्नावमन्येत ब्रह्मशापो हि दुस्तरः ।
भीतोऽदात् सौरभेः शापाद्वधूः पञ्चाशतं नृपः ॥ १२० ॥

पूर्वार्धं स्पष्टमुक्तम् ।

तत्र ऋक् ( ऋ० ८. १९. ३६ )–

अदान्मे पौरुकुत्स्यः पञ्चाशतं त्रसदस्युर्वधूनाम् ।
मंहिष्ठो अर्यः सत्पतिः ।

अदात् । मे । पौरुऽकुत्स्यः । पञ्चाशतम् । त्रसदस्युः । वधूनाम् । मंहिष्ठः । अर्यः । सत्ऽपतिः ॥ १३३ ॥

---

( १ ) 'व्यापनशीलाः' इति वे० भा० ।

( २ ) द्युम्नमिति धननाम धनवत्तम यशोऽन्नं च तस्य भवति इति वे० भा० ।

( ३ ) 'प्राप्नोति' इति वे० भा० ।

( ४ ) 'मनुष्यैः कृतम्' इति वे० भा० ।

तत्राख्यानम् ।

अभवत् सौभरिः काण्वः सर्वज्ञस्तत्त्ववित् पुरा ।
न च सोऽभिमतिं चक्रे संसारे क्लेशभाजने ॥ १ ॥

तपश्चरामि गङ्गायां मातापित्रोरनुज्ञया ।
पितृभ्यां समनुज्ञातो गङ्गां चैव विवेश सः ॥ २ ॥

स एकदा जले गाङ्गे मात्स्यं दृष्ट्वा कुटुम्बकम् ।
मायामोहितचित्तोऽभून्न पुत्रो न प्रिया मम ॥ ३ ॥

इति सञ्चिन्त्य बहुधा त्रसदस्युं जगाम सः ।
अर्घ्यपाद्यादिकं चक्रे कार्यं च किमिहास्ति ते ॥ ४ ॥

कन्यादानमना भूत्वा आगतस्तेऽस्मि मन्दिरम् ।
भीतोऽवोचत् त्रसदस्युर्जीर्णं दृष्ट्वा तु सौभरिम् ॥ ५ ॥

समीपं गच्छ कन्यानाम् ऋषे त्वं दारकर्मणि ।
ततः पुनर्नवं काण्वं दृष्ट्वा कन्याः प्रमोदिताः ॥ ६ ॥

सर्वास्ता वव्रिरे पश्चात् सकामा अपि हि स्वयम् ।
कन्याः पञ्चशतं दत्त्वा तुतोष तं च सौभरिम् ॥ ७ ॥

तथा च बृहद्देवता ( ६।५१–५७ )

आग्नेये स्तुती राजर्षेस्त्रसदस्योर् अदादिति ।
पञ्चाशतं वधूनाञ्च गवां तिस्रश्च सप्ततीः (१) ॥५१॥

अश्वोष्ट्राणां तथैवासौ वासांसि विविधानि च ।
रत्नानि वृषभं श्यावं तासामग्रेसरं प्रति ॥ ५२ ॥

कृतदार ऋषि (२) र्गच्छन्निन्द्रायैतच्छशंस च ।

---

(१) 'सप्ततिः' इति 'क' पुस्तके ।

(२) 'कृत्वा दारानृषिर्०' इति मु० बृ० ।

वयं(ऋ०८.२१) सूक्तेन शक्रं च प्रीतस्तेन पुरन्दरः(१)॥५३॥
ऋषे वरं वृणीष्वेति प्रह्वस्तमृषिरब्रवीत् ।
काकुत्स्थकन्याः पञ्चाशद्युगपद्रमये प्रभो ॥ ५४ ॥
कामतो बहुरूपत्वं यौवनञ्चाक्षयां रतिम् ।
शङ्खनिधिं पद्मनिधिं मद्गृहेष्वनपायिनम् ॥ ५५ ॥
प्रासादान् विश्वकर्मा तु सौवर्णांस्त्वत्प्रसादतः ।
कुर्वीत पुष्पवाटीश्च पृथक्तासां सुरद्रुमैः ॥ ५६ ॥
मा भूत् सपत्नीस्पर्धाऽऽसां (२) सर्वमस्त्विति चाब्रवीत् ।

अन्त्ये ककुप्पङ्क्ती त्रसदस्योर्दानस्तुतिरित्यनुक्रमणिका ( का० स० ऋ० ८।१९ ) इति । प्रगाथेन पङ्क्त्यन्तः पांङ्क्त इत्युक्तेन सौभरिरिन्द्राय त्रसदस्योर्दानाद् (३) हृष्टः कथयाति (४)।

इदञ्च मेऽदादिदञ्च मेऽदादित्यृषिः प्रसंख्यायाहेति यास्कः ( नि० ४।१५ )

अयमर्थः। पौरुकुत्स्यः पुरुकुत्सपुत्रः त्रसदस्युः मे मह्यं वधूनां पञ्चाशतमदात् दत्तवान् । मंहिष्ठः दातृतमः अर्यः (५) ईश्वरः राष्ट्री अर्यः इति तन्नाम ( निघण्टु २।२२ )। सत्पतिः (६) सतां पाता ।

'उत मे०' ( ऋ० ८.१९.३७ ) इति इयं पङ्क्तिः। पङ्क्तिरष्टाक्षराः पञ्चेति (७) शौनकः ( ऋ० प्रा० १६.५४ )।

---

( १ ) 'शचीपतिः' इति मु० बृ० ।
( २ ) '०स्पर्धायां' इति 'क' पुस्तके।
( ३ ) 'दानम्' इति 'ग' पुस्तके ।
( ४ ) 'इदमादिकेन प्रगाथेन त्रसदस्योर्दानमृषिः प्रशंसति' इति वे० भा० ।
( ५ ) 'अभिगन्तव्यः स्वामी वा' इति वे० भा० ।
( ६ ) 'श्रेष्ठानां स्तोतॄणां पालयिता' इति वे० भा० ।
( ७ ) पञ्च पादा भवन्तीत्यर्थः ।

तत्र ऋक् (ऋ० ८.१९.३७)—

उत मे प्रयियोर्वयियोः सुवास्त्वा अधि तुग्वनि ।
तिसृणां सप्ततीनां श्यावः प्रणेता भुवद्वसुर्दियानां पतिः ।

उत । मे । प्रयियोः । वयियोः । सुऽवास्त्वाः ।
अधि । तुग्वनि । तिसृणाम् । सप्ततीनाम् । श्यावः ।
प्रऽनेता । भुवत् । वसुः । दियानाम् । पतिः ॥ १३४ ॥

अयमर्थः । मे मह्यं उत अपि च प्रयियोः प्रयायते प्रगम्यते येन तत्प्रयियुः धनम् अश्वादि तस्य सुवास्त्वाः सुष्ठु निवासायाः नद्याः तुग्वनि (१) तीर्थे अदात् । सुवास्तुः नदी तुग्वं तीर्थं भवतीति यास्कः ( नि० ४।१५ ) । ताभिः सह । तथा वयियोः ऊयते येन तद्वयियु वस्त्रादि तस्य बहुदात् । तथा तिसृणां सप्ततीनां गवां प्रणेता प्रकर्षेण नेता अग्रतो गामी । श्यावः श्यामवर्णो वृषभः । कीदृशः दियानां दानार्हाणां गवां (२) पतिः । यो भुवत् अभवत् तेन सह बहुदान् कीदृशः । वसुः वासकः (३) ।

प्रणेतेति 'ऋकाररेफषकारा०' (ऋ० प्रा०५।४०) इति णत्वम् ।

(४) जात्या न महत्वं किन्तु दानादिनेत्याह—

जातेः पुंसो न वृद्धत्वं सदा यद्दानतो भवेत् ।
अस्तौत् सौभरिराख्वीशं चित्रं(५)सरस्वतीन्द्रवत् ॥ १२१ ॥

---

( १ ) 'अधि तुग्वनि तीर्थेऽधि' इति वे० भा० ।

( २ ) 'ताश्च गा एतत्सङ्ख्यायुक्ताः एतद्गुणयुक्ताश्च' इति वे०भा० ।

( ३ ) अतःपरं वेदभाष्ये कथितमस्ति 'अस्या ऋचो व्याख्यानं निरुक्तटीकाया उद्धृतम्' इति। इयं टीका भगवद्दुर्गाचार्यविरचितैव नान्या।

( ४ ) अवतरणिकेयं 'क' पुस्तके न दृश्यते ।

( ५ ) 'अस्तौत् सरस्वतीन्द्राभ्यां समं सौभरिराखुपम्' इति 'क' पुस्तकेऽधिकम् ।

पूर्वार्द्धं स्पष्टम् । चित्रवत् । यथा चित्रो राजा आखोः ईशः तथापि सौभरिणा दातृत्वादिन्द्रो वा घेत्याभ्यां ( ऋ० ८. २१. १७–१८ ) सरस्वतीन्द्रवद् इन्द्रसरस्वतीभ्यां समं स्तुतः तमस्तौत् ।

तत्र कथा—

चित्रो नाम राजा सरस्वतीतीरे इन्द्रार्थं यागमकृत । तत्र सौभरिर्ऋषिः बहुलाभाद् मह्यमेतावद्धनं को वा प्रायच्छदिति (१) विकल्पयते । तथा बृहद्देवता ( ६. ५८–६२ )–

(२) काण्वस्य सौभरेश्चैव यजतो वंशजैः सह ।
कुरुक्षेत्रे यवान् यक्षु (३) र्हवींषि विविधानि च ॥ ५८ ॥
आखवः सोऽभितुष्टाव इन्द्रं चित्रं सरस्वतीम् ।
इन्द्रो वेत्यनयर्चा स दानशक्तिं (४) प्रकाशयन् ॥ ५९ ॥
आखुराजोऽभिमानाच्च (५) प्रहर्षितमनाः स्वयम् ।
संस्तुतो देववच्चित्रो यद्ददौ तद्वृचेन हि (६) ॥ ६० ॥
अयुतानां सहस्रं तु निर्जग्राह (७) स्तुवन्नृषिः ।
ऋषिः प्रोवाच हृष्टात्मा नाहमर्हाम्यृषे (८) स्तुतिम् ॥ ६१ ॥
तिर्यग्योनौ समुत्पन्नो देवताः स्तोतुमर्हसि (९) ।
तमन्त्यया पुनश्चास्तौत् ······· ॥ ६२ ॥

---

( १ ) प्रयच्छेदिति 'क' पुस्तके ।
( २ ) बृहद्देवताया उद्धृतमिदं श्लोकार्धम् ।
( ३ ) यवाञ् जक्षुर्० इति मु० बृ० ।
( ४ ) 'सदा शक्तिं' इति 'क' पुस्तके ।
( ५ ) 'अभिमानाय' इति 'क' पुस्तके ।
( ६ ) 'चित्र ऋषये तु गवां ददौ' इति मु० बृ० ।
( ७ ) 'सहस्रं वै निजग्राह' इति मु० बृ० ।
( ८ ) 'म्यृचि' इति 'क' पुस्तके ।
( ९ ) 'समुद्भूतो देवताः स्तोतुमर्हति' इति 'क' पुस्तके ।

आखूत्करेषु चरुणाऽयाजदेतेन (१) मूषकान् ।
चित्र इद्राजेत्यनया स्तुत्वा वाखुपतिं (२) सदा ॥

इति ऋग्विधाने ( श्लो० २४७ ) आखुराजत्वं दर्शितम् ।

अन्त्ये द्वृचे चित्रस्य दानस्तुतिरित्यनुक्रमणी (का० स० ऋ० ८।२१)

तत्र ऋक् ( ऋ० ८. २१. १७ )–

इन्द्रो॑ वा॒ घेदि॒यन्म॒घं सर॑स्वती वा सु॒भगा॑ द॒दिर्वसु॑ ।
त्वं वा॑ चित्र दा॒शुषे॑ ॥

इन्द्रः॑ । वा॒ । घ॒ । इत् । इ॒यत् । म॒घम् । सर॑स्वती । वा॒ । सु॒ऽभगा॑ । द॒दिः । वसु॑ । त्वम् । वा॒ । चि॒त्र॒ । दा॒शुषे॑ ॥ १३५ ॥

सौभरिः काकुभेन प्रगाथेन चित्रं तुष्टाव । दाशुषे हविर्दत्तवते मह्यं इन्द्रो वा घेत् इन्द्र एव खलु इयत् एतावत् मघं ( मंहनीयं ) धनं ददिः किं प्रायच्छत् । वा अथवा सरस्वती सुभगा शोभनधना सौभाग्यवती वा वसु ददिः प्रायच्छन् अथवा हे चित्र एतन्नामक राजन् त्वं एतावद्धनं प्रादाः । इति ।

द्वितीया अन्त्या ऋक् ( ऋ० ८. २१. १८ )–

चि॒त्र इद्राजा॑ राज॒का इद॑न्य॒के य॒के सर॑स्वती॒मनु॑ ।
प॒र्जन्य॑ इव त॒तन॒द्धि वृ॒ष्ट्या स॒हस्र॑म॒युता॒ दद॑त् ॥

चि॒त्रः । इत् । राजा॑ । रा॒ज॒काः । इत् । अ॒न्य॒के । य॒के । सर॑स्वतीम् । अनु॑ । प॒र्जन्यः॑ऽइव । त॒तन॑त् । हि । वृ॒ष्ट्या । स॒हस्र॑म् । अ॒युता॑ । दद॑त् ॥ १३६ ॥

---

( १ ) 'यजेदेतेन मूषकान्' इति ऋग्विधानपुस्तके ।
( २ ) 'चाखुपतिं' इति ऋ० वि०

अनया चित्र एव प्रादादिति निश्चयमकार्षीत् । चित्र इव चित्र एव राजा । अन्यके अन्ये यके (१) ये राजकाः राजानः । सर्वत्र कुत्सार्थः कः । यः चित्रः सरस्वतीमनुलक्षीकृत्य सहस्रं सहस्र-संख्याकं धनम् । अयुता अयुतानि धनानि च ददत् प्रयच्छन् । अस्मदादिसर्वान् याचकजनान् ततनत् (२) परिपूर्णमनोरथान-कार्षीत् । ततेर्लुङिनो रूपम् । तत्र दृष्टान्तः । पर्जन्य इव वृष्ट्या । यथा पर्जन्यः (३) सर्वत्र वृष्ट्या सर्वं परिपूर्णमनोरथं करोति तद्वत् एवं चित्रो मूषकपतिः(४)दातृत्वान्महत्त्वं प्राप्त इत्युक्तं भवति ।

आपत्काले कोविदः स्यादृ इत्याह (५)—

आपत्कालयुते रूपे मूढो न स्याद्विचक्षणः ।

स्त्रीरूपमूढ(६)मासङ्गं स्त्रीधर्मं वज्र्यशिक्षयत् ॥ १२२ ॥

यः विचक्षणः (सः) आपत्कालयुते रूपे मूढो मूर्खो न स्यात् । यां यामवस्थां प्राप्नोति तां तां सहेत ध्रुवमिति तामवस्थां चतुरो भूत्वा सहेते-त्यर्थः । तत्कुतः । तस्यामवस्थायां स्त्रीरूपयुक्तात् । रूपे चतुरः कृतः । तदधः पश्यस्वेत्यनयाह—'अधः पश्यस्व०' ( ऋ. ८.३३.१९ ) इत्यत्र कन्यां तां स्त्रीधर्मं मघवाऽब्रवीत् । मेधातिथिः स्त्रीरूपं शिक्षयन्तमिन्द्रं तुष्टाव गायत्र्या (७) ( ऋ. ८. ३३.१६-१९ )

---

( १ ) अल्प इत्यर्थे कः । 'अल्पा येऽन्ये राजका इत् राजान एव' इति वे० भा० ।

( २ ) 'धनैस्तनोति' । तनोतेर्लङि चङि रूपम् । 'चङ्यन्यतर-स्याम्' इति स्वरः इति वे० भा० ।

( ३ ) 'पृथिवीं वृष्ट्या आतनोति प्रीणयति तथा चित्रः सर्वान् धनैः प्रीणयतीत्यर्थः' इति वे० भा० ।

( ४ ) 'मूषकपतित्वात्' इति 'क' पुस्तके ।

( ५ ) 'इत्यर्थं आह' इति 'क' पुस्तके ।

( ६ ) '०गूढम्' इति 'क' 'ख' पुस्तकयोः ।

( ७ ) 'अनुष्टुभा' इति भवितव्यम् । 'इति अनुष्टुबन्तम्' इति सर्वानुक्रमणी ।

तत्र ऋक् ( ऋ. ८.३३.१९ )—

अधः॑ पश्यस्व॒ मोप॒रि सं॑त॒रां पा॑द॒कौ ह॑र।

मा ते॑ कशप्ल॒कौ दृ॑श॒न् स्त्री हि ब्र॒ह्मा ब॒भूवि॑थ।

अधः॑। प॒श्य॒स्व॒। मा। उ॒परि॑। स॒म्ऽत॒राम्। पा॒द॒कौ। ह॒र। मा। ते॒। क॒श॒ऽप्ल॒कौ। दृ॒श॒न्। स्त्री। हि। ब्र॒ह्मा। ब॒भूवि॑थ ॥ १३७ ॥

(१) हे प्लायोगे त्वं स्त्री सती अधः पश्यस्व। एष स्त्रीणां धर्मः। उपरि मा पश्यस्व। उपरि दर्शनं स्त्रीणां धर्मो न भवति। पादकौ पादौ सन्तरां संश्लिष्टौ यथा भवतस्तथा हर। यथा पुरुषो विश्लिष्टपादनिधानो(२) भवति तथा त्वया स्त्रिया न कर्त्तव्यम्। अपि च कशप्लकौ कशश्च प्लकश्च कशप्लकौ। कशतिराहननकर्मा। उभे जङ्घे (३) तव मा दृशन्। अन्ये पुरुषा मा पश्यन्तु। तयोरदर्शनं वाससः सुष्ठु परिधानेन भवति। अतः सुवाससा(४) परिधानं कुरु। आगुल्फाद्वासः परिदध्यादित्युक्तं (५) हि यस्मात् त्वं ब्रह्मा सन् स्त्री बभूविथ। एवं स्त्रीरूपे चतुरः कृतः तस्मादेवमुक्तम्।

पुत्राय प्रभुत्वं नार्पयेदित्यर्थ आह—

न पुत्रायत्तमैश्वर्यं कुर्यादार्यः (६) कथञ्चन।

(७)पुत्रार्पितप्रभुत्वे हि कनीतोऽभूत्तृणोपमः ॥१२३॥

---

(१) अतः पूर्वं वेदभाष्ये—अन्तरिक्षादागच्छन् रथस्थ इन्द्रः स्त्रियं सन्तं स्वस्मात् पुंस्त्वमिच्छन्तं प्लायोगिं यदुवाच तदाह।

(२) 'विश्लिष्टपादो' इति 'क' 'ग' पुस्तकयोः।

(३) 'कशप्लकावुभे अङ्गे' इति वे० भा०।

(४) 'सुष्ठु वाससा' इति वे० भा०।

(५) 'स्त्रियो ह्यागुल्फादभिसंवीता भवन्ति' इति वे० भा०।

(६) 'प्रकुर्वीत' इति 'ग' पुस्तके।

(७) 'यदि कुर्यात्तु कानीतराजेव तृणतामियात्' इति 'ग' पुस्तके।

आर्यः विद्वान् ऐश्वर्यं धनादिकं पुत्रायत्तं पुत्रस्वामित्वं न कुर्यात् । कथञ्चन कदाचिदपि कुर्यात्, तर्हि कनीतराजा इव तृणोपमो भवति । हि यस्मात् कनीतो राजा तृणोपमोऽभूत् । किंविशिष्टः पुत्रार्पितप्रभुत्वः । पुत्रेऽर्पितं प्रभुत्वं राजकार्यं येन सः । पुरा कनीतो राजा पुत्रं राज्येऽभिषिच्य स्वयं निर्ममो बभूव । ततः पुत्रो राज्यं प्राप्य वशाय अन्येभ्यो दानं दत्वा पृथुश्रवाः पृथुकीर्तिर्जातः । उक्तञ्च—

कृत्वा पुत्रं तु राजानं स्वयं वभूव निर्ममः ।

कनीयान् वै कनीतोऽभूत् पुत्रो जातः पृथुश्रवाः ॥ इति ।

तथा च बृहद्देवता ( ६।७९ )—

वशायाश्र्याय(१) यत्प्रादात् कानीतस्तु पृथुश्रवाः ।

तदत्र स्तूयते(२) दानम् 'आ स एतु' एवमादिभिः (३) ॥

'आ स (ऋ० ८।४६।२१) आदि कानीतस्य पृथुश्रवसो दानस्तुतिरित्यनुक्रमणिका' । (का० स० ऋ० ८।४६ )। वाशमष्टमम् । यथा वशोऽश्वाः(४) पृथुश्रवसि कानीते सनिं ससान । (५) इति सूत्रम् ( सां० श्रौ० सू० १६।११। २२-२३ )।

तदर्थेयमृक् ( ऋ० ८.४६.२४. )—

**दानासः पृथुश्रवसः कानीतस्य सुराधसः ।**

**रथं हिरण्ययं ददन्मंहिष्ठः सूरिरभूद्वर्षिष्ठमकृत श्रवः ॥**

**दानासः । पृथुऽश्रवसः । कानीतस्य । सुऽराधसः । रथम् । हिरण्ययम् । ददत् । मंहिष्ठः । सूरिः । अभूत् । वर्षिष्ठम् । अकृत । श्रवः ॥ १३८ ॥**

---

( १ ) 'वशाख्याय तु' इति 'क' पुस्तके ।

( २ ) 'संस्तुतम्' इति 'क' 'ख' पुस्तकयोः, वे० दी० च ।

( ३ ) 'आ स इत्येवमादिभिः' इति मु० बृ० ।

( ४ ) 'वशोऽश्व्यः' इति मुद्रितसूत्रग्रन्थे ।

( ५ ) तदनन्तरं सूत्रन्तु 'आ स एतु य ईवदेति च सूक्तम्' इति ।

महदुक्थे विनियोगः। 'अथैतं वशमर्द्धर्चशः शंसति (सां० श्रौ० सू० १८।१४।१) इति सूत्रम् । 'अथ वशं शंसत्युदरं वै वशः' इति ब्राह्मणे ( सां० आ० २।११ ) । वशः पङ्क्त्या पृथुश्रवसं तुष्टाव(१)। पृथुश्रवसः कानीतस्य कनीतपुत्रस्य सुराधसः शोभन-दानधनस्य दानासः दानानि पूर्वोक्तानि रथं हिरण्ययं हिरणमयं च ददत् प्रयच्छन् मंहिष्ठः अतिशयेन दाता सूरिः(२) देवस्य स्तोता । रुद्रः सूरिः इति तन्नाम (निघण्टु ३।१६) । अभूत् भवति भवतु वा। एवंगुणो भूत्वा वर्षिष्ठम् अतिशयेन प्रवृद्धं श्रवः कीर्तिं अकृत करोति करोतु वा । तस्मात् पुत्रः पृथुश्रवा जातः पिता तृणोपमो जात इत्युक्तम् ।

दुष्टप्रतिग्रहेणापि वर्त्तेत, पणिवृत्त्या नैवेत्यर्थ आह—

प्रतिग्रहेण जीवेत्तु(३) पणिवृत्त्या न वै द्विजः ।
पृषध्रो गर्दभग्राही निन्दकोऽभूत् कलिः पणेः(४) ॥१२४॥

द्विजः उञ्छशिलाद्यभावे प्रतिग्रहेण—

अस्ति वाच्यद्विजैर्नीतं धनं दुष्टपरिग्रहे ।
अग्नितीर्थेषु पतितं सद्यो याति पवित्रताम् ॥

इत्युक्तत्वात् । दुष्टपरिग्रहेणापि वर्त्तेत । पोष्यपोषणं कुर्यात् । परन्तु पणिवृत्त्या न। 'न स्तेनः स्यान्न वार्धुषी' इति याज्ञवल्क्ये। यथा पृषध्र ऋषि-र्गर्दभग्राह्यभूत् । पृषध्रेण 'शतं मे गर्दभानाम्' ( ऋ० ८.५६.३ ) इत्युक्तेन गर्दभप्रतिग्रहेण दुष्टेनापि पोष्यपोषणं कृतम्। कलिना ऋषिणा 'कदू मही०' इत्यनया ( ऋ० ८.६६-१० )च पणिर्वणिङ् निन्दितः। तदग्रे दर्शयिष्यते। अतस्तां वृत्तिं परिवर्जयेत् ।

---

(१) 'पूर्वमन्त्रैः प्रतिपादितानि धनानि बन्धूनां पितुर्वा पुरस्ता-न्निर्दिशन् आशास्ते' इति वे० भा० ।
(२) 'सर्वस्य प्रेरकः, प्राज्ञो वा' इति वे० भा० ।
(३) 'जीवेत' इति 'क' पुस्तके ।
(४) 'पणिः' इति 'क' पुस्तके ।

पृषध्रो गायत्र्या प्रस्कण्वं तुष्टाव । 'भूरीत् पञ्चकृशः प्रस्कण्वस्य दानस्तुतिर्गायत्रन्तु' ( का० स० ऋ० ८।९९ ) इत्यत्र द्वयमप्यनुपपन्नम् । परं गायत्रं प्राग्वत् स प्रेरित्युक्तत्वाद्गायत्रग्रहणं न घटते । अपरं त्वेतत् प्रस्कण्वस्य दानस्तुतिरिति सूत्रे विप्रतिपत्तिः । प्रास्कण्वं नवमं यथा । प्रस्कण्व इति प्रास्कण्वस्यार्षमुक्तम् । पृषध्रस्य देवतात्वञ्च प्रतिज्ञायते वालखिल्यानुक्रमणी दुर्बला अनुयोजिता चेति भगवान् वेदपुरुषः ।

तत्र ऋक् ( ऋ० ८.९६.३. वालखिल्ये )–

शतं मे गर्दभानां शतमूर्णावतीनाम् ।

शतं दासाँ अति स्रजः ।

शतम् । मे । गर्दभानाम् । शतम् । ऊर्णाऽवतीनाम् ।

शतम् । दासान् । अति । स्रजः ॥ १२९ ॥

अयमर्थः । अयं मे मह्यं गर्दभानां शतं ऊर्णावतीनां आविकानां शतं दासान् परिचारकान् स्रजः कण्ठभूषणानि शतं शतसंख्याकान् अमंहतेति पूर्वमन्त्रक्रियाध्याहारः । दत्तवान् । मंहते इति दानकर्मा ( नि० १।७; निघण्टु ३।२० ) गर्दभानामित्यनवगृह्यमाणत्वं न ।

इन्द्रस्य सख्युः फलातिशयमाह—

यस्य स्याद्वज्रिणा सख्यं साग्निकः स धनी शुचिः ।

तपोऽस्य ब्रह्मचर्यादि भर्गेणोक्तं वचो ब्रुवे ॥ १२५ ॥

यस्य यज्वनः वज्रिणा इन्द्रेण सख्यं सख्युर्भावः सख्यम् । सख्युर्यः ( पा० ५.१.१२६ ) इति यः । स निरग्निकोऽपि साग्निकः । स निर्द्धनोऽपि धनी अशुचिरपि शुचिः । अस्य ब्रह्मचर्यादि तपो भवति । एतद्भर्गेणोक्तम् । 'न पापास' ( ऋ० ८.६१.११ ) इत्यनया उक्तं वचो ब्रुवे ।

तत्र ऋक् ( ऋ० ८.६१.११ )—

न पा॒पासो॑ मनाम॒हे नारा॑यासो॒ न जल्ह॑वः ।

यदि॒न्न्विन्द्रं॒ वृष॑णं॒ सचा॑ सु॒ते सखा॑यं कृ॒णवा॑महै ॥

न । पा॒पासः॑ । म॒ना॒म॒हे॒ । न । अरा॑यासः । न ।

जल्ह॑वः । यत् । इत् । नु । इन्द्र॑म् । वृष॑णम् । सचा॑ ।

सु॒ते । सखा॑यम् । कृ॒णवा॑महै ॥ १४० ॥

भर्गो बृहत्या इन्द्रं तुष्टाव । यत् यदा नु क्षिप्रं(१) इन्द्रं वृषणं कामवर्षकं सुते अभिषुते सोमे सति सखायं सचा सह कृणवामहै कुर्मः (२) । तदा पापासः अकृतपुण्याः । ब्रह्मचर्यव्रतादिरहिताः इति न मन्यामहे न मनामहे । तथा अरायासः अधनाः (३) न । जल्हवः । अज्वलना निरग्निका इति न मन्यामहे । कृतव्रता नियमादिपुण्यदानवन्तोऽग्निसहिता(४) इति मन्यामहे ।

तथा च यास्कः ( नि० ६।२५ )—न पापा मन्यामहे नाधना न ज्वलनेन हीनाः । अस्त्यस्मासु ब्रह्मचर्यमध्ययनं तपोदानकर्मे-त्यृषिरब्रवीत् ।

इन्द्रोऽसुन्वतोऽनिष्टकर्त्तेत्याह—

सत्यं ब्रवीमि नासत्यमसुन्वतो महान् वधः ।

इन्द्रोऽभूत् सुन्वतो ज्योतिः प्रगाथोक्तं वचो ब्रुवे ॥ १२६ ॥

प्रगाथेन यदुक्तं 'सत्यमिद्वा' ( ऋ० ८.६२.१२ ) इति तद्वचोऽहं ब्रुवे । किम् । असुन्वतो द्विजस्य इन्द्रः महान् वधः वधसदृशो भवति । सुन्वतः

---

( १ ) 'इदानीं' इति वे० भा० ।

( २ ) 'तस्मात् पापादिरहिताः मनामहे पापादिविशिष्टानामिन्द्रसाहाय्याकरणासम्भवात्' इति वे० भा० ।

( ३ ) 'अहविष्का वा' इति वे० भा० ।

( ४ ) 'कृतव्रतनियमादिपुण्याः दानवन्तः' इति वे० भा० ।

सोमाभिषवं कुर्वतो ज्योतिः वहुतेजस्कोऽभूत् । तदहं सत्यं यथार्थमेव ब्रवीमि नासत्यम् ।

तत्र ऋक् ( ऋ० ८.६२.१२ )-

**सत्यमिद्वा उ तं वयमिन्द्रं स्तवाम नानृतम् ।**
**महाँ असुन्वतो वधो भूरि ज्योतींषि सुन्वतो भद्रा इन्द्रस्य रातयः ॥**

सत्यम् । इत् । वै । ऊँ इति । तम् । वयम् । इन्द्रम् । स्तवाम । न । अनृतम् । महान् । असुन्वतः । वधः । भूरि । ज्योतींषि । सुन्वतः । भद्राः । इन्द्रस्य । रातयः ॥१४१॥

प्रगाथः पङ्क्त्या एवमिन्द्रं तुष्टाव । वयं प्रगाथाः तमिन्द्रं सत्यामिव सत्यमेवोक्त्वा स्तवाम । अनृतमुक्त्वा न(१) । असुन्वतः अयष्टुः महान् प्रभूतः वधोऽस्ति । सुन्वतः अभिषवं कुर्वतः भूरि भूरीणि ज्योतींषि(२)ज्योतीरूपो भवति । एवंगुणस्येन्द्रस्य(३) रातयः दानानि भद्राः सम्भजनीयानि ।

इन्द्रस्य पणौ(४) निग्रहमाह—

**न शक्नोम्यप्रियं कर्त्तुमयष्टुर्बलिनः पणेः ।**
**तं प्रताडयेन्द्र बाधस्व प्रगाथोक्तं वचो ब्रुवे ॥१२७॥**

प्रगाथेनेन्द्रं प्रति यद्वचः 'पदा पणीन्०' ( ऋ० ८.६४.२ ) इत्यनयोक्तं तदहं याज्ञयो ब्रुवे । किं तत् । हे इन्द्र त्वं पाणिं वणिजं यज्ञादि-

---

( १ ) 'अस्माभिरुक्ता गुणाः सत्या एव सन्तु नानृता इत्यर्थः' इति वे० भा० ।

( २ ) 'बहून् सोमान् सुन्वतोऽभिषवं कुर्वतो यजमानस्येन्द्रकृतोऽनुग्रहो महान् भवतीत्यर्थः' इति वे० भा० ।

( ३ ) 'एवंविधस्य' इति 'क' पुस्तके ।

( ४ ) 'इन्द्रः पणेः' इति 'क' पुस्तके ।

रहितं तं प्रताडय प्रकर्षेण ताडयित्वा पादेन बाधस्व । तस्य पणेः वार्धुषिकस्याप्रियं बाधनं कर्तुं अहं न शक्नोमि । किंविशिष्टस्य अयष्टुः अयजनेन धनिनः अत एव बलिनः केवलं शरीरपोषेणन बलवतः ।

तत्र ऋक् ( ऋ० ८.६४.२ )—

**पदा पणीँरराधसो नि बाधस्व महाँ असि ।**
**न हि त्वा कश्चन प्रति ॥**

**पदा । पणीन् । अराधसः । नि । बाधस्व । महान् । असि । नहि । त्वा । कः । चन । प्रति ॥ १४२ ॥**

प्रगाथो गायत्र्या इन्द्रमेवमवोचत(१) । 'उ त्वा मदन्तु स्तोमाः०' ( ऋ० ८.५३ ) इति द्वादशर्चे' ( सां० श्रौ० सू० १८।१३।६ ) इति बृहदुक्थे विनियुक्तम् । हे इन्द्र त्वं यतो महानसि भवसि अतः पणीन् वणिजः(२) अराधसः न विद्यते यजनयोग्यं राधो धनं येषां ते तान् यष्टव्यधनरहितान् केवलधनान् पदा पादेन । पद्दन्नोमास्० ( पा० ६.१.६३ ) इति पदादेशः । ताडयित्वा(३) नि बाधस्व । हि यतः त्वा त्वां प्रति कश्चन कश्चिदपि देवो मनुष्योऽसुरो वा न समर्थः(४) ।

पणीँरराधस इति 'ईकारोकारोपहिते रेफमेषु स्वरेषु च', ( ऋ० प्रा० ४।६८.६९ ) इति इकारपूर्वत्वात् स्वरपरत्वात् नस्य रेफः । 'नकारस्य लोपरेफोष्मभावे०' ( ऋ० प्रा० ४.८० ) इति उपधासानुनासिकत्वम् ।

---

( १ ) 'एवमगादीत्' इति 'क' पुस्तके ।
( २ ) 'लुब्धान्' इति वे० भा० ।
( ३ ) 'अतिक्रम्य' इति वे० भा० ।
( ४ ) 'प्रतिनिधिः सदृशो न ह्यस्ति खलु' इति वे० भा० ।

निन्दकोऽभूत्कलिः पणेरिति वदामः ( पृ० २६८ )—

प्रतिग्रहेण जीवेत्तु पणिवृत्त्या न वै द्विजः ।
पृषध्रो गर्दभग्राही निन्दकोऽभूत्कलिः पणेः ॥

इति पूर्वं व्याख्यात एव ।

तत्र ऋक् ( ऋ० ८.६६.१० )—

कदू॒ म॒हीरधृ॑ष्टा अ॒स्य तवि॑षी॒ः कदु॑ वृ॒त्रघ्नो॒ अस्तृ॑तम् ।
इन्द्रो॒ विश्वा॑न्बेक॒नाटाँ॑ अह॒र्दृश॑ उ॒त क्रत्वा॑ प॒णीँर॒भि ॥

कत् । ऊँ इति॑ । म॒हीः । अधृ॑ष्टाः । अ॒स्य॒ । तवि॑षीः । कत् । ऊँ॒ इति॑ । वृ॒त्र॒ऽघ्नः । अस्तृ॑तम् । इन्द्रः॑ । विश्वा॑न् । बे॒क॒नाटा॑न् । अ॒हः॒ऽदृशः॑ । उ॒त । क्रत्वा॑ । प॒णीन् । अ॒भि ॥ १४३ ॥

कलिनामा ऋषिः सतोबृहत्या(१) इन्द्रं प्रति पणेर्निग्रहं ययाचे । अस्य इन्द्रस्य महीः महत्यः सेनाः अधृष्टाः परैरनाधृष्याः तविषीर्बलानि । अस्य वृत्रघ्नः वृत्रहन्तुः इन्द्रस्य कदु कदापि अस्तृतं हन्तव्यं नाभवत् । अतः इन्द्रः ईदृशेन द्विविधेन बलेन विश्वान् सर्वान् बेकनाटान्(२) । बेकेन द्विशब्देन नाटयन्तीति बेकनाटाः । कुसीदिनो वार्धुषिका उच्यन्ते । बेकनाटाः खलु कुसीदिनो भवन्तीति यास्कः ( नि० ६।२६ ) । तानहर्दृशः अहः तदुत्पादक आदित्योऽभिधेयो भवति । तं पश्यन्तीत्यहर्दृशः । करोतीत्यन्वयः । ननु सर्वे सूर्यं पश्यन्तीति कोऽतिशयः सूर्यदर्शने ?

---

( १ ) 'बृहत्या' इत्येव 'क' पुस्तके ।

( २ ) 'अनेन कुसीदिनो वृद्धिजीविनो वार्धुषिका उच्यन्ते । कथं तद्व्युत्पत्तिः । वे इति अपभ्रंशो द्विशब्दार्थे । एकं कार्षापणमृणिकाय प्रयच्छन् द्वौ मह्यं दातव्यौ नयेन दर्शयति ततो द्विशब्देनैकशब्देन च नाटयन्तीति बेकनाटाः तान्' इति वेदभाष्ये । 'विशब्देन' इति 'क' पुस्तके ।

उच्यते । इहैव सूर्यं पश्यन्ति न जन्मान्तरे । लुब्धका अयष्टारोऽन्धे तमसि मज्जन्तीति ते दृष्टप्रधानाः नास्तिकाः (१) । कुसीदिनः पणीन् अन्यान् वणिजः (२) । क्रत्वा स्वकीयेन वाणिज्यकर्मणा (३) अभि अभिभवन्ति ।

तथा च स्मृतिः (४) ( म० स्मृ० ८।१०२ ) ।

गोरक्षकानापणिकांस्तथा कारुकुसीदकान् (५) ।
प्रेष्यान् वार्धुषिकांश्चैव विप्रान् शूद्रवदाचरेत् ॥

कद्रू महीर्—'शुचिं पवित्रं तु महीर्नु०' ( ऋ० प्रा० ८।१ ) इति दीर्घः । अहर्दृशः—'०सस्वरहः सनुतः' ( ऋ० प्रा० १।१०३ ) इति रेफः । पणीरँभि—ईकारपूर्वत्वात् ( ऋ० प्रा० ४।६८, ६९ ) नस्य रेफः ।

महान्तः प्रार्थिता निष्फला न भवन्तीत्यर्थं आह—

तिरश्चामपि जीवानां याच्ञा महत्सु नाफला ।
आदित्याः प्रार्थिता मत्स्यैर्जालगैस्तानुपागमन् ॥१२८॥

तिरश्चां तिर्यग्योनिजीवानां महत्सु महान्तेष्वपि याच्ञा प्रार्थना नाफला भवति । यथा आदित्येषु देवेषु महत्सु मत्स्यानां तिर्यग्योनिजातानां प्रार्थना सफलाऽभवत्तदाह—मत्स्यैर्जालगैर्जालं प्राप्तैः मोक्षार्थे 'त्रान्नु क्षत्रियान्०' ( ऋ० ८. ६७. ) इत्यनेन प्रार्थिताः सन्तो जालनद्धान् मत्स्यान् आदित्या उपागमन् समीपं गत्वा मोचिताः ।

---

( १ ) 'अथवा लौकिकान्येवाहानि पश्यन्ति पारलौकिकान्यदृष्टानि दृष्टप्रधाना हि नास्तिकाः' इति वे० भा० ।

( २ ) 'पणिसदृशान् शूद्रकल्पान्' इति वे० भा० ।

( ३ ) 'उत शब्द एवार्थे । क्रत्वोत कर्मणैव ताडनादिव्यापारेण' इति वे० भा० ।

( ४ ) अस्य श्लोकस्य पूर्वार्द्धं मनुस्मृत्यामेवं दृश्यते—
गोरक्षकान् वाणिजिकांस्तथा कारुकुशीलवान् ।

( ५ ) 'तथा कारु-कुशीलकान्' इति 'क' पुस्तके ।

तदर्थेयमृक् ( ऋ० ८. ६७. ९ )–

जीवान्नो अभि धेतनादित्यासः पुरा हथात् ।

कद्ध स्थ हवनश्रुतः ॥

जीवान् । नः । अभि । धेतन । आदित्यासः । पुरा ।
हथात् । कत् । ह । स्थ । हवनऽश्रुतः ॥ १४४ ॥

इदमाख्यानम् ( बृहद्देवता ६।८८–९० )–

धीवराः सहसा मीनान् दृष्ट्वा सारस्वते जले ।

जालं प्रक्षिप्य तान् वद्ध्वा चाक्षिपंस्ते (१) जलात्स्थलम्॥८८॥

शरीरपातभीतास्ते(२) तुष्टुवुश्चादितेः सुतान् ।

मुमुचुस्तांस्ततस्ते च प्रसन्नास्तान् समूदिरे ॥ ८९ ॥

धीवराः क्षुद्भयं मा वो भूत् स्वर्गं प्राप्स्यथेति च ।

'वहवो वा मत्स्या जालनद्धा आदित्यानस्तुवन्' इत्यनुक्रमणी । ( का० स० ऋ० ८।६७ ) 'मत्स्यानां जालमापन्नानामेतदार्षं वेदयन्ते' इति यास्कः ( नि० ६.२७ ) ।

(३) त्यान्न्वित्यादित्यदैवत्यं क्षिप्रं मुच्येत वन्धनात्' इति ऋग्विधाने ( श्लो० ३४९ ) ।

मत्स्यो वा मान्यो वा मत्स्या वा आदित्यानस्तुवन् । अयमर्थः । हे आदित्यासः आदित्याः पुरा हथात् हननान्मृतेः पूर्वं नो अस्मान् जीवान् जीवतः सतः अभिधेतन अभिधावत । अभिधावनं कुरुत । हे हवनश्रुतः आह्वानश्रोतारः(४) यूयं कद्ध क्व नु स्थ

---

( १ ) 'तान् मत्स्यान् प्राक्षिपंस्ते' इति मु० वृ० ।

( २ ) 'स्थातु' शरीरं ते मत्स्याः' इति 'ग' पुस्तके । 'शरीरं पातुं ते मत्स्याः' इति 'क' पुस्तके ।

( ३ ) एतत्पूर्वार्धन्तु–'वद्धो वाप्यवरुद्धो वा वाग्यतः प्रयतो जपेत्'।

( ४ ) 'आह्वानं श्रुत्वा शीघ्रमागच्छत' इति वे० भा० ।

भवथ । इत्युक्तैस्तैरागत्य मोचिता इत्यर्थः ।

स्थेति 'दाधिम मदत०' ( ऋ० प्रा० ८.१५ ) इति दीर्घं प्राप्ते 'काण्वायना निष्कृतीरेतयोः स्थ' । 'जाताः सुरथा हवनश्रुतश्च' ( ऋ० प्रा० ८.२०.२१ ) इति निषेधान्न ।

क्षीरपाको वैष्णव इत्याह—

क्षीरेण तर्पयेद्विप्रान् क्षीरपाको हि वैष्णवः ।
हते वराहे शक्रेण विष्णुर्जग्राह पायसम् ॥ १२९ ॥

हि यस्मात् क्षीरपाको वैष्णवो भवति । तस्मात् समृद्धयज्ञादिकर्मान्ते क्षीरेण द्विजोत्तमांस्तर्पयेत् । क्षीरं वैष्णवं दर्शयति । शक्रेण इन्द्रेण वराहे वराहासुरे हते सति विष्णुः परमेश्वरः पायसं क्षीरं जग्राह स्वीकृतवान् ।

तदर्थेयमृक् ( ऋ० ८.७७.१० )—

विश्वेत्ता विष्णुराभरदुरुक्रमस्त्वेषितः ।
शतं महिषान् क्षीरपाकमोदनं वराहमिन्द्र एमुषम् ॥

विश्वा । इत् । ता । विष्णुः । आ । अभरत् । उरुऽक्रमः । त्वाऽइषितः । शतम् । महिषान् । क्षीरऽपाकम् । ओदनम् । वराहम् । इन्द्रः । एमुषम् ॥ १४९ ॥

(१) कुरुस्तुतिर्बृहत्या इन्द्रं तुष्टाव । तथा चरकब्राह्मणम्—

'विष्णुर्यज्ञः स देवेभ्य आत्मानमन्तरधात् तमन्यदेवता नाविदन् । इन्द्रस्त्ववेत् । स इन्द्रमब्रवीत् को भवानिति । तमिन्द्रः प्रत्यब्रवीत् अहं दुर्गाणामसुराणां च हन्ता । भवांस्तु क इति । सोऽब्रवीत् अहं दुर्गादाहर्त्ता त्वं तु यदि दुर्गाणामसुराणां हन्ता

( १ ) नीतिमञ्जरीभाष्ये मन्त्रोऽयमैतिहासिकमतभेदेनैव व्याख्यातः । नैरुक्तमतानुसारेण अस्यापरं व्याख्यानं वेदभाष्ये द्रष्टव्यम् ।

ततोऽयं वराहो (१) वाममुषः एकाविंशत्याः पुरामश्ममयीनां पारे वसति तस्मिन्नसुराणां वसु वाममस्ति (२) तमिमं जहीति । तस्येन्द्रस्ताः (३) पुरो भित्त्वा हृदयमविध्यत् (४) । (५) अधि तत्र यदासीत्तद्विष्णुराहरदिति' ।

अयमर्थः । हे इन्द्र त्वेषितः त्वया प्रेरितो विष्णुर्यज्ञरूपी त्वेपितः त्वं दुर्गादाहर्त्ता किल तर्हि त्वं तस्य धनान्याहरेति त्वया प्रेषितः सन् उरुक्रमो भूत्वा विश्वेत्ता यानि त्वया हर्त्तव्यानि इत्युक्तानि यानि च तत्र स्थितानि सर्वाण्याभरत् आहरत्(६)।हृग्रहोः० ( पा० ३।१।८४। वा०) इति भत्वम् । कानि तानीति । शतं महिषान् तेषां वाहनभूतान् महिषान्(७) क्षीरपाकं क्षीरेण पाचितमोदनं चाहरत्(८) विध्यद्वराहमित्यत्रोक्तोऽर्थश्च चरमपादेनोच्यते–इन्द्रस्तु वराहं वराहारं स्वीकृतासुरसर्वस्वं वराहरूपिणं वा एमुपं एमुषनामानं अथवा धनानामामोषकं वराहमसुरं हृदयेऽविध्यादिति शेषः ।

अस्येदु मातुः सवनेषु सद्यो० ( ऋ० १।६१।७ ) इति । निगमान्तरम् (९) ।

---

( १ ) 'वराह एव मुषकः' इति 'क' पुस्तके ।

( २ ) 'असुराणाञ्च सुवासमस्ति' इति 'क' पुस्तके ।

( ३ ) 'स्वाः' इति 'क' पुस्तके ।

( ४ ) 'अविध्यत' इति 'क' पुस्तके ।

( ५ ) 'तत्तत्क्षीरपाकमोदनादि यदासीत्' इति 'क' 'ख' पुस्तकयोः ।

( ६ ) 'आभरतु' इति वे० भा० ।

( ७ ) 'अपरिमितान् प्रशस्तान् पदार्थान् तेषां वाहनरूपान्महिषान् वा' इति वे० भा० ।

( ८ ) 'पक्वमात्रमोदनं वाऽऽभरत्' इति वे० भा० ।

( ९ ) अस्य मन्त्रस्य व्याख्याने वेदभाष्ये पूर्वमन्त्रव्याख्यानात् कोऽपि भेदो लक्ष्यते ।

यज्ञेन संसारं सारं कुर्यादित्यर्थ आह—

सोमं सुत्वाऽत्र (१) संसारं सारं कुर्वीत तत्त्ववित् ।
यथाऽऽसीत्(२)सुत्वचाऽपाला दत्त्वेन्द्राय मुखच्युतम्॥१३०॥

अत्रास्मिन् संसारे सोमं सुत्वा सोमाभिषवं कृत्वा यस्तत्त्ववित् सत्सूद्विषद्रुह० (पा० ३.२.६१) इत्यादिना क्विप् । स संसारं सार्थकं कुर्वीत । तदेव अपालादृष्टान्तेन द्रढयति । यथा अपाला ब्रह्मवादिनी यं सोमं मुखच्युतम् इन्द्राय दत्त्वा संसारं सार्थकं कृतवती इत्यर्थः ।

तत्र 'कन्या वाः०' (ऋ० ८.९१) इति सूक्ते एषोऽर्थः प्रतिपाद्यते । तथा चानुक्रान्तम्—'कन्या वाः सप्तात्रेय्यपालेतिहास ऐन्द्र आनुष्टुभं द्विपङ्क्त्यादि' (का० स० ऋ० ८।९१) ।

तत्रेतिहासः—

पुरा किलात्रिसुता अपाला ब्रह्मवादिनी केनचित् कारणेन त्वग्दोषदुष्टा सती अत एव दुर्भगेति भर्त्रा परित्यक्ता पितुराश्रमे त्वग्दोषपरिहाराय चिरकालमिन्द्रमाधिकृत्य तपस्तेपे । सा कदाचिदिन्द्रस्य सोमः प्रियकरो भवति तमिन्द्राय दास्यामीति बुद्ध्या नदीतीरं प्रत्यगमत् । सा तत्र स्नात्वा पथि सोममलभत । तमादाय गृहं प्रत्यागच्छन्ती मार्ग एव तं चखाद । तद्भक्षणकाले दन्तघर्षणजातशब्दं ग्राव्णां सोमाभिषवध्वनिरिति (३) तदानीमेवेन्द्रः समागमत् । आगत्य तामुवाच किमत्र ग्रावाणोऽभिषुण्वन्तीति । सा प्रत्यूचे आत्रिकन्या स्नानार्थमागत्य सोमं दृष्ट्वा तं भक्षयति । तद्भक्षणजो ध्वनिरेव न तु ग्राव्णां सोमाभिषवध्वनिरिति । तथा प्रत्युक्त इन्द्रः पराङावर्तत । यान्तमिन्द्रं सा पुनरब्रवीत् । किमर्थं निवर्तसे त्वं तु सोमपानाय गृहं गृहं प्रत्यागच्छसि । इदानीमत्रापि मम दंष्ट्राभ्यामभिषुतं सोमं पिब

(१) 'सुत्वा च' इति 'ग' पुस्तके ।
(२) 'यमासीत्' इति 'क' पुस्तके ।
(३) 'सोमाभिषवध्वनिमिति मत्वा' इति वे० भा० ।

धानादींश्च भक्षयेति । सा एवमनाद्रियमाणा सतीन्द्रं पुनरप्याह । अत्रागतं त्वामिन्द्रं न जानामि त्वयि गृहमागते बहुमानं करिष्यामीत्युक्त्वाऽत्र समागत इन्द्र एव नान्य इति निश्चित्य स्वास्ये निहितं सोममाह—हे इन्दो त्वमागतायेन्द्राय पूर्वं शनैः ततः शनकैः क्षिप्रं परिस्रवेति । तत इन्द्रस्तां कामयित्वा तस्या आस्ये एव दंष्ट्राभिषुतं सोममपात् । तत इन्द्रेण सोमे पीते सति त्वग्दोषादहं भर्त्रा परित्यक्ता इदानीमिन्द्रेण संगता इत्यपालायामुक्तायाम् इन्द्रस्तां व्याजहार । किं कामयसे तदहं करिष्यामीत्युक्ते सा वरमचीकमत। मम पितुः शिरो रोमवर्जितं तस्योषरं क्षेत्रं फलादिरहितं मम गुह्यस्थानमप्यरोमशम् । एतानि रोमफलादियुक्तानि कुरु इत्यपालायामुक्तायां तत्पितृशिरःस्थितां खलतिमपहाय क्षेत्रञ्च फलादियुक्तं कृत्वा तस्यास्त्वग्दोषपरिहाराय स्वकीये रथच्छिद्रे शकटस्य युगस्य च छिद्रे एतां तां त्रिवारं निश्चकर्ष । तस्याः पूर्वाभिहितायास्त्वक्(१)शल्यको द्वितीया गोधा तृतीया कृकलासोऽभूत् । तत इन्द्रस्तामप्यपालां सूर्यसदृशत्वचमकरोदिति (२) ।

(३) तथा बृहद्देवता ( ६।९९–१०६ )–

अपालाऽत्रिसुता त्वासीत् कन्या त्वग्दोषिणी पुरा ।
तामिन्द्रश्चकमे दृष्ट्वा विजने पितुराश्रमे ॥ ९९ ॥
तपसा बुबुधे सा तु सर्वमिन्द्रचिकीर्षितम् ।
उदकुम्भं समादाय अपामर्थे जगाम सा (४) ॥ १०० ॥
दृष्ट्वा सोममपामन्ते (५) तुष्टावर्चा वने तु तम् ।
कन्या वा(ऋ० ८।९१।१)इति चैतस्यामेषोऽर्थः(६)कथितस्ततः॥१०१॥

---

( १ ) 'पूर्वाभिहतायाः' इति वे० भा० ।

( २ ) 'इत्यैतिहासिकी कथा । एतच्च शाट्यायनब्राह्मणे स्पष्टमुक्तम् । तद्ब्राह्मणं तत्तद्व्याख्यानसमये दर्शयिष्यते। एषोऽर्थः कन्यावारित्यादिषु ऋक्षु प्रतिपाद्यते' इति वेदभाष्ये ।

( ३ ) अयं बृहद्देवतोक्त इतिहासो 'ग' पुस्तके नास्ति ।

( ४ ) 'पातु' जगाम तेजसा' इति 'क' पुस्तके ।

( ५ ) 'सोममपादास्ये' इति 'क' पुस्तके ।

( ६ ) 'चैतस्मिन्नेषोऽर्थः' इति 'क' पुस्तके ।

सा सुषाव मुखे (१) सोमं सुत्वेन्द्रं चाजुहाव तम् ।
असौ य एषी (ऋ० ८।९१।२) त्यनया अपालाऽदाच्च(२)तन्मुखात् १०२
अपूपांश्चैव सक्तूंश्च भक्षयित्वा शतक्रतुः(३) ।
ऋग्भिस्तुष्टाव सा (४) चैनं जगादैनं तृचेन तु(५) ॥१०३॥
सुलोमामनवद्याङ्गीं कुरु मां शक्र सुत्वचम् ।
तस्यास्तद्वचनं श्रुत्वा प्रीतस्तेन(६) पुरन्दरः ॥१०४॥
रथच्छिद्रेण तामिन्द्रः शकटस्य युगस्य च ।
प्रक्षिप्य निश्चकर्ष त्रिः सुत्वक् सा तु ततोऽभवत्(७) ॥१०५॥
तस्यास्त्वाचि व्यपेतायां सर्वस्यां (८) शल्यकोऽभवत् ।
उत्तरा त्वभवद्गोधा कृकलासस्त्वगुत्तमा (९) ॥१०६॥

तदर्थेयमृक् ( ऋ० ८.९१.७. )—

**खे रथस्य खेऽनसः खे युगस्य शतक्रतो ।**
**अपालामिन्द्र त्रिष्पूत्व्यकृणोः सूर्यत्वचम् ॥**
**खे । रथस्य । खे । अनसः । खे । युगस्य । शत-क्रतो इति शतऽक्रतो । अपालाम् । इन्द्र । त्रिः । पूत्वी । अकृणोः । सूर्यऽत्वचम् ॥ १४६ ॥**

---

( १ ) 'तथा' इति 'क' पुस्तके ।
( २ ) 'पपाविन्द्रश्च' इति मु० बृ० ।
( ३ ) 'स तद्गृहात् इति मु० बृ० ।
( ४ ) 'चैवैनं' इति 'क' पुस्तके ।
( ५ ) 'कुरु तात चिकीर्षितम्' इति 'क' पुस्तके ।
( ६ ) 'तस्यै' इति 'क' पुस्तके ।
( ७ ) 'ततः सा सुत्वचाऽभवत्' इति 'क' पुस्तके ।
( ८ ) 'तस्यास्त्वगपहता या पूर्वा सा' इति मु० बृ० ।
( ९ ) इयमेव कथा षड्गुरुशिष्यस्य वेदार्थदीपिकायां ( ऋ० ८.९१ ) तथा वेदभाष्योद्धृतशाट्यायनब्राह्मणतोऽवलोकनीया ।

अपालाऽनुष्टुभा इन्द्रं तुष्टाव ।
कन्यावारिति सूक्तं सततं नियतो जपेत् ॥
त्वग्दोषिणीं तथाऽलोम्नीं क्षिप्रं तस्मात् प्रमोचयेत् ।

इति ऋग्विधाने ( श्लो० ३५२–५३ ) तथा वधूगृहागमने रथशम्यागर्ते विनियुक्ता 'खे रथस्य खे इत्येतया फलवतो वृक्षस्य' इति गृह्ये ( सां० गृ० सू० १.१५ )।

ऋचोऽयमर्थः—हे शतक्रतो बहुकर्मन् (१) इन्द्र रथस्य स्वकीयस्य खे पृथुतरे छिद्रे तथा अनसः शकटस्य खे तदपेक्षया अल्पे छिद्रे युगस्य खे च अल्पतरे सूक्ष्मे छिद्रे रथशकटयुगानां छिद्रेषु त्वग्दोषपरिहाराय त्रिः त्रिवारं पूत्वी पूत्वा शोधयित्वा ततः अपालामेतन्नामिकामत्रिसुतां ब्रह्मवादिनीं सूर्यत्वचं सूर्यसमानत्वचमकृणोः अकरोः कल्याणतमरूपभाजमकरोरित्यर्थः ।

खेऽनस इति 'सन्तोऽवद्यानि खेऽनसः' (ऋ० प्रा० २.४५) इत्यभिनिहितः । त्रिष्पूत्वीति 'तपोष्पवित्रं त्रिष्पूत्वी०' ( ऋ० प्रा० ४.६३ ) इत्युपाचरितः ॥

विप्राः सदा नमस्या(२) इत्यर्थं आह—

**नमस्याः शिरसा विप्रा जनेन स्वहितैषिणा ।**
**विप्रेषु नत्या सञ्जातः शुद्ध इन्द्रोऽभिषेचितः ॥१३१॥**

स्वस्मिन् हितमिच्छतीति स्वहितैषी तेन शिरसा भूमौ शिरो निपात्य विप्रा नमस्याः नमस्करणीयाः । इन्द्रदृष्टान्तेन विप्रनतिफलमाह । इन्द्रः पूर्वो वृत्राद्यसुरान् हत्वाऽशुद्धोऽभूत् ततो ब्राह्मणान् ननाम । ततो विप्रेषु नत्या नमस्कारेण शुद्धः सञ्जातः । ब्राह्मणैः 'एतो न्विन्द्रम्'० (ऋ० ८.९५.७-९) इत्यादिभिरभिषेचितः ।

---

( १ ) 'हे शतसंख्याकयज्ञ बहुविधप्रज्ञ वा' इति वे० भा० ।
( २ ) 'नम्या' इति 'क' पुस्तके ।

तदर्थेयमाख्यानपूर्वा ऋक् (ऋ० ८.९५.७)—

एतो न्विन्द्रं स्तवाम शुद्धं शुद्धेन साम्ना।

शुद्धैरुक्थैर्वावृध्वांसं शुद्ध आशीर्वान् ममत्तु॥

एतो इति। नु। इन्द्रम्। स्तवाम। शुद्धम्। शुद्धेन। साम्ना। शुद्धैः। उक्थैः। ववृध्वांसम्। शुद्धः। आशीःऽवान्। ममत्तु॥ १४७॥

पुरा किलेन्द्रो वृत्रादिकानसुरान् हत्वा ब्रह्महत्यादिदोषेणात्मानमपरिशुद्धं मन्यमानस्तद्दोषपरिहारायेन्द्रः ऋषीनवोचत। अपूतं मां युष्मदीयेनाभिषेकेण साम्ना शुद्धं कुरुतेति। ततस्ते शुध्युत्पादकेन साम्ना शस्त्रैश्च शुद्धमकार्षुः। पश्चात्पूतायेन्द्राय यागादिकर्मणि(१) सोमादीनि हवींषि प्रादुरिति।

शाट्यायनब्राह्मणे(२)–'इन्द्रोऽसुरान्(३) हत्वा पूत इवामेध्योऽमन्यत। सोऽकामयत। अशुद्धं मां (४) शुद्धेन साम्ना स्तुयुरिति'(५)।

ताण्ड्ये (तां० म० ब्रा० १४.११.२८)–'शुद्धाशुद्धीयं भवति इन्द्रो यतीन्(६) सालावृकेभ्यः(७) प्रायच्छन् तमश्लीला वागभ्य-

---

(१) '०कर्माणि' इति वे० भा०।
(२) 'एषोऽर्थः शाट्यायनकब्राह्मणे प्रतिपादितः' इति वे० भा०।
(३) 'वासुरान्' इति वे० भा०।
(४) 'अशुद्धमेव मा सन्तं' इति वे० भा०।
(५) अतः परं वेदभाष्ये—'स ऋषीनब्रवीत् स्तुत मेति। तत ऋषयः समापश्यन् तेनास्तुवन् एतो न्विन्द्रमिति। ततो वा इन्द्रः पूतः शुद्धो मेध्योऽभवदिति'।
(६) 'यतीन्' इति मु० तां० ब्रा०।
(७) 'सालावृकेयेभ्यः' इति मु० तां० ब्रा०।

वदत् सोऽशुद्धोऽमन्यत स एव(१) तच्छुद्धाशुद्धीयमपश्यदिति'।

'शुद्धवत्योऽघमर्षणम्' इति ऋग्विधाने(२) ( श्लो० ५६ )।

'आ त्वा गिरो रथीरिवेति सर्वम्' ( सां० श्रौ० सू० १८। १८।१३ ) इति महदुक्थः।

तिरश्चीरनुष्टुभा इन्द्रं तुष्टाव। ऋषयः परस्परं वदन्ति (३) नु क्षिप्रम्। नु मंक्षु इति तन्नाम ( निघण्टु० २.१५ )। एतो एत आगच्छत(४) आगत्य च शुद्धेन शुध्द्युत्पादकेन साम्ना। तथा शुद्धैः शुद्धिहेतुभिरुक्थैः शस्त्रैश्चेन्द्रं शुद्धम् अपापिनं कृत्वा स्तवाम स्तुयाम(५)। ततः सामभिः शस्त्रैश्च वावृध्वांसं पापराहित्येन वर्धमानं तमिममिन्द्रं शुद्धः दशापवित्रेण (६) शोधितः आशीर्वान् गव्यादिभिराश्रयवान् (७) 'छन्दसीरः' ( पा० ८.२.१५ ) इति मतुपो वत्वम्। तादृशः सोमो ममत्तु इन्द्रं मादयतु। मदेः(८) छान्दसः श्लुः। वावृध्वांसम्–अवयादित्वात् ( ऋ० प्रा० ९.३१ ३२. ) दीर्घः।

सैन्यबलेन बलवता सह स्पर्धां न कुर्यादित्याह—

न सैन्यबलमाश्रित्य स्पर्धां कुर्याद् बलीयसा।
जघानांशुमतीतीरे शक्रः कृष्णंससैनिकम् ॥१३२॥

---

( १ ) 'स एतत्' इति मु० तां० ब्रा०।

( २ ) ऋग्विधानस्थोऽयं श्लोक एवम्—

सवासाः सशिरस्कोऽप्सु स्नात्वाऽभ्युद्य जपेद् द्विजः।
शुद्धवत्यस्तथाऽव्वन्त्यः पावमान्योऽघमर्षणम् ॥

( ३ ) 'ब्रवन्ति' इति 'ग' पुस्तके।

( ४ ) 'आगच्छतैव' इति वे० भा०।

( ५ ) 'स्तूयाम' इति 'ग' पुस्तके।

( ६ ) 'दर्शनाय विप्रेण' इति 'क' पुस्तके।

( ७ ) 'आश्रृणवान्' इति 'क' पुस्तके। 'आश्रयणवान्' इति वे० भा०।

( ८ ) 'मादयतेः' इति वे० भा०।

सेनायाः बलं सैन्यबलम् 'सेनायां वा' ( पा० ४।४।४९ ) इति समवैत्यर्थे ण्यः । तदाश्रित्य बलीयसा बलिष्ठेन सह स्पर्द्धां न कुर्यात् । 'अजादी गुणवचनादेव' ( पा० ५।३।५८ ) इति ईयसुन् । यदि कुर्यात्तर्हि कृष्णासुरदृष्टान्तेन द्रढयति । यथा कृष्णं कृष्णासुरं ससैनिकं सेनाबलमाश्रित्यागतं दशभिः सह तैर्योद्धृभिः सह अंशुमती नदी तस्यास्तीरे शक्रो बली तं जघान हतवान् ।

तदर्थे इतिहासपूर्विका ऋक् ( ऋ० ८.९६.१३ )–

अव॑ द्र॒प्सो अं॑शु॒मती॑मतिष्ठदिया॒नः कृ॒ष्णो द॒शभिः॑ स॒हस्रैः॑ ।
आव॒त्तमिन्द्रः॒ शच्या॒ धम॑न्त॒मप॒ स्नेहि॑तीर्नृ॒मणा॑ अधत्त ॥

अव॑ । द्र॒प्सः । अं॒शु॒ऽमती॑म् । अ॒ति॒ष्ठ॒त् । इ॒या॒नः । कृ॒ष्णः । द॒श॒ऽभिः॑ । स॒हस्रैः॑ । आव॑त् । तम् । इन्द्रः॑ । शच्या॑ । धम॑न्तम् । अप॑ । स्नेहि॑तीः । नृ॒ऽमनाः॑ । अधत्त ॥१४८॥

(१) किल कृष्णो नामासुरः दशसहस्रैरसुरैः परिवृतः सन् अंशुमतीनदीतीरेऽतिष्ठत् । तत्र तं कृष्णमुदकमध्ये स्थितं इन्द्रो बृहस्पतिना सहाऽऽगच्छत् । आगत्य तं कृष्णं तस्यानुचरांश्च बृहस्पतिसहायो जघानेति ।

तथा बृहद्देवता ( ६।१०९-११५ )–

(२)सूक्ते द्वितीये एतेषामितिहासं प्रचक्षते ।
अपक्रम्य तु देवेभ्यः सोमो वृत्रभयार्दितः ॥१०९॥

---

( १ ) 'अत्रेतिहासमाचक्षते' इति वेदभाष्ये ।

( २ ) श्लोकस्येदं पूर्वार्धमत्र बृहद्देवताया उद्धृतम् । अपरार्द्धं वेदभाष्य एव दृश्यते ।

(१)नदीमंशुमतीं नाम्नाऽभ्यतिष्ठत्(२) कुरून् प्रति ।
तं बृहस्पतिनैकेन सोऽभ्ययादु(३) वृत्रहा सह ॥११०॥
[योत्स्यमानः सुसंहृष्टैर्मरुद्भिर्विविधायुधैः ।
दृष्ट्वा तानायतः सोमः स्ववलेन व्यवस्थितः ॥१११॥
मन्वानो वृत्रमायान्तं जिघांसुमरिसेनया ।
व्यवस्थितं धनुष्मन्तं तमुवाच बृहस्पतिः ॥११२॥
मरुत्पतिरयं सोम प्रेहि देवान् पुनर्विभो ।
श्रुत्वा देवगुरोर्वाक्यमनर्थं वृत्रशङ्कया ॥११३॥
सोऽब्रवीन्नेति तं शक्र ओजसैव (४) वलाद्वली ।
इयाय देवानादाय तं पपुर्विधिवत् सुराः ॥११४॥
जघ्नुः पीत्वा च दैत्यानां समरे नवतीर्नव ।
तदव द्रप्स इत्यस्मिंस्तृचे(५) सर्वं निगद्यते] ॥११५॥

अच्छावाकस्य षष्ठेऽहन्युक्थे दधिक्राव्णो अकारिषमिति खण्डे तृचं विनियुक्तम् । '०अव द्रप्स इति तृचानि षष्ठे' ( सां० श्रौ० सू० १२।२५।२ )

तिरश्ची द्युतानो वा इन्द्रं त्रिष्टुभा तुष्टाव । अयमर्थः । द्रुतं सरति गच्छतीति द्रप्सः पृषोदरादिः । द्रुतं गच्छन् दशभिः सहस्रैः दशसहस्रसंख्याकैरसुरैः सह इयानः कृष्ण एतन्नामकोऽसुरः अंशुमतीं नाम नदीमवातिष्ठत् अवतिष्ठते। 'समवप्रविभ्यः०'(पा०१-३-२२) इति आत्मनेपदे प्राप्ते छान्दसं परस्मैपदम् । ततः शच्या कर्मणा(६)

---

( १ ) अयमेकः श्लोको 'क' पुस्तके दृश्यते । अन्ये बृहद्देवतातः सन्दर्भवैशद्यार्थमत्र क्रोडीकृत्य दत्ताः ।

( २ ) '०मती नामान्यतिष्ठत' इति 'क' पुस्तके । ' नाम अभ्य० ' इति वेदभाष्ये ।

( ३ ) 'सोऽभ्यगाद्' इति 'क' पुस्तके ।

( ४ ) 'शक्रः स्वर्ग एव' इति मु० बृ० ।

( ५ ) 'तदेतदप्यवैतस्मिंस्' इति मु० बृ० ।

( ६ ) एतत्पदं 'क' पुस्तके न दृश्यते ।

प्रज्ञानेन वा धमन्तं उदकस्यान्तरुच्छ्वसन्तं यद्वा जगद्भीतिकरं शब्दं कुर्वन्तं तं कृष्णासुरमिन्द्रः मरुद्भिः सह(१)आवत् प्राप्नोत्। पश्चात्(२) नृमनाः नृषु मनो यस्य सः(३) स इन्द्रः स्नेहितीः स्नेहितिर्वधकर्मसु पठितः ( निघण्टु २-१९ )। सर्वस्य हिंसित्रीः सेनाः अपाधत्त। अपधानं हननम् कृतवान्(४)। नृमणाः इति 'ऋकाररेफषकारा०' ( ऋ० प्रा० ५-४० ) इति णत्वम्।

तथोक्तम्—

शक्तिक्षये क्षमां कुर्यान्नाशक्तः शक्तमाक्षिपेत्।
कार्त्तवीर्यः सुसंरब्धो बबन्ध दशकन्धरम्॥

सुन्वतो दानम्(५) असुन्वतो धिक्करणं ब्रुवन्नाह—

स्वं भागं सुन्वते देहि गवाश्वादिकमव्ययम्।
धिक्कृत्येन्द्रं पणिं दुष्टं रेभेणोक्तं वचो ब्रुवे॥१२३॥

हे इन्द्र त्वं गवादिकमव्ययं भागं वृत्रादिकानसुरान् हत्वा तेषां धनं नीत्वा देवेभ्यो भागं विभरस्व। कं भागम्। अव्ययं व्ययरहितं साश्वितं तं सुन्वते यज्वने देहि। किं कृत्वा। दुष्टं देवेभ्योऽदानान्निर्दयं पणिं वाणिजं वाणिज्यकर्त्तारं धिक्कृत्य। 'या इन्द्र पश्वोना रेभ०' (का० स०ऋ०८।९७) इति रेभेणोक्तम् 'यमिन्द्र दधिषे०' ( ऋ० ८.९७.२ ) इत्युक्तं यद्वचस्तदहं ब्रुवे। न स्वमत्या।

---

( १ ) 'मरुद्भिः सह' इति 'क' पुस्तके नास्ति।

( २ ) 'तं कृष्णासुरं तस्यानुचरांश्च हतवानित्याह' इति वे०भा०।

( ३ ) 'यद्वा कर्म नेतृषु ऋत्विक्षु एकविधं मनो यस्य सः तथोक्तः तादृशः सन्' इति वे० भा०।

( ४ ) 'अवधीदित्यर्थं अपस्नीहिति नृमणा अधद्राः' इति छन्दोगाः पठन्ति इति वे० भा०।

( ५ ) 'तोऽर्द्धदानं०' इति 'क' पुस्तके। 'अर्थदानम्' इत्यनेन भवितव्यमिति प्रतिभाति।

तत्र ऋक् ( ऋ० ८.९७.२ )-

यमिन्द्र दधिषे त्वमश्वं गां भागमव्ययम् ।

यजमाने सुन्वति दक्षिणावति तस्मिन्तं धेहि मा पणौ ॥

यम् । इन्द्र । दधिषे । त्वम् । अश्वम् । गाम् । भागम् । अव्ययम् । यजमाने । सुन्वति । दक्षिणाऽवति । तस्मिन् । तम् । धेहि । मा । पणौ ॥१४९॥

रेभो बृहत्या इन्द्रं तुष्टाव । 'या इन्द्र भुज आभरः ( ऋ० ८.९७.१ ) इत्येतया बार्हतम्' ( सां० श्रौ० सू० १८।८।१ ) इति महाव्रते विनियोगः । अयमर्थः-

हे इन्द्र त्वं यमश्वं (१) गां अग्निहोत्रकर्मणि पयःप्रदानेनोपकारिकां गाम अव्ययं व्ययरहितं अविनश्वरं गवाश्वादिकं भागं भजनीयं धनं (२) शत्रुभ्यः आहृत्य दधिषे धत्से बिभर्षि । तं सर्वं सुन्वति सोमाभिषवं कुर्वति दक्षिणावति यज्ञे ऋत्विग्भ्यो दक्षिणादेयत्वेन तद्वति यजमाने यागं कुर्वाणे तस्मिन् त्वं धेहि । सर्वत्र धनादिदानं मा कुर्वित्याह । मा पणौ । पण व्यवहारे । द्रव्यव्यवहारादयष्टा पणिः तस्मिन् तं सर्वं मा धेहि (३) ।

तथोक्तं भगवता ( भ० गी० ३।१२ )-

इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः ।
तैर्दत्तानप्रदायैभ्यो यो भुंक्ते स्तेन एव सः ॥

इत्युक्तत्वात् ।

(४)महत्कर्म स्वतन्त्रतो न कर्त्तव्यमित्यर्थ आह-

महद्भिर्यन्महत्कर्म कार्यं नैव स्वतन्त्रतः ।
ययाचे बलिनं विष्णुं वृत्रं हन्तुं हि वृत्रहा ॥१३४॥

---

( १ ) 'गमनसाधनान् हरीन्' इति वे० भा० ।

( २ ) 'सर्वत्रैकत्वमविवक्षितम्' इति वे० भा० ।

( ३ ) 'देहि' इति वे० भा० ।

( ४ ) अवतरणिकेयं 'ग'पुस्तके 'श्रद्धयाहुतं०' इत्यस्यानन्तरं दृश्यते ।

महद्भिः पुरुभैर्यन्महत्कर्म तत्स्वतन्त्रतो न कार्यम् । वृत्रहननदृष्टान्तेन द्रढयति । यथा वृत्रहा देवेन्द्रो वृत्रासुरं हन्तुं हननाय बलिनम् । अत इनि ठनौ ( पा० ५.२.११५ ) इति इन् । विष्णुं व्यापकं ययाचे । वृत्रहननं स्वतन्त्रतो न कृतम् ।

तदर्थेयमाख्यानपूर्विका ऋक् ( ऋ० ८.१००.१२ )

**सखे॑ विष्णो वित॒रं वि क्र॑मस्व॒ द्यौर्दे॒हि लो॒कं वज्रा॑य वि॒ष्कभे॑ ।**
**हना॑व वृ॒त्रं रि॒णचा॑व॒ सिन्धू॒निन्द्र॑स्य यन्तु प्रस॒वे विसृ॑ष्टाः ॥**

सखे॑ । वि॒ष्णो॒ इति॑ । वि॒ऽत॒रम् । वि । क्र॒म॒स्व॒ । द्यौः । दे॒हि । लो॒कम् । वज्रा॑य । वि॒ऽस्कभे॑ । हना॑व । वृ॒त्रम् । रि॒णचा॑व । सिन्धू॑न् । इन्द्र॑स्य । य॒न्तु॒ । प्र॒ऽस॒वे । विऽसृ॑ष्टाः ॥१५०॥

अत्राख्यानम् ( बृहद्देवता ६।१२१-१२४ )—

त्रीन् लोकानभिवृत्यैतान्(१) वृत्रस्तस्थौ स्वया त्विषा ॥१२१॥
नाशकद्धन्तुमिन्द्रोऽपि(२) विष्णुमभ्येत्य सोऽब्रवीत् ।
वृत्रं हनिष्ये तिष्ठस्व विक्रमस्व ममान्तिकम्(३) ॥१२२॥
उद्यतस्य तु(४) वज्रस्य द्यौर्ददातु ममान्तरम् ।
तथेति विष्णुस्तच्चक्रे द्यौश्चास्य(५) विवरं ददौ ॥१२३॥

---

( १ ) 'अभितष्येमान्' इति मु० बृ० ।

( २ ) 'तं नाशकद्धन्तुमिन्द्रो' इति वे० भा०, मु० बृ०, 'ग' पुस्तके च ।

( ३ ) 'विक्रम्याद्य ममान्तिके' इति वे० भा० मु० बृ० च । 'विक्रमाद्य' ० इति'क' पुस्तके ।

( ४ ) 'उद्यतस्यैव' इति मु० बृ० 'ग' पुस्तके च ।

( ५ ) 'द्यौश्चाथ' इति 'ग' पुस्तके ।

तदेतदखिलं प्रोक्तं सखे विष्णविति त्वचि (१)।

इतीन्द्रेण विष्णुना संवादः कृतः संवादकारिणमिन्द्रं नेमस्त्रिष्टुभा तुष्टाव। ऋचोऽयमर्थः। हे सखे विष्णो वितरमत्यन्तं त्वं विक्रमस्व विक्रमं कुरु। एवं विष्णुं प्रत्युक्त्वा दिवं प्रत्याह। हे द्यौः त्वं वज्राय वज्रस्य विष्कभे विष्कम्भनाय लोकम् अवकाशं देहि प्रयच्छ। हे विष्णो त्वं चाहं चोभौ आवां वृत्रं वृत्रासुरं हनाव हन्वः। हत्वा च सिन्धून् वृत्रावष्टब्धाः नदीः रिणचाव मोचयाव। तेऽमी विसृष्टाः सिन्धवो नद्यः इन्द्रस्य प्रसवे प्रेरणे सति यन्तु स्वामिनं समुद्रं प्रति गच्छन्तु।

'अथाब्रवीद्वृत्रमिन्द्रो हनिष्यन्त्सखे विष्णो वितरं विक्रमस्व' (ऋ० ४.१८.११)

इति निगमान्तरम्। विष्कभे—'अन्यपूर्वैरपि०' (ऋ० प्रा० ५-२१) इति षत्वम्। सिन्धून्—'ईकारोकारोपहितो रेफमेषु०' (ऋ० प्रा० ४।६९) इति रेफेऽनुनासिके नकारस्य प्राप्ते पादान्तत्वान्न। विसृष्टाः—'अन्यपूर्वैरपि पद्यादि०'(ऋ०प्रा०५-२१) इति षत्वे प्राप्ते 'रेफर्कारर्कारपरः प्रकृत्या' (ऋ० प्रा० ५.२३) इति प्रकृतिभावः।

श्रद्धया हुतं काष्ठमपि घृतवद्भवतीत्याह(२)—

गवाद्ययं न दद्याच्चेत् तीक्ष्णं मेऽग्ने न गौरयः।
यच्छ्रद्धयोपदेह्यास्तदार्वादि घृतमस्तु ते (३) ॥१३५॥

इममर्थं न हि मे अस्तीति तृचेन (ऋ० ८. १०२-१९-२२) द्रढयति।

---

(१) 'त्वचि' इति 'ग' पुस्तके।'त्वचा' इति वे० भा०।
(२) 'काष्ठादि घृतं भवती०' इति 'क' पुस्तके।
(३) अस्य भाष्यं न दृश्यते।

तत्र ऋचः–( ऋ०.८. १०२.१९ )–

न हि मे अस्त्यघ्न्या न स्वधितिर्वनन्वति ।

अथैतादृग्भरामि ते ।

नहि । मे । अस्ति । अघ्न्या । न । स्वऽधितिः । वनन्ऽवति । अथ । एतादृक् । भरामि । ते ॥१५१॥

हे अग्ने मे मम भार्गवस्य प्रयोगस्य ऋषेः अघ्न्या गौः । अघ्न्या उस्रेति गोनामसु पाठात् ( निघण्टु २.११ ) । न ह्यस्ति न विद्यते । यस्याः पयसा आज्येन च त्वां यजेय । किञ्च स्वधितिः परशुः कुठारादिर्न । वनन्वति काष्ठानि हन्ति वृक्षवति वने । यः काष्ठैस्त्वां समिन्धीय । अथैतादृक् अग्निहोत्रार्थं पयसो दोग्ध्रीं गां इन्धनसाधनानि काष्ठानि चैतत्सर्वं ते तुभ्यमहं भरामि हरामि ।

( ऋ० ८.१०२-२० )–

यदग्ने कानि कानि चिदा ते दारूणि दध्मसि ॥

ता जुषस्व यविष्ठ्य ।

यत् । अग्ने । कानि । कानि । चित् । आ । ते । दारूणि । दध्मसि । ता । जुषस्व । यविष्ठ्य ॥१५२॥

पूर्वस्यामृचि उक्तार्थस्य विवरणमत्र । हे यविष्ठ्य युवतम अग्ने ते तुभ्यं यद्यदा कानि कानि चित् यानि कान्यपि दारूणि काष्ठानि आदध्मसि आदध्मः(१) । तदा ता तानि अपरशुवृक्णान्यपि जुषस्व(२) सेवस्व ।

---

( १ ) 'आधारयामि' वे० भा० ।

( २ ) 'तथा च यजुर्ब्राह्मणम् ( तै. सं. ५.६.१० )—न ह स्म वै पुराग्निरपरशुवृक्णं दहति तदस्मै प्रयोग एव ऋषिरस्वदयद्यदग्ने यानि कानि चेति समिधमादधात्यपरशुवृक्णमेवास्मै स्वदयति सर्वमस्मै स्वदत' इति वे० भा० ।

( ऋ० ८.१०२.२१ )—

यदत्त्युपजिह्विका यद्वम्रो अतिसर्पति ।

सर्वं तदस्तु ते घृतम् ॥

यत् । अत्ति । उपऽजिह्विका । यत् । वम्रः । अतिऽसर्पति । सर्वम् । तत् । अस्तु । ते । घृतम् ॥ १५३ ॥

हे अग्ने यत्काष्ठादिकमुपजिह्विका उपदेहिका(१) अत्ति भक्षयाति । यच्च काष्ठादिकं वम्रः वमत्युदकमिति वम्रः । उपजिह्विकावम्रशब्दौ यद्यपि पर्यायौ तथापि पृथगुपादानाद् वम्रशब्दस्तद्विशेषे पर्यवस्यति । सोऽप्यतिसर्पति अतिगच्छति तत् सर्वं ते तव घृतं घृतसदृशमस्तु । यथा घृतं प्रियकरं भवति तथा प्रियकरमस्त्वित्यर्थः ।

( ऋ० ८.१०२.२२ )—

अग्निमिन्धानो मनसा धियं सचेत मर्त्यः ।

अग्निमीधे विवस्वभिः ॥

अग्निम् । इन्धानः । मनसा । धियम् । सचेत । मर्त्यः । अग्निम् । ईधे । विवस्वऽभिः ॥ १५४ ॥

मर्त्यो मनुष्योऽग्निमिन्धानः काष्ठैः प्रज्वलन् मनसैव श्रद्धधानो धियं कर्म सचेत काले भजेत । विवस्वभिः ऋत्विग्भिश्चाग्निमेव ईधे प्रज्वलति ॥ १५६ ॥

इति नीतिमञ्जर्यां षष्ठाष्टके नीतिवाक्यानि ॥ श्रीरस्तु ॥

षष्ठाष्टकः समाप्तः ॥

---

( १ ) उपजिघ्रतीत्युपजिह्विकेति वेदभाष्ये ।

श्रीः ।

# अथ सप्तमाष्टकः प्रारभ्यते ।

द्याव्हयः श्रुतितत्त्वज्ञः षष्ठेऽष्टके बृहन्मतिः ।
दर्शयित्वेतिहासान् यः सप्तमे दर्शयत्यथ ॥ १ ॥

पैशुन्यं न कुर्यादित्यर्थ आह—

**परेषां क्लेशदं कुर्यान्न पैशुन्यं सुहृत्प्रियम् ।**
**त्रिशिरसं जघानेन्द्रः पैशुन्यान् मातुलप्रियात् ॥ १३६ ॥**

सुहृदां मित्रादीनां यदि प्रियं पैशुन्यं तर्हि परेषां वैरिणामपि न कुर्यात् प्राज्ञः । कीदृशं क्लेशदम् 'पिशुनता यद्यस्ति किं पातकैः' ( नीतिशतक श्लो० ४४ ) इत्युक्तत्वात् पापरूपत्वात् क्लेशदम् । त्रिशिरोदृष्टान्तेन द्रढयति । यथा त्रिशिरा ऋषिः मातुलप्रियं पैशुन्यं चक्रे । तस्मान्मातुलप्रियात् पैशुन्यात् इन्द्रस्तं जघान हतवान् । तस्मात्तन्न कर्त्तव्यम् ।

तदर्थेयमाख्यानपूर्वा ऋक् ( ऋ० १०.८.८. )—

**स पित्र्याण्यायुधानि विद्वानिन्द्रेषित आप्त्यो अभ्ययुध्यत् ।**
**त्रिशीर्षाणं सप्तरश्मिं जघन्वान्त्वाष्ट्रस्य चिन्निः ससृजे त्रितो गाः**

**स । पित्र्याणि । आयुधानि । विद्वान् । इन्द्रऽइषितः । आप्त्यः । अभि । अयुध्यत् । त्रिऽशीर्षाणम् । सप्तऽरश्मिम् । जघन्वान् । त्वाष्ट्रस्य । चित् । निः । ससृजे । त्रितः । गाः ॥ १५९ ॥**

अत्राख्यानम् । ( बृहद्देवता ६।१४९-१५३ )—

**अभवत् स ह (१) देवानां पुरोधाः क्षयकाम्यया (२) ।**

---

( १ ) 'स हि' इति मु० बृ० ।

( २ ) 'प्रियकाम्यया' इति मुग्धानलपाठस्तु न समीचीन इति भाति ।

असुराणां स्वसुः (१) पुत्रः त्रिशिरा विश्वरूपधृक् (२) ॥ १४९ ॥
तमृषिं प्रहितं त्विन्द्रो देवेषु विविदेऽसुरैः (३) ।
सोऽस्य (४) वज्रेण तान्याशु शीर्षाण्यन्वाच्छिदत् प्रभुः (५) ॥१५०॥
तस्य यत्सोमपानं तु मुखं सोऽभूत् कपिञ्जलः ।
कलविङ्कः सुरापाणमन्नादं तित्तिरिस्त्वभूत् ॥ १५१ ॥
तं वागभ्यवदद् ब्राह्मी ब्रह्महासि शतक्रतो ।
प्रपन्नं हतवान् यस्माद्विश्वरूपं पराङ्मुखम् ॥ १५२ ॥
[ तमभ्यसिञ्चत् (६) सूक्तेन ऋषिराप (ऋ० १०.९) इति स्वयम् ।
सिन्धुद्वीपोऽपतुत्त्यर्थं तस्याश्लीलस्य पाप्मनः ॥ १५३ ॥ ]

'इन्द्रो वै त्रिशीर्षाणं त्वाष्ट्रमहनत्' ( सां० श्रौ० सू० १४ ५०.१ ) इति सूत्रम् । यथोपनिषदि ( कौ० उ० ३.१.; सा० आ० ५।१ )—

प्रतर्दनेन्द्रयोः संवादे ब्रह्मकथने इन्द्रवचनम्—'मामेव विजानीह्येतदेवाहं मनुष्याय हिततमं मन्ये यत् मां विजानीयात् त्रिशीर्षाणं त्वाष्ट्रमहंस्तमश्लीला वागभ्यवदत् सोऽग्निमुपधावत्' (७) इति ।

त्रिशीर्षा त्रिष्टुभा इन्द्रं तुष्टाव । ननु हतस्य त्रिशीर्ष्णः कथमार्षम् । ईदृशम्भावि वस्तु स स्वप्नान्तेन तृचेन दृष्टवान् (८) । तस्यां द्वितीया ऋक् ( ऋ० १०-८-८ ) तल्लिङ्गात् ।

ऋचोऽयमर्थः । आप्त्यः आप्त्यस्य पुत्रः अपां पुत्रो वा ।

---

( १ ) 'त्वष्टृपुत्रं' इति 'ग' पुस्तके ।
( २ ) 'धृत्' इति 'ग' पुस्तके ।
( ३ ) 'वुबुधेऽसुरैः' इति मु० बृ० ।
( ४ ) 'सौम्य' इति 'क' पुस्तके ।
( ५ ) 'शीर्षाण्यच्छिदत्प्रभुः' इति 'क' पुस्तके । 'शिरांसि त्रीण्यथाच्छिदत्' इति मु० बृ० ।
( ६ ) अयं श्लोकोऽत्र बृहद्देवताया उद्धृतः ।
( ७ ) तमश्लीला वागित्यादि कौषीतक्युपनिषदि शाङ्खायनारण्यके वा न दृश्यते ।
( ८ ) 'विश्वरूपः स्वप्नान्ते अनेन तृचेन दृष्टवान्' इति वे० भा० ।

तकारोपजनश्छान्दसः । स त्रितः पित्र्याणि स्वपितृसम्बन्धीन्यायुधानि विद्वान् जानन् इन्द्रेषितः त्रिशिरसा मया सह युद्धार्थमिन्द्रेण प्रेरितः(१) सन् अभ्ययुध्यत् आभिमुख्येन युद्धवान् । तदनन्तरं सप्तरश्मिं सप्तरश्मिः सूर्यः तत्सदृशम् (२) । त्रिशीर्षाणं त्रिशिरस्कं मां जघन्वान् हतवान्(३) । हत्वा च त्रितः त्वाष्ट्रस्य चित् त्वाष्ट्रपुत्रस्य मम गाः निः ससृजे विसृष्टवान् । अपहृतवानित्यर्थः ।

विद्वान्—'नकार आकारोपधः पद्यान्तोऽपि०' ( ऋ० प्रा० ४.६९ ) इति नलोपे प्राप्ते पादान्तत्वान्न ।

एवं त्वाष्ट्रहननानन्तरमिन्द्रकृत्यमाह—

तेजोहानिकरं यस्मात् सद्भी रक्ष्यं यशोऽयशः ।
ऋषेर्लब्ध्वाऽभिषेकं यद् ररक्ष त्वाष्ट्रहा यशः ॥ १३७ ॥

सद्भिः सत्पुरुषैः 'नरः पतितकायोऽपि यशसा सोऽपि धार्यते' इत्युक्तत्वाद् यशो रक्ष्यम् । यस्मादयशः सतां तेजसां हानिकरं भवति । इन्द्रदृष्टान्तेन द्रढयति । यत् यस्मात् त्वाष्ट्रहा इन्द्रः । त्वाष्ट्रं त्रिशिरसं हन्तीति त्वाष्ट्रहा । क्विप् चेति ( पा० ३।२।७६ ) साम्यात् क्विप् । त्वाष्ट्रं हत्वा शोभितः यशो ररक्ष । ऋषेः सिन्धुद्वीपादापोहिष्ठीयेनाभिषेकं लब्ध्वा यद्यपि इन्द्रस्य हननदोषो न भवति तथापि लोके ब्रह्महननशब्दपरिहाराय यशःप्राप्तयेऽभिषिक्तवान् ।

इन्द्रस्येन्द्रविदुषो निर्मलत्वमुपनिषच्छ्रुतौ । त्रिशीर्षाणं त्वाष्ट्रमहनमित्यादि ( कौ० उ० ३.१ )—'तस्य मे तत्र न लोम च नामीयते स यो मां विजानीयान्नास्य केन च कर्मणा लोको मीयेत न मातृवधेन न पितृवधेन न स्तेयेन' इत्यादीन्द्रवचनम् । यस्यावधीत् पितरं यस्य मातरामिति संवरणः ।

---

( १ ) 'प्रेषितः सन्' इति वे० भा० ।
( २ ) 'यद्वा शत्रुनियमनार्थं सप्तप्रग्रहहस्तम्' इति वे० भा० ।
( ३ ) 'मूर्च्छितं कृतवान् इत्यर्थः' इति वे० भा० ।

यस्मात् 'अपयशो यद्यस्ति किं मृत्युना' इत्युक्तत्वात् अभिषेकः केवलं यशसे इन्द्रस्य ।

तत्र ऋक् ( ऋ० १०.९.१. )—

आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन ।

महे रणाय चक्षसे ॥

आपः । हि । स्थ । मयःऽभुवः । ताः । नः । ऊर्जे । दधातन । महे । रणाय । चक्षसे ॥ १५६ ॥

सिन्धुद्वीप आपो गायत्री । तथा तु विनियोगः ।

ब्रह्महा तु पुरा शक्रस्त्वाष्ट्रं हत्वा ऋषिं प्रभुम् ।

सिन्धुद्वीपस्तमेताभिरभिषिच्यावमोचयत् (१) ॥

इति ऋग्विधाने ( श्लो० ३८६ ) आग्निमारुते मार्जने । 'आपोहिष्ठीयास्तिस्र' ( सां० श्रौ० सू० ८।६।१२ ) इति गृह्ये (२)। 'आपोहिष्ठीयाभिस्तिसृभिरद्भिः' इति विवाहे ( सां० गृ० सू० १.१४ ) 'आपोहिष्ठीयेनाभिषिञ्चति' ( सां० गृ० सू० ३.१ ) समावर्त्तने च सायं चर्तमित्येताभिर्ब्रह्महा च सुरापश्चेत्यासां मार्जनं पापनोदनं प्रसिद्धम् ।

ऋचोऽयमर्थः । हे आपः हि यस्मात् याः यूयं मयोभुवः सुखस्य भावयित्र्यः स्थ भवथ । ताः तादृश्यो यूयं नोऽस्मदीयमिन्द्रम् (३) ऊर्जे अन्नाय दधातन धत्त । अयशःपरिहारेण यजमानदत्तपुरोडाशाद्यन्नप्राप्तियोग्यान् कुरुतेत्यर्थः (४) । तथा महे महते रणाय

---

( १ ) 'व्यमोचयत्' इति ऋग्विधानपुस्तके 'ग' पुस्तके च । सूक्तमिदमधिकृत्य ऋग्विधाने पञ्चदश ( ३७८-९२ ) श्लोकाः सन्ति । ते मूलत एवावलोकयितव्याः ।

( २ ) 'श्रौते' इति स्यात् ।

( ३ ) 'अस्मान्' इति वे० भा० ।

( ४ ) 'अन्नप्राप्तियोग्यानस्मान् कुरुत । अस्मभ्यमन्नं दत्तेत्यर्थः' इति वे० भा० ।

रमणीयाय चक्षसे दर्शनाय सम्यग्ज्ञानाय च धत्त । लोकापवाद-गूढज्ञानं प्रति योग्यान् कुरुतेत्यर्थः (१) । आपः—पादादित्वादाम-न्त्रितस्य ( पा० ८.१.१९ ) इति आष्टमिको निघातो न । स्थ-'हि च' ( पा० ८.१.३४ ) इति तद्वत् । 'सितां सधस्थात्' ( ऋ० प्रा० ५.१२ ) इति षत्वे कृते 'तकारवर्गस्तु टकारवर्गम्' ( ऋ० प्रा० ५.११ ) इति थकारस्य ठत्वम् । 'पिपृत पृणत०' ( ऋ० प्रा० ८.१५ ) इति दीर्घः । 'आपो हि स्थ सुखभुवस्ता नोऽन्नाय धत्त महते च नो रणाय रमणीयाय च दर्शनाय' ( नि० ९ २७ ) इति यास्कः ।

महताऽपि पापं न कर्तव्यमित्याह—

संसारेऽस्थिरतां दृष्ट्वा नैनः कुर्यान् महानपि ।
भगिनीभोगजं पापं यमो राजाऽपि नाकरोत् ॥ १३८ ॥

'कुरु पुण्यमहोरात्रं स्मरन्नित्यमनित्यताम्' इत्युक्तत्वात् अस्मिन् संसारेऽस्थिरतां दृष्ट्वाऽदृढताञ्च बुद्ध्वा महानपि राजाऽपि किञ्चिदपि एनः पापं न कुर्यात् । यमदृष्टान्तेन द्रढयति । यथा यमो राजा यमोऽपि 'यमं राजानं हविषा दुवस्य' ( ऋ० १०-१४-१४ ) इति राजा उक्तः ।

'इह(२) प्रच्छन्नपापानां शास्ता वैवस्वतो यमः'

इति पापिष्ठानां शास्ताऽपि भगिनीभोगजं भगिन्या यम्या भोगाय प्रार्थितः यमस्तस्या भोगजं पापं नाकरोत् न चकार । तस्मादस्थिरं संसारं प्राप्य ज्यायसा बलीयसा पुण्यं कर्तव्यमित्युक्तम् यमदृष्टान्तेन । तदर्थमिति-हासपूर्विके ऋचौ ( ऋ० १०-१०-११,१२ );

तत्र ऋक् ( ऋ० १०.१०.११ )—

किं भ्रातांसद्यदंनाथंभवांतिकिमुस्वसायंनिर्ऋतिर्निगच्छात्
कामंसूता बह्वे३तद्रपामि तन्वां मे तन्वं१ सं पिंपृग्धि ॥

---

( १ ) 'अस्मान् सम्यग्ज्ञानं प्रति योग्यान् कुरुतेत्यर्थ' इति वे० भा० । 'लोका यदमूढ ज्ञानं प्रति०' 'क' पुस्तके ।

( २ ) 'अन्तःप्रच्छन्न' इति पाठान्तरम् ।

किम् । भ्राता॑ । अ॒स॒त् । यत् । अ॒ना॒थम् । भ॒वा॒ति॑ ।
किम् । उँ॒ इति॑ । स्वसा॑ । यत् । निःऽऋ॑तिः । नि॒ऽगच्छा॑त् ।
काम॑ऽमूता । ब॒हु । ए॒तत् । र॒पा॒मि॒ । त॒न्वा॑ । मे॒ । त॒न्व॑म् ।
सम् । पि॒पृ॒ग्धि॒ ॥ १८७ ॥

अत्राख्यानम् । बृहद्देवता ( ६।१५४ )-
मैथुनार्थमभीप्सन्तीं प्रत्याचष्ट यमीं यमः ।
तदोचिदिति (१) संवादो विवस्वत्सुतयोस्तयोः (२)॥१५४॥

'ओचिव् षळूना वैवस्वतयोर्यमयम्योः संवादः षष्ठ्ययुग्भिर्यमी मिथुनार्थं यमं प्रोवाच' इत्यनुक्रमणी ( का० स० ऋ० १०-१० )। 'यमी यमं चकमे तां प्रत्याचचक्षेत्याख्यानम्' ( नि० ११।३४ ) इति यास्कः ।

यमी यमं त्रिष्टुभा आह । ऋचोऽयमर्थः । (३)यत् यस्मिन् भ्रातरि सति स्वस्रादिकम् अनाथं नाथरहितं भवाति भवति स भ्राता किमसत्(४) किं भवाति न भवतीत्यर्थः । किञ्च यत् यस्यां भगिन्यां सत्यां भ्रातरं निर्ऋतिर्दुःखं निगच्छात् नियमेन गच्छति प्राप्नोति सा स्वसा किमु किं भवति । भ्रातृभगिन्योश्च परस्परं येन केनाचिदुपायेन प्रीतिः कार्येत्यभिप्रायः । साऽहं काममूता कामेन मूर्च्छिता सती बहु नानाप्रकारं एतदीदृशमुक्तं वक्ष्यमाणञ्च रपामि प्रलपामि । एतज्ज्ञात्वा मे मम तन्वा शरीरेण तन्वं तव शरीरं संपिपृग्धि संपर्चय । संभोगेन संश्लेषय । ( मां ) सम्यग्भुङ्क्ष्वेत्यर्थः।

---

( १ ) 'ओचित् सखायं०' इति 'ग' पुस्तके ।

( २ ) 'सुतयोरिति' 'ग' पुस्तके ।

( ३ ) 'यमी यमेन प्रत्याख्याता पुनराह' इति वेदभाष्ये ।

( ४ ) 'किमु स्वित्' इति 'क' पुस्तके ।

पापभीतो यमो यमीं त्रिष्टुभा प्रत्याह ( ऋ० १०.१०.१२ )—

न वा उ ते तन्वा तन्वं सं पपृच्यां पापमाहुर्यः स्वसारं निगच्छात्
अन्येन मत्प्रमुदः कल्पयस्व न ते भ्राता सुभगे वष्ट्येतत् ॥

न । वै । ऊँ इति । ते । तन्वा । तन्वम् । सम् ।
पपृच्याम् । पापम् । आहुः । यः । स्वसारम् । निऽगच्छात् ।
अन्येन । मत् । प्रऽमुदः । कल्पयस्व । न । ते । भ्राता ।
सुऽभगे । वष्टि । एतत् ॥ १५८ ॥

अयमर्थः । हे यमि ते तव तन्वा शरीरेण तन्वं मदीयं शरीरं न वै संपपृच्यां नैव संपर्चयामि । पृची संपर्के । नैव त्वां भोक्तुमिच्छामीत्यर्थः । यो भ्राता स्वसारं भगिनीं निगच्छात् नियमेनोपगच्छति सम्भुङ्क्ते तं पापं पापिनं(१) आहुः शिष्टाः वदन्ति । एतत् ज्ञात्वा हे सुभगे सुष्ठु भजनीये हे यमि त्वं मत् मत्तः अन्येन त्वद्योग्येन पुरुषेण सह प्रमुदः संभोगजनितान् (२) हर्षान् कल्पयस्व समर्थय । ते तव भ्राता यमः एतदीदृशं त्वया सह मैथुनं न वष्टि न कामयते नेच्छति । इति यमः पापाद्भीत इत्युक्तम् ।

सुखामिच्छता पुंसा (३) भार्यानुरोधेन स्थातव्यमित्यर्थं आह—

भर्त्रा भार्यानुसारेण(४) स्थातव्यं सुखमिच्छता(५) ।
विवस्वान् हि तदाऽश्वोऽभूत् सरण्यूर्वडवा यदा ॥ १३९ ॥

'अर्द्धो ह वा एष आत्मनो यज्जाया' इति शतपथे (श०ब्रा०५।२।१।१०) दृष्टत्वात् । 'यत्रानुकूल्यं दम्पत्योस्त्रिवर्गस्तत्र वर्द्धते' (या० स्मृ० १।३।७४) इति

---

(१) 'पापकारिणम्' इति वे० भा० ।
(२) 'सम्भोगलक्षणान्' इति वे० भा० ।
(३) पदमिदं 'ग' पुस्तके नास्ति ।
(४) 'भार्यानुरागेण' इति 'ग' पुस्तके ।
(५) 'सौख्यमि०' 'ग' पुस्तके ।

याज्ञवल्क्येनोक्तत्वाच्च । यः यशः शाश्वतिकं सुखमिच्छति तेन भर्त्रा भरणशीलेन भार्यानुसारेण भार्यानुरूपेण स्थातव्यम् । तत्र विवस्वतो दृष्टान्तेन द्रढयति । हि यस्माद्यदा सरण्यूः विवस्वद्भार्या वडवा अश्वरूपिणी जाता तदा विवस्वानपि अश्वरूपो भूत्वा सुखमिच्छन् भार्यानुरूपोऽभूत् । पश्चात् संभोगजं सुखं प्राप्तवान् । तदनुरूपत्वात्तदनुरूपेण भार्यासुखं प्राप्यत इति ।

तदर्थेयमृक् ( ऋ० १०.१७.२ )—

**अपा॑गूहन्न॒मृतां॒ मर्त्ये॑भ्यः कृ॒त्वी सव॑र्णामददु॒र्विव॑स्वते ।**
**उ॒ताश्विना॑वभर॒द्यत्तदासी॒दज॑हादु॒ द्वा मि॑थु॒ना स॑र॒ण्यूः ।**

**अप॑ । अ॒गू॒ह॒न् । अ॒मृता॑म् । मर्त्ये॑भ्यः । कृ॒त्वी । स॒ऽव॑र्णाम् । अ॒द॒दुः । विव॑स्वते । उ॒त । अ॒श्विनौ॑ । अ॒भ॒र॒त् । यत् । तत् । आसी॑त् । अज॑हात् । उँ॒ इति॑ । द्वा । मि॒थु॒ना । स॒र॒ण्यूः ॥ १८९ ॥**

तत्रेतिहासः—

त्वष्टृनामकस्य देवस्य सरण्यूस्त्रिशिराश्चेति स्त्रीपुंसात्मकमपत्यद्वयमभूत् । ततस्त्वष्टा सरण्यूनामिकां पुत्रीं विवस्वते प्रायच्छत् । ततस्तस्यां विवस्वतः सकाशाद्यमयम्यौ विजज्ञाते । ततः कदाचिदात्मसदृश्या देवजनितायाः स्त्रियः समीपे तदपत्यद्वयं निधाय स्वयमाश्वं रूपं कृत्वा उत्तरान् कुरून् प्रति जगाम । अथ विवस्वानेतां स्त्रियं सरण्यूं मत्वा ताम्(१) अरंसीत् । तस्यां मनुर्नाम राजर्षिरजायत । ततो विवस्वानेषा सरण्यूर्न भवतीति विज्ञाय स्वयमप्यश्वो भूत्वा तामश्वरूपिणीं प्रायासीत् । ततः संक्रीडमानयोस्तयोः रेतः पृथिव्यां पपात । अथ सा गर्भकामा(२)

---

( १ ) 'सरण्यूमिति मन्वानाम्०' इति वे० भा० ।
( २ ) 'गर्भकामनया' इति वे० भा० ।

तत्पतितं रेतः आजघ्रौ । ततस्तस्याः सकाशादश्विनौ(१) अजायेतामिति ।

तत्रेतिहासमाचक्षते 'त्वाष्ट्री सरण्यूर्विवस्वत आदित्याद्यमौ मिथुनौ जनयाञ्चकार । सा सवर्णामन्यां प्रतिनिधायाश्वं रूपं कृत्वा प्रदुद्राव । स विवस्वानादित्यः आश्वमेव रूपं कृत्वा तामनुसृत्य सम्बभूव । ततोऽश्विनौ जज्ञाते सवर्णायां मनुः' इति यास्केन सम्यगुक्तम् ( नि० १२.१० ) ।

'अभवन्मिथुनं त्वष्टुः' इति बृहद्देवतोक्तं पूर्वमुक्तम् (पृ० ७३ ।

देवश्रवाः सरण्यूं त्रिष्टुभा तुष्टाव । ऋचोऽयमर्थः । अमृतां मरणधर्मरहिताम् एनां सरण्यूं देवा अपागूहन् अपगूहितवन्तः संवृतवन्तः(२)। किमर्थं मर्त्येभ्यः मनुष्येभ्यः तदुत्पत्त्यर्थम्(३)। किञ्च देवाः सवर्णां सरण्यूसदृशीमन्यां स्त्रियं (कृत्वी) कृत्वा तस्मै विवस्वते अददुः प्रायच्छन् । उतापि च यद्यदा सरण्यूः सरणशीला द्वा मिथुना द्वौ मिथुनौ यमयम्यौ तस्यां सवर्णायामजहात् त्यक्तवती । त्यक्त्वा आश्वं रूपं कृत्वा गतवती तदा सा अश्वरूपिणी सरण्यूः अश्विनाभरत् अहरत् । जायापतिभ्यां अश्वरूपाभ्याम् सम्भोगकाले यद्रेतः पतितमासीत् तदेवाश्विनौ जनयामासेत्यर्थः ।

(४)कथमन्यं महात्मानं युवोद्धतो न मन्यते ।
वसुक्र इन्द्रसाम्राज्ये स्वं तुष्टाव स गर्वितः ॥१४०॥

---

( १ ) 'नासत्यो दस्रश्चेत्युभावश्विनौ' इति वे० भा० ।

( २ ) 'देवा उपनीतवन्त इत्यर्थः' इति वे० भा० ।

( ३ ) एतत्पदं नीतिमञ्जरीहस्तलिखितपुस्तकेषु न दृश्यते । वेदभाष्यादुद्धृतमत्र ।

( ४ ) 'क' पुस्तकेऽयं श्लोकोऽवतरणिकां विनैव पठितः । अस्य भाष्यमपि न दत्तम् ।

तदर्थे सूक्तम् ( ऋ० १०. २७ ) असत्सु चतुर्विंशतिरिति ।
तत्र ऋक् ( ऋ० १०.२७.१ )–

असत्सु मे जरितः साभिवेगो यत्सुन्वते यजमानाय शिक्षम्।
अनाशीर्दामहमस्मि प्रहन्ता सत्यध्वृतं वृजिनायन्तमाभुम् ॥

असत् । सु । मे । जरितरिति । सः । अभिऽवेगः । यत् । सुन्वते । यजमानाय । शिक्षम् । अनाशीःऽदाम् । अहम् । अस्मि । प्रऽहन्ता । सत्यऽध्वृतम् । वृजिनऽयन्तम् । आभुम् ॥१६०॥

ऋचोऽयमर्थः । (१) हे जरितः स्तोतः सः(२) अभिवेगः(३) असत् अस्ति(४) येनाभिवेगेन मह्यं सुन्वते यजमानाय शिक्षम् शोभनं करोमि(५) । अनाशीर्दाम् अदातारम्(६) अहं प्रहन्ता(७) । किंविशिष्टं सत्यध्वृतं सत्यकुटिलं (८) वृजिनायन्तं पापकारिणं आभुं महान्तम्(९) ।

---

( १ ) अत्र व्याख्यानारम्भे वेदभाष्यम्–वासुक्रेषु सूक्तेषु बाहुल्येनेन्द्रः स्तूयते इदानीमिन्द्रो वसुक्रं स्तोतुमुद्यतं पुत्रं सम्बोध्य स्वसामर्थ्यं कथयति । येन विज्ञातदेवतारूपः सन् सुखेन स्तोष्यतीति । यद्वा कार्यकारणयोरेकत्वोपचारात् ‘ आत्मा वै पुत्रनामासि ’ इति वचनात् इन्द्ररूपेणावस्थितो वसुक्र आत्मानं स्तौति क्वचित्क्वचिदिन्द्रश्चेति ।

( २ ) एतत्पूर्वं मे मम सुशोभनः इति वे० भा० अधिकम् । सः तादृशः इति वे० भा० ।

( ३ ) ‘अभिगमनं मनसो वृत्तिविशेषः’ इति वे० भा० ।

( ४ ) ‘विद्यते यत्’ इति वे० भा० ।

( ५ ) ‘अभिलषितार्थं ददामि’ इति वे० भा० ।

( ६ ) ‘आशीरित्यत्र प्रार्थना । इह सामर्थ्यात्प्रार्थ्यमानं हविरुच्यते । तत् मह्यम् अददतं जनम् । यद्वा आशीरिति सोमाश्रयणं दध्युच्यते तस्यादातारं असोमयाजिनमित्यर्थः’ इति वे० भा० ।

( ७ ) ‘प्रकर्षेण हिंसिता अस्मि भवामि’ इति वे० भा० ।

( ८ ) सत्यस्य हिंसकं अनृतवादिनं चेत्यर्थः ।

( ९ ) ‘व्याप्तवन्तम्’ इति वे० भा० ।

कुलस्त्रियः(१) स्तुवन्नाह—

जाताः पुत्रा अपि व्यर्था येषां न स्युः कुलस्त्रियः।
पुत्रेणानादृतं शक्रं स्नुषा(२) तुष्टाव सादरम्॥ १४१॥

येषां पुत्राणां कुलस्त्रियो न सन्ति कुलजाता भार्या न भवन्ति। 'वरं कुमारो न च दुष्कलत्रः' इत्युक्तत्वात्। तेषां पुत्रा उत्पन्ना अपि निरर्थका एव। इन्द्रस्नुषादृष्टान्तेन द्रढयति। यथा इन्द्रवधूः। यदि कुलस्त्री पुत्रेण तस्यानादृतं अवगणितं शक्रं 'विश्वो हि०' (ऋ० १०. २८. १) इत्यनया सादरम् अतिप्रीत्या सा तं श्वशुरं तुष्टाव। तया वध्वा इन्द्रस्य जातः पुत्रः सार्थकः कृतः इत्यर्थः।

तदर्थेयमाख्यानयुक्ता ऋक् ( ऋ० १०. २८. १ )—

विश्वो ह्य१न्यो अरिराजगाम ममेदह श्वशुरो नाजगाम।
जक्षीयाद्धाना उत सोमं पपीयात्स्वाशितः पुनरस्तं जगायात्

विश्वः। हि। अन्यः। अरिः। आऽजगाम। मम। इत्। अह। श्वशुरः। न। आ। जगाम। जक्षीयात्। धानाः। उत। सोमम्। पपीयात्। सुऽआशितः। पुनः। अस्तम्। जगायात्॥ १६१॥

अत्राख्यानम्। बृहद्देवता ( ७।२९-३२ )—

(३) विश्वो (४) हीत्यथ संवाद ऋषेः शक्रस्य चैव हि॥२९॥
युग्माः शक्रस्य विज्ञेया वसुक्रस्येतरा ऋचः॥
स्नुषेन्द्रस्यागतान् देवान् दृष्ट्वा शक्रमनागतम्॥ ३०॥

---

(१) 'कुलस्त्रियं' इति 'क' पुस्तके।
(२) 'वधूः' इति 'क' पुस्तके'।
(३) श्लोकोऽयं 'ग' पुस्तके नास्ति।
(४) 'विश्वो ह्यन्यस्तु' इति मु० बृ०।

शक्रं (१) परोक्षवत् प्राह श्वशुरो नागतो मम ।
यद्यागच्छेद् भक्षयेत् स धानाः सोमं पिबेदपि (२) ॥ ३१ ॥
इति (३) वध्वा वचः श्रुत्वा क्षणादेवैत्य वज्रभृत् (४) ।
तिष्ठन् वेद्यामुत्तरस्यामुच्चैराह स रोरुवत् ॥ ३२ ॥

'विश्वो हि द्वादशेन्द्रवसुक्रयोः संवाद ऐन्द्रः सूक्तस्य प्रथमया इन्द्रस्य स्नुषा परोक्षवदिन्द्रमाहेति' ( का० स० ऋ० १०।२८ ) तथा भाष्ये (५)—'पुरा वसुक्रे यज्ञं कुर्वाणे सति इन्द्रः प्रच्छन्नरूप आजगाम । तं वसुक्रपत्नीन्द्रागमनकाङ्क्षिणी विप्रकृष्टमिवाद्यया त्रिष्टुभा इन्द्रमस्तौत्' इति । (६) 'विश्वो ह्यन्यो अरिराजगामेति एतस्य द्वितीयेति' महदुक्थे ( सां० श्रौ० सू० १८।५।७ ) ।

ऋचोऽयमर्थः। अन्यः मच्छ्वशुराद् व्यतिरिक्तः(७)अरिः अर्यः ईश्वरः विश्वो हि सर्व एव देवगणः आजगाम अस्मद्यज्ञं प्रत्याययौ । 'मिताक्षरेष्वनर्थकाः०' (नि० १.९) इति यास्केनोक्तत्वात् इत् पूरणः (८) अहेत्यद्भुते (९)। सर्वदेवगणे आगते ममैव श्वशुरःइन्द्रः नाजगाम नागतः। स श्वशुरो(१०)यद्यागच्छेत्तर्हि धानाः भ्रष्टान् यवान् जक्षीयात् भक्षयेत्। उतापि च सोममभिषुतं सोमं पपीयात् पिबेत्। ततः स्वाशितः

---

( १ ) 'यज्ञं' इति मु० बृ० ।

( २ ) 'पिबेदिति' 'क' पुस्तके ।

( ३ ) 'तस्या' इति मु० बृ० ।

( ४ ) 'वज्रधृक्' इति 'क' पुस्तके । 'तत्क्षणादेत्य वज्रधृक्' इति मु० बृ० ।

( ५ ) सायणाचार्यविरचितवेदभाष्यमेवेदम् ।

( ६ ) सम्पूर्णं सूत्रमिदमेवम्—'विश्वो ह्यन्यो अरिराजगामेति सूक्तं तत्पच्छस्तस्य द्वितीयामुद्धृत्य य एक इद्धव्यश्चर्षणीनामिति यैतस्य द्वितीया तामिह द्वितीयां करोति' इति ।

( ७ ) 'इन्द्रव्यतिरिक्तः' इति वे० भा० ।

( ८ ) 'इदित्यवधारणे' इति वे० भा० ।

( ९ ) 'अहेत्यद्भुते खेदे' इति 'ग' पुस्तके ।

(१०) 'स इन्द्रः' । इति 'क' पुस्तके तथा वे० भा० ।

सुभुक्तः (१) सन् पुनर्भूयः अस्तं स्वगृहं प्रति जगायात् गच्छेत् ॥
इति पुत्रेणानादृतं शक्रं वधूस्तुष्टावेति ।

विप्राणां भिक्षावृत्तिर्ज्यायसीत्यर्थं आह—

सर्वासां विप्रवृत्तीनां भिक्षावृत्तिर्गरीयसी ।
पुत्रं(२) वाचं गतो वक्तुं प्रेते मित्रातिथावृषिः ॥१४२॥

'याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः' इति विप्रमुख्यास्तिस्रो वृत्तयो विहिताः । तासां 'सर्वासां विप्रवृत्तीनां प्रतिग्रहं श्रेष्ठतमं वदन्ति' इत्युक्तत्वात् या भिक्षावृत्तिः सा गरीयसी ज्येष्ठा भवति । 'प्रियस्थिरस्फिरोरु०' (पा० ६.४.१५७) इति गुरोर्गरादेशः । ऋषिदृष्टान्तेन द्रढयति । यथा पूर्वं कवष ऋषिः मित्रातिथौ राज्ञि प्रेते सति प्रेतोद्देशेन भिक्षार्थं दीनाय मह्यं दरिद्राय युष्मत्पितुर्विदिताय और्ध्वदेहिके कर्मणि यद्देयमस्ति तद्देहीति वाचं वाणीं वक्तुं शोकापनोदार्थं पुत्रगृहं गतः ।

तदर्थेयमितिहासपूर्वा ऋक् (ऋ० १०.३३.७)—

अधिं पुत्रोपमश्रवो नपान्मित्रातिथेरिहि ।
पितुष्टे अस्मि वन्दिता ॥
अधिं । पुत्र । उपमऽश्रवः । नपात् । मित्रऽअतिथेः ।
इहि । पितुः । ते । अस्मि । वन्दिता ॥१६२॥

अत्राख्यानम् । बृहद्देवता (७।३५-३६)—

मृते मित्रातिथौ राज्ञि तन्नपातमृषिः (३) परैः ॥३५॥
उपमश्रवसं यस्य चतुर्भिः स(४) व्यशोकयत्(५) ॥

---

(१) 'सुष्ठु भुक्तः तृप्तः' इति वे० भा० ।
(२) 'दीनां' इति 'क' पुस्तके ।
(३) 'तत्र यातमृषिः' इति 'ग' पुस्तके ।
(४) 'पुत्रमस्य' इति 'ग' पुस्तके ।
(५) वेदार्थदीपिकायामयं श्लोकस्त्वेवम्—
यस्येति सूक्तशेषेण मृते मित्रातिथौ नृपे ।
उपमश्रवसः स्नेहादृषिः शोकमपानुदत् ॥

'पराभिर्मृते मित्रातिथौ राज्ञि तत्स्नेहादृषिरुपमश्रवसं पुत्रमस्य व्यशोकयदिति' (का० स० ऋ० १०।३३)। मित्रातिथौ राज्ञि मृते तत्पुत्रस्योपमश्रवसः समीपमागत्य कवषः स्नेहाद् गायत्र्या शोकं मा कुरुतामित्युक्त्वा शोकाविष्टं निवारयति।

ऋचोऽयमर्थः। हे राजपुत्र उपमश्रवः मित्रातिथेर्नपात् अपत्य। नपात् अपत्यनामैतत् (निघण्टु० २।२)। त्वम् एतत् अधीहि जानीहि(१)। एतत् किम्। ते तव पितुः मित्रातिथेः अहं वन्दिता वन्द्यः(२) सम्बन्धी अस्मि। एतज्ज्ञात्वा शोकं मा कुरु। यद्देयं द्रव्यमस्ति तत्सर्वं मह्यं पूज्याय देहीति।

पितुष्टे इत्यत्र 'विग्रहे तु ष्वात इत्यनुदात्तयोः' (ऋ० प्रा० ५।३२) इति षत्वम्।

साधूनां स्वभावं स्तुवन्नाह—

भृशं प्रपीडिता(३) भक्तैः साधवो भक्तवत्सलाः।
कुत्सेन बाधितः शक्रः कुत्सं जगाम वै(४) पुनः॥१४३॥

साधवो महान्तः भक्तैः सेवकैः भृशम् अत्यर्थं प्रपीडिताः सन्तो भक्तवत्सला भवन्ति। तेष्वपि भक्तेषु वात्सल्यवन्तो भवन्ति। स्नेहवन्तो भवन्ति। कुत्सदृष्टान्तेन द्रढयति। यत् स कुत्सेन भक्तेनातिसखिना। 'भुवत्ते कुत्सः सख्ये निकामः' (ऋ० ४. १६. १०) इति सख्यमुक्तम्। बाधितः सन् कुत्सं भक्तं स्तुत्या पुनर्जगाम पुनरागतः।

तदर्थेयमितिहासपूर्वा ऋक् (ऋ० १०. ३८. ५)—

स्ववृजं हि त्वामहमिन्द्र शुश्रवानानुदं वृषभ रध्रचोदनम्।
प्रमुञ्चस्व परि कुत्सादिहा गहि किमु त्वावान्मुष्कयोर्बद्ध आसते

(१) 'मत्समीपमागच्छ' वे० भा०।
(२) 'स्तोता' वे० भा०।
(३) 'सम्पीडिताः' इति 'क' पुस्तके।
(४) 'तं जगाम स वै०' इति 'क' पुस्तके।

स्वऽवृजम् । हि । त्वाम् । अहम् । इन्द्र । शुश्रव । अननुऽदम् । वृषभ । रध्रऽचोदनम् । प्र । मुञ्चस्व । परि । कुत्सात् । इह । आ । गहि । किम् । ऊँ इति । त्वाऽवान् । मुष्कयोः । बद्धः । आसते ॥ १६३ ॥

अत्राख्यानम् ।

(१)लुशकुत्सावृषी पूर्वं यज्ञकामौ बभूवतुः ।
इन्द्रमाह्वयतो यज्ञ इन्द्र कुत्समुपागमत् ॥
शतेन वै स वाध्रीभिर्(२) अबध्नात् मुष्कयोर्दृढम् ।
स्ववृजं(३) हीति तं शक्रमागत्याभ्यवदल्लुशः ॥
निशम्य तद्वचो वाध्रीः सञ्छिद्य प्राद्रवत् तदा ।
जगौ साम तदा कुत्सः कुत्सं जगाम वै पुनः ॥

(४) तथा ताण्ड्यब्राह्मणम् ( ता० म० ब्रा० ९।२।२२ )–'कुत्सश्च लुशश्चेन्द्रं व्यह्वयेतां स इन्द्रः कुत्समुपाधावत्(५) तं शतेन वाध्रीभिरण्डयोरबध्नात् तं(६) लुशोऽभ्यवदत् स्ववृजं हीति(७)। प्रमुञ्चस्व(८) परिकुत्सादिहागहि किमु त्वावानाण्डयोर्बद्ध आसत(९)

---

( १ ) एते श्लोका बृहद्देवतायां वेदभाष्ये सर्वानुक्रमण्यां च नोपलभ्यन्ते ।

( २ ) स तु तं शतवाध्रीभिर्० इति 'ग' पुस्तके ।

( ३ ) 'स्ववृजं जहि' इति 'ग' पुस्तके ।

( ४ ) वेदभाष्ये कथेयं 'तत्र शाट्यायनकम्' इति प्रस्तुत्य स्वल्पेनैव शब्दभेदेन दत्ता साऽग्रे पाठभेदेन दर्शिता ।

( ५ ) 'स कुत्सस्याहवमागच्छत्' इति वे० भा० । 'उपावर्त्तत' इति मुद्रितताण्ड्यमहाब्राह्मणे ।

( ६ ) 'तं' इति पदं वेद भाष्ये न दृश्यते ।

( ७ ) ऋगियं वेदभाष्ये सम्पूर्णोद्धृता ।

( ८ ) 'प्रमुच्यस्व' इति मु० ता० ब्रा० ।

( ९ ) 'आसाता' इति मु० ता० ब्रा० ।

( ऋ० १०।३८।५ ) इति । ताः सञ्छिद्य लुशं (१) प्राद्रवत् सः (२) एतत् कुत्सः सामापश्यत् तेनैनमन्ववदत् स उपावर्ततेति' (३)।

अनुक्रमणिकाराभिप्रायेण 'मुष्कवानिन्द्रो जगत्या इन्द्रं तुष्टाव' इति । 'लुशो जगत्या इन्द्रं तुष्टाव' इति ताण्ड्याभिप्रायः ।

ऋचोऽयमर्थः—हे वृषभ कामानां वर्षकेन्द्र त्वां स्ववृजं स्वयमेव छेत्तारं अनतुदं अनु पश्चाद्ददातीत्यनुदः तादृशो यस्य न भवतीत्यननुदः तं अनपेक्षितबलानुप्रदानं रध्रचोदनं राधकस्य राधसो वा प्रेरकम् अहं लुशः शुश्रव अश्रौषम्। हि यस्मात् तस्मात् प्रमुञ्चस्व। कुत्सेन वध्रिशतेनाण्डयोर्बद्धमात्मानं विमुञ्चस्व । अथ परि परितः सर्वतः परिवृतस्त्वं कुत्सात् कुत्साख्यादृषेः इहास्मद्यागे आगहि आगच्छ । किमु त्वावान् त्वत्सदृशः कश्चिदन्यः मुष्कयोरण्डयोर्बद्धः सन् आसते । न कोऽपि एतादृशो निर्लज्जस्त्वत्तो नास्तीत्यभिप्रायः ।

यज्ञा स्वर्गीत्याह—

(४)ऐहिका नाव आरोढुं न शक्नुवन्ति यज्ञियाः ।
आरोहन्त्यास्तिकास्ता ये(५)कृष्णस्तान् स्वर्गिणोऽब्रवीत् १४४

ऐहिकाः पुरुषाः इह भवा ऐहिकाः 'अयमेव लोको न परः' इति येषां मतिरस्ति ते नास्तिकाः याज्ञियाः नावः यज्ञसम्बन्धिनीः । धनात्

---

( १ ) 'लुशं' इति पदं मुद्रित ता० ब्रा० पुस्तके न दृश्यते ।

( २ ) 'ताः सर्वाः संलुप्य लुशमभिप्राद्रवदिति ' वेदभाष्ये समापितम् ।

( ३ ) वेदभाष्ये छन्दोगब्राह्मणमप्यत्रैवं प्रोक्तम्—'कुत्सश्च लुशश्च युगपदिन्द्रमाहूतवन्तौ । स्वं स्वं यज्ञं प्रत्यङ्गभावाय सखित्वादिन्द्रः कुत्सं प्रतिजगाम तं तु गतं वशित्वात् कुत्सो वध्रिशतेनाण्डयोरवध्नाद्' इति । जैमिनीयब्राह्मणेऽपीयं कथा ( १।१२८ ) इत्यत्र द्रष्टव्या ।

( ४ ) 'ऐहिकैर्नाव आरोढुं न शक्यन्ते हि यज्ञियाः' इति 'ग' पुस्तके ।

( ५ ) 'ये ताः' इति 'ग' पुस्तके ।

आरोढुं आरोहणं कर्तुं न शक्नुवन्ति । ये ऐहिकाः आस्तिकाः भूत्वा ताः यज्ञियाः नावः आरोहन्ति । कृष्ण ऋषिः तान् स्वर्गिणः स्वर्ग एषामस्तीति 'नौर्हैवा एषा स्वर्ग्या यदग्निहोत्रम्' इत्युक्तत्वाद् अब्रवीत् ॥

तत्र ऋक् ( ऋ० १०.४४.६. )—

पृथक्प्रायन्प्रथमा देवहूतयोऽकृण्वत श्रवस्यानि दुष्टरा ।
न ये शेकुर्यज्ञियां नावमारुहमीर्मैव ते न्यविशन्त केपयः ॥

पृथक् । प्र । आयन् । प्रथमाः । देवऽहूतयः । अकृण्वत । श्रवस्यानि । दुस्तरा । न । ये । शेकुः । यज्ञियाम् । नावम् । आऽरुहम् । ईर्मा । एव । ते । नि । अविशन्त । केपयः ॥ १६४ ॥

कृष्णो(१) जगत्या इन्द्रं तुष्टाव । हे इन्द्र त्वत्प्रसादात् यज्ञियां यज्ञसम्बन्धिनीं यज्ञमयीं नावम् आरुहं आरोढुं शेकुः शक्तास्ते यज्वानः धार्मिकाः देवहूतयः देवानामाह्वातारः(२) प्रथमा मुख्याः सन्तः(३) । प्रथम इति मुख्यनामेति यास्कः ( नि० २।२२ ) । पृथक्प्रायन् पृथग्भूत्वा देवलोकमगच्छन् । किञ्चास्मिँल्लोके श्रवस्यानि श्रवणीयानि यशांसि दुस्तरा अन्यैः दुस्तराणि अकृण्वत अकुर्वत । किञ्च ये त्वत्प्रसादरहिता जना यज्ञियां नावमारोढुं न शेकुः न शक्नुवन्ति ते केपयः कपूयाः कुत्सितपूयकर्माणः कुत्सितकर्मकर्त्तारो नास्तिकाः पापजनाः ईर्मा एव न्यविशन्त ऋणे (४) हैव ते न्यविशन्त नीचैराविशन्त । अधोगतिं प्राप्ता इत्यर्थः ।

---

( १ ) 'कृष्ण ऋषिः' इति 'ग' पुस्तके ।
( २ ) 'आह्वानकर्त्तारः' इति 'ग' पुस्तके ।
( ३ ) 'पूर्वे मुख्या वा' इति वे० भा० ।
( ४ ) 'ऋणेनैव' वे० भा० ।

'यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः ।
भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात्' ॥
इति भगवतोक्तेः ( भ० गी० ३।१३ )।

तथा(१) च यास्कः ( नि० ५.२५ )–पृथक् प्रायन्। पृथक् प्रथतेः। प्रथमा देवहूतयो ये देवानाह्वयन्ताकुर्वत श्रवणीयानि यशांसि दुरनुकराण्यन्यैर्येऽशक्नुवन् यज्ञियां नावमारोढुमथ ये नाशक्नुवन् यज्ञियां नावमारोढुमीर्मैव ते न्यविशन्तेहैव ते न्यविशन्त ऋणे हैव ते न्यविशन्तास्मिन्नेव लोके इति वा (२)।

देवहूतयोऽकृण्वत 'एकीभवति पादादिरकारः०' ( ऋ० प्रा० २।३४ ) इति पादादित्वादभिनिहितः दुष्टरा—'युग्मान्तस्थादन्तमूलीय०' (ऋ० प्रा० ५.२० ) इति षत्वम् ।

इति श्रीलक्ष्मीधरसूनुना द्याह्वयेन विरचिते नीतिमञ्जरीव्याख्याने सप्तमाष्टके नीतिवाक्यानि प्रदर्शितानि । श्रीरस्तु । श्रीविश्वेशो विजयतेतराम् ॥

इति नीतिमञ्जर्यां सप्तमाष्टकः समाप्तः ॥



( १ ) वेदभाष्ये निरुक्तवचनमिदं सम्पूर्णमुद्धृतम् । मूले 'क' पुस्तके तु 'पृथक् प्रायन् पृथक् प्रथतेरिति यास्कोक्तं द्रष्टव्यम्' इत्येव ।

( २ ) 'क' पुस्तकेऽल्पाक्षरैः केनापि लेखकेन दुर्गाचार्यकृतव्याख्यानमस्य निरुक्तस्योद्धृत्य 'इति निरुक्तभाष्ये' इति कथितम् । तन्निरुक्तग्रन्थादेवावलोकयितव्यम् ।

श्रीः

# अथाष्टमाष्टकः ।

नीचसङ्गो(१) न कर्तव्य इत्याह—

असतां सङ्गदोषेण साधुर्यात्यपि विक्रियाम् ।
इन्द्रेण बाधिता देवाः साधुनाऽसुरसङ्गतेः (२) ॥ १४५ ॥

तदर्थेयमितिहासपूर्वा ऋक् ( ऋ० १०.४७.१ )—

जगृम्भा ते दक्षिणमिन्द्र हस्तं वसूयवो वसुपते वसूनाम् ।
विद्मा हि त्वा गोपतिं शूर गोनामस्मभ्यं चित्रं वृषणं रयिं दाः

जगृम्भ । ते । दक्षिणम् । इन्द्र । हस्तम् । वसुऽयवः । वसुऽपते । वसूनाम् । विद्म । हि । त्वा । गोऽपतिम् । शूर । गोनाम् । अस्मभ्यम् । चित्रम् । वृषणम् । रयिम् । दाः ॥ १६५ ॥

तत्रेतिहासः । विकुण्ठा नामासुरस्त्री सा चेन्द्रसदृशं पुत्रं कामयमाना कृच्छ्रचान्द्रायणादिकं तपस्तेपे । मत्सदृशोऽन्यः कश्चिन्मा जनिष्टेति बुद्ध्या इन्द्र एव तस्याः पुत्रोऽजायतेति(३) ।

'जगृम्भाष्टौ सप्तगुर्वैकुण्ठमिन्द्रं तुष्टाव । विकुण्ठा नामासुरीन्द्रतुल्यं पुत्रमिच्छन्ती महत्तपस्तेपे । तस्याः स्वयमेवेन्द्रः पुत्रो जज्ञे' । इत्यनुक्रमण्यां स्पष्टमुक्तम् ( का० स० ऋ० १०।४७ ) ।

---

( १ ) 'संयोगो' इति 'ग' पुस्तके ।

( २ ) 'असुरसङ्गतः' इति 'ग' पुस्तके ।

( ३ ) 'जातः' इति वे० भा० । इतिहासोऽयं बृहद्देवतायां ( ७।४६-५६ ) द्रष्टव्यः ।

सप्तगुर्ऋषिर्वैकुण्ठमिन्द्रं त्रिष्टुभा तुष्टाव । ऋचोऽयमर्थः । हे इन्द्र वसूनां पते वसुपते बहूनां धनानां स्वामिन्। वसूयवो वसुकामाः ( नि० ६.९ ) वयं ते तव दाक्षिणं हस्तं जगृम्भ गृह्णीमः । यथा बहुप्रदस्यार्थिनोऽस्मभ्यमदत्त्वा न गन्तव्यमिति हस्तं गृह्णन्ति तद्वत् । तथा हे शूर विक्रान्त इन्द्र त्वा त्वां गोनां पतिं गोपतिं विद्म: जानीमः । अत्र वृत्त्यवृत्तिभ्यां स्वामित्वं बहुत्वञ्च प्रतिपाद्यते । अतोऽस्मभ्यं चित्रं चायनीयं वृषणं वर्षणीयं(१) रयिं धनं दाः देहि ।

तथा चारुचर्या(२)—

असतां संगदोषेण साधवो यान्ति विक्रियाम् ।
दुर्योधनप्रसङ्गेन भीष्मो गोहरणं गतः ॥

अहङ्कारस्त्यक्तुमशक्य इत्याह—

जडाः कुर्वन्त्यहङ्कारं किं चित्रं मघवा यदि ।
अहमिति त्रिभिर्गर्वं(३)चकार ज्ञानवानपि ॥१४६॥

तदर्थेयमाख्यानपूर्वा ऋक् ( ऋ० १०.४८.१. )—

अहं भुवं वसुनः पूर्व्यस्पतिरहं धनानि सञ्जयामि शश्वतः।
मां हवन्ते पितरं न जन्तवोऽहं दाशुषे वि भजामि भोजनम्॥

अहम् । भुवम् । वसुनः । पूर्व्यः । पतिः । अहम् । धनानि । सम् । जयामि । शश्वतः । माम् । हवन्ते । पितरम् । न । जन्तवः । अहम् । दाशुषे । वि । भजामि । भोजनम् ॥ १६२ ॥

---

( १ ) 'वर्षकम्' इति वेदभाष्ये ।

( २ ) 'काव्यमालायाः प्रथमगुच्छके विद्यमानमुद्रितचारुचर्या-पुस्तके श्लोकोऽयं न दृश्यते ।

( ३ ) 'त्रिभिर्वर्गैः' इति 'ग' पुस्तके ।

वैकुण्ठ इन्द्रः स्वात्मानं जगत्या तुष्टाव । ऋचोऽयमर्थः । अहम् इन्द्रः वसुनो धनस्य पूर्व्यः श्रेष्ठः मुख्यो वा असाधारणः पतिः स्वामी भुवं(१) अभवम् । तथा अहं शश्वतः । बहुनामैतत् भूरि शश्वत् विश्वमिति ( निघण्टु० ३।१ )। बहोः शत्रोः सम्बन्धीनि धनानि सञ्जयामि । 'समित्येकीभावम्' ( नि० १।३।१९ ) इति यास्कः । मदीयैः धनैः सह एकीभावं करोमि । किञ्च मामेव जन्तवः प्राणिनो यजमानाः हवन्ते आह्वयन्ति । तत्र दृष्टान्तः । पितरं न पितरमिव पुत्राः । अहं दाशुषे हविषां प्रदात्रे यजमानाय भोजनं धनं (२) विभजामि ददामि ।

उत्कोचं के न गृह्णन्तीत्यर्थ आह(३)—

उत्कोचा न परित्यक्ता(४) देवैरपि समृद्धिदैः ।
ययाचेऽग्निर्हविर्वोढुं प्रयाजाननुयाजकान् ॥ १४७ ॥

उत्कोचाः लञ्चाः ।

(५)अत्राख्यानम्—वज्रभूतेन वषट्कारेण देवानां हविर्वहनेन च हतेषु भ्रातृषु कनिष्ठः सौचीको नामाग्निः वषट्कारहविर्वहनाभ्यां भीतो देवेभ्यो निर्गत्यापः प्राविशत् । स च मत्स्यैः प्रदर्शितः सन् अन्वेष्टुमागतैर्देवैः सहेदमादिसूक्तत्रयेण संवादं कृतवान् । तस्मै वरमददुः स हैतं वरं वव्रे प्रयाजान्मे अनुयाजांश्च केवलानिति ।

---

( १ ) भवतेर्लङि 'बहुलं छन्दसि' ( पा० २।४।७३ ) इति शपो लुक् । 'अचि श्नु०' ( पा० ६।४।७७ ) इत्यादिना उवङादेशः । अडभावश्छान्दसः ।

( २ ) 'अन्नम्' इति वे० भा० ।

( ३ ) 'उत्कोचं को न याचत इत्याह' इति 'क' पुस्तके ।

( ४ ) 'उत्कोचो न परित्यक्तो' इति 'क' पुस्तके ।

( ५ ) आख्यानमिदं 'ग' पुस्तके तथा वेदभाष्ये एव वर्तते ।

तत्र ऋक् ( ऋ० १०. ५१. ८ )—

प्रयाजान्मे अनुयाजांश्च केवलानूर्जस्वन्तं हविषो दत्त भागम्
घृतं चापां पुरुषं चौषधीनामग्नेश्च दीर्घमायुरस्तु देवाः ॥

प्रऽयाजान् । मे । अनुऽयाजान् । च । केवलान् । ऊर्जस्वन्तम् । हविषः । दत्त । भागम् । घृतम् । च । अपाम् । पुरुषम् । च । ओषधीनाम् । अग्नेः । च । दीर्घम् । आयुः । अस्तु । देवाः ॥ १६७ ॥

(१.)तत्र बृहद्देवता ( ७।६१-६६; ७२-७७ )–
वैश्वानरे गृहपतौ यविष्ठेऽग्नौ च पावके ।
वषट्कारेण वृक्णेषु भ्रातृष्वग्नौ सहःसुते(२) ॥ ६१ ॥
अपचक्राम देवेभ्यः सौचीकोऽग्निरिति श्रुतिः ।
स प्राविशदपक्रम्य ऋतूनपो(३) वनस्पतीन् ॥ ६२ ॥
ततोऽसुराः प्रादुरासन्नष्टेऽस्मिन् हव्यवाहने ।
तेऽग्निमेवान्ववैक्षन्त देवा हत्वाऽसुरान् मृधे(४) ॥ ६३ ॥
तं तु दूराद्यमश्चैव वरुणश्चान्वपश्यताम् ।
उभौ चैनं समादाय देवानेवाभिजग्मतुः ॥ ६४ ॥
दृष्ट्वा देवास्त्वैनमूचुरग्ने(५) हव्यानि नो वह ।
वरान् गृहाण चास्मत्तश्चित्रभानो भजस्व नः ।

---

( १ ) इदमाख्यानं 'ग' पुस्तके नास्ति ।

( २ ) 'वृक्णे तु भ्रातृवर्गस्थितैर्युते' इति 'क' पुस्तके । अत्र मुग्धानलमहाशयोऽनुक्रमणीपाठं पुरस्कृत्य निम्नलिखितपाठमेव समर्थयति तद्द्रष्टव्यं तन्निर्मितबृहद्देवतानुवादपुस्तके ( मु० बृ० भा० २ पृ० २६७ ) 'सहःसुते' तु 'सहसः सुते' इत्यस्य संक्षेपः ।

( ३ ) 'ऋतूनापो' इति 'क' पुस्तकपाठस्तु न सम्यक् प्रतिभाति ।

( ४ ) 'युधि' इति मु० बृ० ।

( ५ ) 'देवाश्चैनम्' इति 'क' पुस्तके ।

देवयानान् सुगान् पथः कुरुष्व सुमनाः स्वयम् ॥ ६५ ॥
प्रत्युवाचाथ तानग्निर्विश्वे देवा यदूच माम् (१) ।
तत्करिष्ये जुषन्तान्तु होत्रं पञ्चजना(२) मम ॥ ६६ ॥

....................................................................

....................................................................

ये चान्ये पृथिवीजाता देवाश्चान्येऽथ यज्ञियाः ॥ ७२ ॥
आयुरस्तु च मे दीर्घं हवींषि विविधानि च ।
अरिष्टिः पूर्वजानाञ्च भ्रातॄणामध्वरेऽध्वरे ॥ ७३ ॥
प्रयाजाश्चानुयाजाश्च घृतं(३) सोमे च यः पशुः ।
मद्दैवत्यानि वै सन्तु यज्ञो मद्दैवतोऽस्तु हि ॥ ७४ ॥
तवाग्ने यज्ञ (ऋ० १०।५१।९) इत्येव प्रत्यूचुः(४) स्विष्टकृच्च सः ।
(५)यस्य त्रीणि सहस्राणि नव त्रीणि शतानि च ॥ ७५ ॥
त्रिंशच्चैव तु देवानां सर्वानेव वरान् ददुः ।
ततोऽग्निः सुमनाः प्रीतो विश्वैर्देवैः पुरस्कृतः(६) ॥ ७६ ॥
विधूयाङ्गानि यज्ञेषु चक्रे होत्रमतन्द्रितः ।
भ्रातृभिः सहितः प्रीतो दिव्यात्मा हव्यवाहनः ॥ ७७ ॥
तथा चानुक्रमणी ( का० स० ऋ० १०।५१ )—वषट्कारेण

---

(१) 'प्रयच्छत' इति 'क' पुस्तके ।

(२) पञ्चजनव्याख्यानं बृहद्देवतातो ( मु० बृ० ७।६६-७२ ) अवलोकयितव्यम् ।

(३) 'प्रयाजांश्चानुयाजांश्च घृते०' इति 'क' पुस्तके ।

(४) 'इत्येतत् प्रत्यार्धि' इति मु० बृ० ।

(५) अत्र ( ७६ ) श्लोकस्यापरार्धं 'ततोऽग्निः सुमनाः' इत्यादि उदाहृत्य समापितेयं कथा नीतिमञ्जरीमूलपुस्तके । सन्दर्भवैशद्याय द्वौ श्लोकौ बृहद्देवतात उद्धृत्य दत्तौ ।

(६) 'च संस्तुतः' इति 'क' पुस्तके ।

वृक्णेषु भ्रातृषु सौचीकोऽग्निरपः प्रविश्य देवैः समवददुत्तरै-स्त्रिभिः (१) इति ।

तत्र जलं प्रविष्टः सौचीकोऽग्निः उत्कोचार्थं देवांस्त्रिष्टुभा तुष्टाव(२) । ऋचोऽयमर्थः । हे देवाः मे मह्यं प्रयाजान् प्रधानस्य मुखे यष्टव्यान्(३) केवलान् असाधारणान् । तथा अनुयाजान् अनु यष्टव्यान्(४) हविर्भागान् दत्त प्रयच्छत । तथा ऊर्जस्वन्तं प्रत्यभिघाराद् सारवन्तं हविषः सर्वस्यापि चरुपुरोडाशादेर्भागं(५) दत्त(६) । किञ्च अपां सारभूतं ताभ्य उत्पन्नं वा घृतं आज्यभागादिसाधनं ओषधीनां ओषधीभ्य उत्पन्नं पुरुषञ्च भागं दत्त । दत्त्वा चाग्नेर्मम दीर्घमायुरस्तु । वषट्कारकृत( वध )भयं मा भूयादित्यर्थः(७) ।

अस्मिन्नेवार्थेऽपरा ऋक् ( ऋ० १०.५१.९ )—

तव॑ प्रया॒जा अ॑नुया॒जाश्च॒ केव॑ल॒ ऊर्जस्वन्तो ह॒विषः॑ सन्तु भा॒गाः ।
तवा॑ग्ने य॒ज्ञो॑३॒॑ऽयम॑स्तु॒ सर्व॒स्तुभ्यं॑ नमन्तां प्र॒दिश॒श्चत॑स्रः ॥

( १ ) वेदभाष्येऽत्र सूक्तत्रयोक्तार्थे तैत्तिरीयब्राह्मणम् ( तै० सं० २।६।६ )-अग्नेस्त्रयो ज्यायांसो भ्रातर आसन् । ते देवेभ्यो हव्यं वहन्तः प्रामीयन्त । सोऽग्निरबिभेदित्थं वावस्याआर्तिमारिष्यतीति । स निलायत । सोऽपः प्राविशत् । तं देवाः प्रैषमैच्छन्नित्यादि ।

( २ ) 'अनेनाग्निर्हविर्वहने दातव्यान्युत्कोचानि प्रतिजानाति' इति वे० भा० ।

( ३ ) 'एतन्नामकान् हविर्भागान्' इति वे० भा० ।

( ४ ) 'अनुप्रधानान् पश्चाद्यष्टव्यानेतन्नामकान् इति वे० भा० ।

( ५ ) 'स्विष्टकृदाख्यं भागम्' इति वे० भा० ।

( ६ ) 'अथवोर्जस्वन्तं हविषो भागं प्रयाजानुयाजाख्यम्' इति वेदभाष्ये ।

( ७ ) अत्र वेदभाष्ये अमुमितिहासं प्रस्तुत्य कौषीतकिब्राह्मणम् ( कौ० ब्रा० १।२ )-'तस्मादाग्नेयाः प्रयाजा आग्नेया अनुयाजा आग्नेयमाज्यमाग्नेयः पुरोडाशः' । इति ।

तव॑ । प्र॒ऽया॒जाः । अ॒नु॒ऽया॒जाः । च॒ । केव॑ले । ऊर्ज॑स्वन्तः । ह॒विषः॑ । स॒न्तु॒ । भा॒गाः । तव॑ । अ॒ग्ने॒ । य॒ज्ञः । अ॒यम् । अ॒स्तु॒ । सर्वः॑ । तुभ्य॑म् । न॒म॒न्ता॒म् । प्र॒ऽदिशः॑ । चत॑स्रः ॥ १६८ ॥

(१) हे अग्ने तव प्रयाजाः अनुयाजाश्च केवले असाधारणाः ऊर्जस्वन्तोऽन्नवन्तो(२) हविषो भागाः सन्तु । अयं सर्वो यज्ञस्तव चास्तु । तथा प्रदिशः प्रकृष्टा मुख्याश्चतस्रो दिशस्तुभ्यं नमन्ताम् । अत(३) एव हविर्वहेति ।

प्रभोः प्रसादे विश्वासं(४) न कुर्यादित्यर्थ आह—

प्रभुप्रसादे विश्वासं न कुर्यात् स्वप्नसन्निभे ।
यतस्तत्याज(५) बन्ध्वादीनसमातिः पुरोहितान् ॥१४८॥

(६) तथानुक्रमणी ( का० स० ऋ० १०।५७ )—अथ हैक्ष्वाको राजाऽसमातिर्गौपायनान् बन्ध्वादीन् पुरोहितांस्त्यक्त्वाऽन्यौ मायाविनौ श्रेष्ठतमौ मत्वा पुरोदधे(७) । तमितरे क्रुद्धा अभिचेरुः । अथ तौ मायाविनौ सुबन्धोः प्राणानाचिक्षिपतुरथ हास्य भ्रातरस्त्रयो मा प्रगामेति षट्कं गायत्रं(ऋ० १०.५७) स्वस्त्ययनं जप्त्वेति ।'

---

( १ ) 'एवमग्निना याच्यमाना देवाः प्रतिब्रुवते' इति वे० भा० ।
( २ ) 'बलवन्तो' इति वे० भा० ।
( ३ ) 'अत एहि हविर्वहेति शेषः' इति वे० भा० ।
( ४ ) 'प्रभोर्विश्वसनं०' इति 'क' पुस्तके ।
( ५ ) 'अग्र्यांस्तत्याज' इति 'क' पुस्तके ।
( ६ ) 'मुग्धानलमहाशयेनेयमनुक्रमणीकथा स्वीयसर्वानुक्रमण्यां ( ऋ० १०।५६ ) पूर्वसूक्तान्तर्गतैव ग्रथिता । प्रमाद एवायं भवेत् ।
( ७ ) 'क' पुस्तकेऽत्रैवानुक्रमणीकथां परिसमाप्य वेदभाष्यस्थाख्यानादेकमेव वाक्यमुद्धृत्य बृहद्देवता कथितुमारब्धा । अतोऽस्माभिः संदर्भवैशद्याय तिस्रः कथाः पृथक्कृत्य दत्ताः । वेदभाष्यगताख्यानं सम्पूर्णं 'ग' पुस्तके उद्धृतमस्ति ।

अत्राख्यानम् । ऐक्ष्वाकोऽसमातिर्नाम राजा । तस्य बन्धुः सुबन्धुः श्रुतबन्धुः विप्रबन्धुश्चेति चत्वारः पुरोहिता आसन् । ते च गौपायनाः । स च राजा तांस्त्यक्त्वा अन्यौ मायाविनावृषी पुरोहितत्वेनावृणीत । ततो बन्ध्वादयः क्रुद्धाः सन्तः इमं राजानमभिचरितवन्तः । एतद् ज्ञात्वा मायाविनौ पुरोहितौ एषामन्यतमं सुबन्धुं प्राणैर्वियोजितवन्तौ । मृतस्यास्य भ्रातरो बन्धुः श्रुतबन्धुः विप्रबन्धुरित्येते अविनाशप्राप्तिहेतुभूतमिदं दृष्ट्वा जपन्ति स्मेति ।

तथा च बृहद्देवता ( ७।८४-८९ )—

सूक्तमाख्यानसंयुक्तं वक्तुकामस्य मे शृणु ।
सम्मोहान्नष्टसंज्ञस्य शत्रुणाभिहतस्य तु ॥ ८४ ॥
जीवावृत्तिः सुबन्धोर्वा यदि वा मनसः स्तवः ।
राजाऽसमातिरैक्ष्वाको रथप्रोष्ठः पुरोहितान् ॥ ८५ ॥
व्युदस्य बन्धुप्रभृतीन् द्वैपदा येऽत्रिमण्डले ( ऋ० ५. २४ ) ।
द्वौ किराताकुली नाम ततो मायाविनौ द्विजौ ॥ ८६ ॥
असमातिः पुरोऽधत्त वरिष्ठौ(१) तौ हि मन्यते(२) ।
तौ कपोतौ द्विजौ भूत्वा गत्वा(३) गौपायनानभि ॥ ८७ ॥
मायाबलाच्च योगाच्च सुबन्धुमभिपेततुः ।
स दुःखादभिघाताच्च मुमोह च पपात च ॥ ८८ ॥
तौ ततोऽस्यासुमालुच्य राजानमभिजग्मतुः ।

(४)तत्र ऋक् ( ऋ० १०. ५७. १; )—

**मा प्र गा॑म प॒थो व॒यं मा य॒ज्ञादि॑न्द्र सो॒मिनः॑ ।**
**मान्तः स्थु॑र्नो॒ अरा॑तयः ॥**

---

( १ ) 'वसिष्ठौ' इति 'क' पुस्तके ।
( २ ) 'ह्यमन्यत' इति 'क' पुस्तके ।
( ३ ) 'तान्' इति 'क' पुस्तके ।
( ४ ) 'अग्निसमीपाद्देशान्तरगमनसमये सूक्तमिदं जप्यम्' इति वे० भा० ।

मा । प्र । गाम । पथः । वयम् । मा । यज्ञात् । इन्द्र । सोमिनः । मा । अन्तरिति । स्थुः । नः । अरातयः ॥१६९॥

(१) तं सुबन्धोरसुमादातुं खाण्डवादसमातिं प्रतिगच्छन्तो गौपायना वदन्ति । ऋचोऽर्थः । हे इन्द्र वयं गौपायनाः पथः समीचीनान् मार्गान् मा प्रगाम मापगच्छाम(२) । तथा सोमिनः सोमवतो यज्ञाद्(३)मा प्रगाम । नो अस्माकम् अन्तः मार्गमध्ये अरातयः शत्रवः मा स्थुः मा तिष्ठन्तु ।

भ्राता महान् सुहृदित्यर्थ आह—

भ्रात्रा समः सुहृन्नास्ति भ्रातरः समजीवयन्(४) ।
सुबन्धुं शन्तनुं(५) भ्राता नृपं कृत्वा वनं ययौ ॥१४९॥

शन्तनुं भ्रातरं देवापिर्नृपं कृत्वा वनं गत इत्यग्रे 'बृहस्पते प्रतिम्०' (ऋ० १०.९८ ) इति सूक्ते दर्शयिष्यते । अत्र तु सुबन्धोर्जीवनोपायं वदामः ।

तथा च बृहद्देवता ( ७।८९; ९६-१०१ )—

ततः सुबन्धौ पतिते भ्रातरि(६) भ्रातरस्त्रयः ।
जेपुः(७)स्वस्त्ययनं सर्वे मेति (ऋ० १०-५७) गौपायनाः सह ॥८९॥

---

( १ ) अतः पूर्वं वेदभाष्ये शाट्यायनोक्तमिदं सुबन्धोराख्यानं द्रष्टव्यं येन बृहद्देवता समनुवदति ।

( २ ) 'मा परागच्छाम असमातिगृहमेव गच्छाम' इति वे० भा० ।

( ३ ) 'असमातेर्यज्ञात्' इति वे० भा० ।

( ४ ) 'तमजीवयन्' इति 'क' पुस्तके ।

( ५ ) 'सुबन्धुः शन्तनुः' इति 'क' पुस्तके ।

( ६ ) 'गतासौ' इति मु० बृ० ।

( ७ ) 'ययुः' इति 'क' पुस्तके ।

त्रिभिः(१) सूक्तैः (ऋ० १०.५८-६०) यथान्यायं तुष्टुवुः सर्वदेवताः ।
अगस्त्यस्येति(२) (ऋ० १०-६०-६) माता च तेषां तुष्टाव तं नृपम् ॥९६॥

स्तुतोऽसमातिः संहृष्ट(३) स्तस्थौ गोपायनानभि ।
सूक्तेनाप्यस्तुवन्नग्निं(४) द्वैपदेन यथाऽत्रिषु(५) ॥ ९१ ॥

अथाग्निरब्रवीदेतानयमन्तः(६) परिध्यसुः(७) ।
सुबन्धोरस्य चैक्ष्वाकोर्मया गुप्तो हितार्थिना ॥ ९२ ॥

सुबन्धवे प्रदायासुं जीवेत्युक्त्वा(८) च पावकः ।
स्तुतो गोपायनैः प्रीतो जगाम त्रिदिवं पुनः(९) ॥ ९३ ॥

अयं मातेति (ऋ० १०-६०-७) हृष्टास्ते सुबन्धोरसुमाह्वयन्(१०) ।
शरीरमभिनिर्दिश्य(११) सुबन्धोः पतितं भुवि ॥ ९४ ॥

सूक्तशेषं जगुश्चास्य चेतसो धारणाय ते ।
लब्ध्वाऽसुं चायमित्यस्यां (१२) पृथक् पाणिभिरस्पृशन् ॥ ९५ ॥

---

(१) अस्यैव प्रपञ्चो बृहद्देवतायां (९०-९६) श्लोकषट्के कृतोऽत्र तात्पर्यरूपेण श्लोकार्धेनानेनोक्तः ।

(२) 'अगस्त्यस्य स्वसा माता' इति 'क' पुस्तके ।

(३) 'स राजा सव्रीळस्' इति मु० बृ० । 'स राजा सुप्रीतस्' इति वे० भा० ।

(४) 'नाथास्तुवन्न०' इति 'ग' पुस्तके । 'तेऽस्तुवन्' इति वे० भा० ।

(५) 'यदत्रिषु' इति 'क' पुस्तके ।

(६) 'श्लोकोऽयं 'क' पुस्तके न दृश्यते ।

(७) 'ऽब्रवीच्चैनानयं मत्तः परौ वसु' इति 'ग' पुस्तके' 'अग्निरप्यब्रवीदेतान् अयमन्तः परिध्यसुः' इति मु० बृ० ।

(८) 'प्रदायाशु जीवं त्यक्त्वा तु' इति 'क' 'ग' पुस्तकयोः ।

(९) 'प्रति' इति मु० बृ० वे० भा० च ।

(१०) 'शेषेण सुबन्धोर्जीवमा' इति 'ग' पुस्तके ।

(११) श्लोकार्धमिदं 'क' 'ग' पुस्तकयोर्न दृश्यते ।

(१२) 'लब्ध्वासुश्चायमित्युक्त्वा' इति 'ग' पुस्तके ।

(१)अत्रर्चमाह ( ऋ० १०.६०.१२ )—

अयं मे हस्तो भगवानयं मे भगवत्तरः ।
अयं मे विश्वभेषजोऽयं शिवाभिमर्शनः ॥

अयम् । मे । हस्तः । भगऽवान् । अयम् । मे । भगवत्ऽतरः । अयम् । मे । विश्वऽभेषजः । अयम् । शिवऽअभिमर्शनः ॥ १७० ॥

अनया(२) बन्ध्वादयो लब्धजीवं सुबन्धुं पाणिभिरस्पृशन् । अयं मे हस्तो भगवान् भाग्यवान् । यतो जीवन्तं(३) सुबन्धुं स्पृशति । तथा च अयं मे हस्तो भगवत्तरः अतिशयेन भगवान् । तथायं मे मम हस्तो विश्वभेषजः जीवचिकित्स्यसाधनसर्वौषधवान्(४) । (५)अयं शिवाभिमर्शनः मङ्गलस्पर्शनः(६) ।

सत्यं वदेदित्यर्थं आह—

सत्यमेव सदा ब्रूयादापत्कालेऽप्युपस्थिते ।
यस्माज्जग्राह गाः सत्यान्नाभानेदिष्ठ ईश्वरात् ॥१५०॥

---

( १ ) अत्र वेदभाष्ये ( ऋ० १०।६०।७ ) शाट्यायनब्राह्मणोक्ता कथा वर्णिता तत्रैव द्रष्टव्या तथा चानुक्रान्तम् ( का० स० ऋ० १०।६० ) '०षष्ठ्याऽगस्त्यस्य स्वसा मातैषां राजानमस्तौत् पराभिः सुबन्धोर्जीवमाह्वयंस्तमन्त्यया लब्धसंज्ञमस्पृशन्' इति ।

( २ ) 'ततो जीवितं भ्रातरं हस्तेन स्पृशन् हस्तं तुष्टाव 'अयं मे' त्यनया ऋचा' इति 'क' पुस्तके ।

( ३ ) 'यस्मात् सजीवं' इति वे० भा० ।

( ४ ) 'सर्वभेषजः' इति 'क' पुस्तके । 'तत्स्थानीयं वा' इत्यधिकं वे० भा० ।

( ५ ) 'कथंभूतो हस्तः' इति 'क' पुस्तके ।

( ६ ) 'यतो जीवन्तं स्पृशति अत इत्यर्थः' इत्यधिकं वे० भा० ।

तदर्थेयमाख्यानपूर्वा ऋक्—तत्र(१) नाभानेदिष्ठो भ्रातृभिर्भागे(२) निराकृतः पितृसमीपमागत्य किं मह्यं भागं न कल्पितवानसीत्यपृच्छत् । स च किमनेन भागेन । आंगिरसः स्वर्गार्थं सत्रमासीनाः षष्ठाहःपर्यन्तम् (३) अनुष्ठाय मुह्यन्ति (४) तानिदमित्थेति सूक्ते (ऋ० १०. ६१) संयच्छ(५)। ते स्वर्गं यन्तोऽवशिष्टाः सहस्रसंख्याका गाः दास्यन्तीति पित्रा प्रेरितोऽङ्गिरसां समीपमागत्य तेभ्यः सत्रपरिवेषणं गोसहस्रमुत्कोचं परिकल्प्य तानेते सूक्ते षष्ठेऽहन्यशंसयत् त चैतत्सूक्तसामर्थ्याद्यज्ञं परं पारं प्रापय्य (६) स्वर्जिगमिषवोऽस्मै गोसहस्रं प्रादुः । तं च तद्गोसहस्रं स्वीकुर्वाणं कश्चन कृष्णशवा नाम पुरुषः (७) उत्तरत उत्थाय भो ब्राह्मणास्मदीयं यज्ञशेषभागं मा स्वीकुर्विंत्यब्रवीत् । स चाङ्गिरसो मह्यं प्रादुरित्यब्रवीत् । तर्हि ब्राह्मण तत्र पितरमेव पृच्छ । कस्मै भागः प्राप्नुयादित्युक्तः स पितृसमीपमागत्यापृच्छत् । ( पित्रा रुद्रायायं न्याय्य इति (८) तेनोक्तः ) तवैवायं भाग इति मम पिताऽब्रवीदिति प्रत्युवाच । ततो यथार्थकथनेन तुष्टः पुरुषो नाभानेदिष्ठायैव स्वं भागं प्रादादिति (९) ।

---

( १ ) अत्र वेदभाष्ये नाभानेदिष्ठकथैतरेयब्राह्मणान्तर्गता ( ऐ० ब्रा० ५।१४ ) प्रक्रान्ता सा मूलत एवावलोकयितव्या । 'क' पुस्तके कथेयं त्रुटिता दृश्यते ।

( २ ) 'अन्तर्भागे' इति 'क' पुस्तके ।

( ३ ) 'सपर्यन्तम्' इति वे० भा०

( ४ ) 'अनुष्ठाय अनुष्ठायो पर्यनुष्ठाने ये मुह्यन्ति' इति 'क' पुस्तके।

( ५ ) 'संशयः' इति 'क' पुस्तके । अतः परं सत्रपरिवेषणपदपर्यन्तभागः त्रुटितो दृश्यते 'क' पुस्तके ।

( ६ ) 'प्रापयन्' इति 'क' पुस्तके ।

( ७ ) 'कृष्णशवासी पुरुषः' इति वे० भा० । तदिदम् ऐतरेय ब्राह्मणोक्तं 'कृष्णशवास्युत्तरतः' इत्यादिनानुमितं स्यात् ।'कृष्णशवा' इत्येव साधु ।

( ८ ) क्रोडीकृतोऽयं भागः 'क' पुस्तके न दृश्यते ।

( ९ ) अत्र वेदभाष्यम् तथाऽध्वर्युब्राह्मणेऽपि ( तै० सं० ३।१।९) 'मनुः पुत्रेभ्यो दायं व्यभजत् । स नाभानेदिष्ठं वै मानवमित्यादिनायमर्थ उक्तः । तत्सर्वमत्रानुसन्धेयम्' इति ।

तत्र ऋक्-( ऋ० १०. ६१. ८ )—

स ईं वृषा न फेनमस्यदाजौ स्मदा परैदप दभ्रचेताः ।
सरत्पदा न दक्षिणा परावृङ्न ता नु मे पृशन्यो जगृभ्रे ॥

सः । ईम् । वृषा । न । फेनम् । अस्यत् । आजौ । स्मत् । आ । परा । ऐत् । अप । दभ्रऽचेताः । सरत् । पदा । न । दक्षिणा । पराऽवृक् । न । ताः । नु । मे । पृशन्यः । जगृभ्रे ॥ १७१ ॥

अङ्गिरसां सत्रान्ते नाभानेदिष्ठो गोनिरोधायागच्छन्तं रुद्रं पुरतस्त्रिष्टुभा(१) तुष्टाव । ऋचोऽयमर्थः । स ईं सोऽयं वृषा न वर्षक इन्द्र(२) इव । स यथा नमुचिवधार्थमाजौ सङ्ग्रामे फेनमस्यत क्षिप्तवान् तद्वत् । प्रक्षेपमनाः ईश्वरः(३) इदानीं तवैवायं भागो युक्तः इति यथार्थकथनानन्तरं स्मत् अस्मत् अस्मत्तः अपपरैत अपपरागच्छति । स दभ्रचेताः अल्पमनस्कः दक्षिणा दक्षिणार्थानां गवां परावृक् परावर्जयिता सन् पदा पदानि न सरत् न सरति । अस्मदभिमुखं नागच्छति । मे मम सम्बन्धिन्यस्ताः गाः अङ्गिरोभिर्दत्ताः पृशन्यः पथिकानामभिमर्शनकुशलो(४) रुद्रः न जगृभ्रे न जगृहे(५) । यथार्थकथनानन्तरं मह्यं दत्तवानित्यर्थः । तस्माद्यः सत्यमाश्रयेत् तस्य ईश्वरो दातेत्युक्तम् । तथा—

'सत्योक्त्या बहवो याताः स्वर्गं सर्वजनादृता' इति चारुचर्या(६)।

---

( १ ) 'वास्तोष्पतिं पुरतः पश्यन्' इति वे० भा० ।
( २ ) 'वृषाऽन्नवर्षक इन्द्र इव' इति 'क' पुस्तके ।
( ३ ) वास्तोष्पतिः इति वे० भा० ।
( ४ ) 'अभिस्पर्शनकुशलः' इति वे० भा०, क-ख-पुस्तकयोरपि ।
( ५ ) 'न गृह्णातीत्येवमाशास्ते' इति वे० भा० ।
( ६ ) काव्यमालायां मुद्रितचारुचर्यापुस्तकेऽयं श्लोको न लभ्यते ।

धनं प्राप्यैव(१) दक्षिणां यज्ञे दद्यादित्याह—

धनं दक्षिणया क्षीणं यज्ञे कुर्वन्ति ये द्विजाः ।
इन्द्रसख्यं(२) हि देवत्वं भद्रमङ्गिरसामिव ॥ १५१ ॥

तत्र ऋक् ( ऋ० १०.६२.१. )—

ये यज्ञेन दक्षिणया समक्ता इन्द्रस्य सख्यममृतत्वमानश ।
तेभ्यो भद्रमङ्गिरसो वो अस्तु प्रतिगृभ्णीत मानवं सुमेधसः ॥

ये । यज्ञेन । दक्षिणया । सम्ऽअक्ताः । इन्द्रस्य । सख्यम् । अमृतऽत्वम् । आनश । तेभ्यः । भद्रम् । अङ्गिरसः । वः । अस्तु । प्रति । गृभ्णीत । मानवम् । सुऽमेधसः ॥ १७२ ॥

नाभानेदिष्ठः स्वपित्रा मनुनाभ्यनुज्ञातः सत्रमासीनानाङ्गिरसो(३) जगत्या तुष्टाव(४) ।

तथा चास्या ऋचोऽयमर्थः । हे अङ्गिरसः ये यूयं यज्ञेन यजनीयेन हविषा दक्षिणया ऋत्विग्भ्यो देयया समक्ताः सङ्गताः सत्राणि(५) कुर्वन्तः इन्द्रस्य सख्यं सखित्वं अमृतत्वं देवत्वम्

---

(१) 'प्राप्य' इति 'ग' पुस्तके ।

(२) 'इन्द्रसख्ये हि' इति 'ग' पुस्तके ।

(३) 'अङ्गिरसोऽभ्येत्य मां प्रतिगृह्णीत युष्मभ्यं यज्ञं प्रज्ञापयामीति वदन्' इति वे० भा० अधिकम् ।

(४) इतिहासस्तु इदमित्थेति ( ऋ० १०-६१ ) पूर्वसूक्ते नाभानेदिष्ठं शंसति 'नाभानेदिष्ठं वै मानवं ब्रह्मचर्यं०' ( ऐ० ब्रा० ५.१४ ) इति ब्राह्मणानुसारेण । तथा तैत्तिरीयसंहिताब्राह्मणे ( तै. सं. ३-१-९ ) मनुः पुत्रेभ्यो दायं व्यभजत् । स नाभानेदिष्ठं वै मानवं इत्यादिनायमर्थ उक्त इत्यधिकं वे० भा० ।

(५) 'ये अहीनैकाहसहस्राणि कुर्वन्तः' इति वेदभाष्ये ।

आनश(१) आनाशिध्वे । हे अङ्गिरसः तेभ्यो वः युष्मभ्यं भद्रं भजनीयं कल्याणमस्तु भवतु । हे सुमेधसः शोभनप्रज्ञाः अङ्गिरसः ते यूयं इदानीमागतं मानवं मनोः पुत्रं मां प्रतिगृभ्णीत प्रतिगृह्णीत । मयि प्रतिगृहीते यज्ञं साधु करिष्यामीति ।

पिताऽपि स्तुतिवल्लभो भवतीत्यर्थं आह—

पिता वापि स्तुतो दद्यात् पुत्रेणापि सुसम्पदः ।
(२) नाभानेदिष्ठपुत्राय सत्रे प्रीतो मनुर्ददौ ॥ १५२ ॥

तत्र ऋक् ( ऋ० १०.६२.११. )—

सहस्रदा ग्रामणीर्मा रिषन्मनुः सूर्येणास्य यतमानैतु दक्षिणा ।
सावर्णेर्देवाः प्रतिरन्त्वायुर्यस्मिन्नश्रान्ता असनाम वाजम् ॥

सहस्रऽदाः । ग्रामऽनीः । मा । रिषत् । मनुः । सूर्येण । अस्य । यतमाना । एतु । दक्षिणा । सावर्णेः । देवाः । प्र । तिरन्तु । आयुः । यस्मिन् । अश्रान्ताः । असनाम । वाजम् ॥ १७३ ॥

प्र नूनं जायतामिति ( ऋ० १०.६२.८–११ ) चतसृभिर्ऋग्भिः स्तुतः प्रीतः पिता तस्मै नाभानेदिष्ठाय पुत्राय शोभनानि धनानि ददौ दत्तवान् । ततः नाभानेदिष्ठो मनुं स्वपितरं दातारं तुष्टाव त्रिष्टुभा ।

ऋचोऽयमर्थः—सहस्रदाः गवादीनां सहस्रस्य दाता ग्रामणीः ग्रामाणां नेता(३) एवंविधो मनुः मा रिषत् न कैश्चिदपि रिष्टो

---

( १ ) अश्नोतेर्लिटिमध्यमे व्यत्ययेन बहुवचनत्वम् । 'अश्नोतेश्च' ( पा० ७।४।७२ ) नुडागमः । यद्वृत्तयोगाद् ( पा० ८।१।६६ ) अनिघातः ।

( २ ) 'स्तुतिकर्त्रे धनं नाभानेदिष्ठाय मनुर्ददौ' इति 'ग' पुस्तके ।

( ३ ) 'कर्ता जनपदानां' इति वे० भा० ।

हिंसितो भवतु(१) । तथास्य मनोः यतमाना गच्छन्ती दक्षिणा सूर्येण सहैतु सङ्गच्छताम् । त्रिषु लोकेषु प्रसिद्धा भवत्वित्यर्थः । तथास्य सावर्णेः सवर्णापुत्रस्य मनोः देवाः इन्द्रादयः आयुः जीवनं प्रतिरन्तु वर्धयन्तु । यस्मिन्मनौ मत्पितरि अश्रान्ताः कर्मस्वनलसाः कर्म कुर्वन्तो वयं वाजं गोलक्षणमन्नम् । अन्धः वाजः इति तन्नाम ( निघण्टुः २।७ ) । असनाम संभजेमहि । नाभानेदिष्ठोऽहमलभे इत्याशास्ते ।

स्त्रीजितो न भवेदित्यर्थ आह—

न स्त्रीजितः प्रमूढः स्याद् गाढरागवशं गतः ।
राजोर्वश्या जितो मूढो दुःखमाप पुरूरवाः ॥ १५३ ॥

(२)तथा च बृहद्देवता ( ७।१४७-१९३. )–

पुरूरवसि राजर्षावप्सरा उर्वशी(३) पुरा ।
न्यवसत् समयं(४) कृत्वा तस्मिन् धर्मं चचार ह ॥ १४७ ॥
तया तस्य च संवासमनिच्छन्(५) पाकशासनः ।
पैतामहं चानुरागं इन्द्रवच्चापि तस्य तु ॥ १४८ ॥
स तयोर्विप्रयोगार्थं(६) पार्श्वस्थं वज्रमब्रवीत् ।
प्रीतिं भिन्द्धि तयोर्वज्र मम चेदिच्छसि प्रियम् ॥ १४९ ॥
तथेत्युक्त्वा तयोर्वज्रः प्रीतिं बिभेद मायया(७) ।

---

( १ ) 'यद्वा कर्मनेतॄनस्मान् मा हिनस्तु किन्तु धनादिदानेन पूजयतु' इति वेदभाष्ये ।
( २ ) इयं कथा 'क' पुस्तके नास्ति ।
( ३ ) 'अप्सरास्तूर्वशी' इति मु० बृ० ।
( ४ ) 'संविदं' इति मु० बृ० ।
( ५ ) '०मसूयन्' इति मु० बृ० ।
( ७ ) 'तयोस्तु वियोगार्थं' इति मु० बृ० ।
( ८ ) 'तयोः प्रीतिं वज्रोऽभिनत्स्वमायया इति मु० बृ० ।

ततस्तया विहीनः स(१) चचारोन्मत्तवन्नृपः ॥ १९० ॥
मानःसरासि(२) सोऽपश्यदभिरूपामथोर्वशीम् (३) ।
(४)सखीभिश्चारुरूपाभिः वृता चतसृभिस्ततः ॥ १९१ ॥
तामुपाह्वयत प्रीत्या(५) दुःखात् सा त्वब्रवीन्नृपम् ।
अप्राप्याहं त्वयाद्येह(६) स्वर्गे प्राप्स्यसि मां नृप ॥ १९२ ॥

तथा षड्गुरुशिष्यः स्वीयवेदार्थदीपिकायां—

(७)ऐलोर्वशीतिहासोऽत्र वैशद्यार्थं प्रवर्ण्यते ।
मित्रश्च वरुणश्चोभौ दीक्षितौ प्रेक्ष्य चोर्वशीम् ॥ १ ॥
चलचित्तौ ततश्चैतौ कुम्भे निहितशुक्रकौ(८) ।
तां शप्तवन्तौ मनुजभोग्या भूमौ भवेति तौ(९) ॥ २ ॥
अत्रान्तर इलो राजा मनुपुत्रैश्च(१०) संयुतः ।
मृगयां संचरन् साश्वो देव्याः क्रीडं(११) विवेश ह ॥ ३ ॥
यत्र देवं गिरिसुता सर्वैर्भावैरतोषयत् ।
अत्राविशन्(१२)पुमान् स्त्री स्यादित्युक्त्वा तत्र चाविशत् ॥ ४ ॥

---

(१) 'विहीनस्तु' मु० बृ० ।
(२) 'चरन्सरसि' मु० बृ० ।
(३) '०मिवोर्वशीम्' इति मु० बृ० ।
(४) 'सखीभिरभिरूपाभिः पञ्चभिः पार्श्वतो वृता' इति मु० बृ० ।
(५) 'तामाह पुनरेहीति' इति मु० बृ० ।
(६) 'नृपेहाद्य' इति 'क' पुस्तके ।
(७) वेदभाष्येऽपीमे श्लोकाः सर्वानुक्रमणीवेदार्थदीपिकात उद्धृता दृश्यन्ते ।
(८) 'रेतः सिषिचतुः सद्यस्तत्कुम्भे न्यदधुस्तदा' इति वे० भा० । 'रेतश्चस्कन्द तत्कुम्भे ह्यपतद् वासतीवरे' इति 'क' पुस्तके ।
(९) 'मनुष्यभोग्या भूम्यां वसेतिह' इति वे० दी० ।
(१०) 'मनोः पुत्रैश्च' इति वे० भा० 'क' पुस्तके च ।
(११) 'देवीक्रीडं' इति वे० भा० 'क' पुस्तके च ।
(१२) 'अत्रावेशी' इति 'क' पुस्तके ।

स्त्री भूत्वा व्रीडितः सोऽगाच्छरणं शिवमञ्जसा ।
इयं प्रसाद्यतां राजन्नित्युक्तः शम्भुना नृपः ॥ ५ ॥
जगाम शरणं देवीमात्मनः पुंस्त्वसिद्धये ।
अकरोत् सा नृपं देवी षण्मासात् प्राप्तपुंस्त्वकम् ॥ ६ ॥
ततः कदाचित् स्त्रीकाले बुधः सौन्दर्यमोहितः ।
अप्सरोभ्यो विशिष्टां तां चकमे नृपयोषितम्(१) ॥ ७ ॥
तदेलायां(२) सोमपुत्राज्जातो राजा पुरूरवाः ।
उर्वशी चकमे तं तु प्रतिष्ठानपुरे स्थिता(३) ॥ ८ ॥
तल्पादन्यत्र नग्नं(४) त्वां दृष्ट्वा यामि यथागतम् ।
सुतावुरणकौ त्वं च समीपे कुरु मे द्रुतम् (५) ॥ ९ ॥
इति सा समयं कृत्वा रमयामास तं नृपम् ।
चतुरब्दे गते रात्रौ देवैरुरणकद्वयम् ॥ १० ॥
हृतं तस्य ध्वनिं श्रुत्वा नग्न एव स भूपतिः ।
उत्थाय जित्वा तावागच्छेत्येवंजल्पको(६) नृपः ॥ ११ ॥
विद्युता दर्शितोऽस्यै स (७) नग्न एव पुरूरवाः ।
अथ सा नष्टसमया(८) ह्युर्वशी तु दिवं ययौ ॥ १२ ॥

---

(१) 'इलां सङ्गतवान् मुदा' इति वे० भा०, 'क' पुस्तके च ।

(२) 'तत्रेलायां' इति वे० दी० ।

(३) 'तमुर्वशी तु चकमे प्रतिष्ठानपुरे स्थितम्' इति वे० भा० वे० दी० च ।

(४) 'तदान्यत्र च' इति 'क' पुस्तके ।

(५) 'तत्र समीपे कुरु मे दृढम्' इति वे० दी० ।

(६) 'जल्पकोऽन्यकः' इति 'क' पुस्तके । 'जित्वाऽऽगच्छेयमित्येवं तल्पतोऽन्यत्रा' इति वे० दी० ।

(७) 'दर्शितोऽथास्यै' इति वे० दी० ।

(८) 'दृष्टसमया' इति वे० भा० ।

तत उन्मत्तवद्राजा दिदृक्षुस्तामितस्ततः ।

कुर्वन्नन्वेषणं तीरे सरसो मानसस्य ताम् ॥ १३ ॥

विहरन्तीम्(१) अप्सरोभिः सहापश्यत् पुरूरवाः ।

पुनः स चकमे भोक्तुमुर्वशीं पूर्ववन्नृपः(२) ॥ १४ ॥

सा स्वशापस्य युक्तत्वात्प्रत्याचष्टे(३) व्रजेति तम् ।

(४)इत्युर्वश्यैलसंवादमिममेषोऽप्यसूचयत् (५) ॥ १५ ॥

तत्र ऋक् ( ऋ० १०. ९५. १४; )—

**सुदेवो अद्य प्रपतेदनावृत्परावतं परमां गन्तवा उं ।**
**अधा शयीत निर्ऋतेरुपस्थेऽधैनं वृका रभसासो अद्युः ॥**

**सुऽदेवः । अद्य । प्रऽपतेत् । अनावृत् । पराऽवतम् । परमाम् । गन्तवै । ऊँ इति । अध । शयीत । निःऽऋतेः । उपऽस्थे । अध । एनम् । वृकाः । रभसासः । अद्युः ॥ १७४ ॥**

तत्र पुरूरवास्त्रिष्टुभा उर्वशीं परिदूनो(६) वदति । सुदेवः त्वया सह सुक्रीडः पतिरद्य प्रपतेत् अत्रैव प्रपततु । अथवा अनावृत

(१) 'विचरन्तीम्' इति वे० दी० ।

(२) ०'शीं च पुरूरवाः' इति वे० भा० 'क' पुस्तके च ।

(३) 'साभ्रं साऽपश्यदुक्त्वा च प्रत्याचष्टे' इति वे० भा० ।

(४) तामुपाह्वयत प्रीत्या दुःखात् सात्वब्रवीन्नृपम् ।
अप्राप्याहं नृपेहाद्य स्वर्गे प्राप्स्यसि मां नृप ॥
इति द्वौ बृहद्देवतापादौ 'क' पुस्तकेऽत्र दृश्येते ।

(५) इयमेव कथाऽस्य सूक्तस्यर्चो व्याख्यानक्रमेण वाजसनेयसंहिता ब्राह्मणे ( श० ब्रा० ११।५।१।१-६ ) वर्णिता वेदभाष्येऽपि सायणाचार्यैर्दत्ता जिज्ञासुभिरवलोकयितव्या । सोऽत्र विस्तरभयान्न वर्ण्यते ।

(६) 'प्रति दीनो वदति' इति 'क' पुस्तके ।

अनावृतः सन् परमां परावतं दूरादपि दूरदेशं गन्तवै गन्तुं महाप्रस्थानगमनं (१) कुर्यात्। अथाथवा यत्र कुत्रापि गन्तुमसमर्थः (२) सन् निर्ऋतेः पृथिव्या उपस्थे शयीत शयनं कुर्यात्। यद्वा निर्ऋतिः पापदेवता तस्या उपस्थे उत्सङ्गे सन्निधौ म्रियतामित्यर्थः । अथ अथवैनं वृका अरण्यश्वानो रभसासः वेगवन्तः अद्युः (३)भक्षयन्तु ।

उत्तरयोर्वशी पुरूरवसं त्रिष्टुभाऽऽह—

तत्र ऋक् ( ऋ० १०. ९५. १५ )—

पुरूरवो मा मृथा मा प्र पप्तो मा त्वा वृकासो अशिवास उ क्षन्।
न वै स्त्रैणानि सख्यानि सन्ति सालावृकाणां हृदयान्येता ॥

पुरूरवः । मा । मृथाः । मा । प्र । पप्तः । मा । त्वा । वृकासः । अशिवासः । ऊँ इति । क्षन् । न । वै । स्त्रैणानि । सख्यानि । सन्ति । सालावृकाणाम् । हृदयानि । एता ॥ १७५ ॥

अयमर्थः । हे पुरूरवः त्वं मा मृथाः(४) मृतिं मा प्राप्नुहि । तथा मा प्रपप्तः(५) अत्रैव प्रपतनं मा कार्षीः । तथा त्वा त्वां अशिवासः

---

( १ ) 'महास्थानप्रस्थानम्' इति 'क' पुस्तके ।

( २ ) 'समर्थः' इति वे० भा० ।

( ३ ) अत्र वाजसनेयकम् ( श० ब्रा० ११।५।१।८ )—'सुदेवोऽद्योद्वा बीध्नीत प्र वा पतेत्तदेनं वृकाः श्वानो वाद्युरिति हैव तदुवाचेति'। यास्कोऽपि ( नि० ७।३ )-अथापि परिदेवना कस्माच्चिद्भावात् 'सुदेवो अद्य प्रपतेदनावृत्' इति । अस्या ऋचो व्याख्यानं दुर्गाचार्यकृतनिरुक्तवृत्तौ द्रष्टव्यम् ।

( ४ ) म्रियतेर्लुङि थासि 'ह्रस्वादङ्गात्' ( पा० ८।२।२७ ) इति सिचो लोपः ।

( ५ ) पातेर्लुङि लृदित्वात् 'पुषादिद्युताद्य्लृदित०' ( पा० ३।१।५५ ) इत्यादिना च्लेरङ् । 'पतः पुम्' (पा० ७।४।१९) इति पुम् ।

अशुभाः वृकासः वृकाः मा उ क्षन् (१)। उ एवार्थः। मैवाभ्यवहारयन्तु। किमित्येवम् अस्मदुपरि आग्रहं करोषि। मा कार्षीरित्यर्थः। अथ स्त्रीस्नेहस्यासारतामाह। स्त्रैणानि स्त्रीणां कृतानि सख्यानि सखित्वानि न वै सन्ति न सन्ति खलु। तत्कारणमाह–एता एतानि सख्यानि सालावृकाणां हृदयानि यथा वत्सादीनां विश्वासापन्नानां घातुकानि तद्वत् (२)।

शन्तनुं भ्रातरं नृपं कृत्वा वनं ययाविति पूर्वमुक्तं ( श्लो० १४९ )

तदुदाहरणम्:–

भ्रात्रा समः सुहृन्नास्ति भ्रातरस्तमजीवयन्।

सुबन्धुं शन्तनुं भ्राता नृपं कृत्वा वनं ययौ॥

तत्र तावत् सुबन्धोर्जीवनोपायस्तु प्राग् ( ऋ० १०.५७-६० ) चतुर्षु सूक्तेषु प्रतिपादितः 'भ्राता महान् सुहृद्' इत्यवतरणिकायाम्। अधुना यथा देवापिः शन्तनुं भ्रातरं नृपं कृत्वा वनं गतस्तथोच्यते। अत्रेतिहासं यास्क उक्तवान् ( नि० २।१० )–"देवापिश्चार्ष्टिषेणः शन्तनुश्च कौरव्यौ भ्रातरौ बभूवतुः" इत्युपक्रम्य (३)

---

( १ ) अदेर्लुङि 'लुङ्सनोर्घस्लृ' ( पा० २।४।३७ ) इति घस्लादेशः। 'मन्त्रे घसह्वर०' ( पा० २।४।८० ) इत्यादिना च्लेर्लुक्। 'गमहनजन' ( पा० ६।४।९८ ) इत्यादिनोपधालोपः। 'शासिवसिघसीनां च' ( पा० ८।३।६० ) इति षत्वम्। 'खरि च' ( पा० ८।४।५५ ) इति चर्त्वम्। बाहुलकादडभावः। इति वे० भा०।

( २ ) अत्र वाजसनेयकम् ( श० ब्रा० ११।५।१।९ )–'मैतदादृथा न वै स्त्रैणꣳसख्यमस्ति पुनर्गृहानेहीति हैवैनं तदुवाचेति'।

'शालावृकाः कपिक्रोष्टुश्वानः' इत्यमरः ( अ० को० ३।३।१२ )

( ३ ) इयं कथा निरुक्तग्रन्थादेवावलोकयितव्या।

तदर्थेयमृक् ( ऋ० १.०.९८.५ )–

आर्ष्टिषेणो होत्रमृषिर्निषीदन् देवापिर्देवसुमतिं चिकित्वान्
स उत्तरस्मादधरं समुद्रमपो दिव्या असृजद्वर्ष्या अभि ॥

आर्ष्टिषेणः । होत्रम् । ऋषिः । निऽसीदन् । देवऽआपिः । देवऽसुमतिम् । चिकित्वान् । सः । उत्ऽतरस्मात् । अधरम् । समुद्रम् । अपः । दिव्याः । असृजत् । वर्ष्याः । अभि ॥१७६॥

तत्र बृहद्देवता ( ७.१५५-१५७ तथा ८।१-६ )–

(१)आर्ष्टिषेणस्तु देवापिः कौरव्यश्चैव शन्तनुः ।
भ्रातरौ कुरुषु ह्येतौ राजपुत्रौ बभूवतुः ॥१५५॥
ज्येष्ठस्तयोस्तु देवापिः कनीयांश्चैव शन्तनुः ।
त्वग्दोषी राजपुत्रस्तु ऋष्टिषेणसुतोऽभवत् ॥१५६॥
राज्येन छन्दयामासुः प्रजाः स्वर्गं गते गुरौ(२) ।
स मुहूर्तमिव ध्यात्वा प्रजास्ताः प्रत्यभाषत ॥१५७॥
न राज्यमहमर्हामि नृपतिर्वोऽस्तु शन्तनुः ।
( तथेत्युक्त्वाभ्यसिञ्चंस्ताः प्रजा राज्याय शन्तनुम् ॥१॥
ततोऽभिषिक्ते कौरव्ये वनं देवापिराविशत् ) ।
न ववर्षाऽथ पर्जन्यो राज्ये द्वादश वै समाः ॥२॥
ततोऽभ्यगच्छद्देवापिं प्रजाभिः सह शन्तनुः ।
प्रसादयामास चैनं तस्मिन् धर्मव्यतिक्रमे ॥३॥

---

( १ ) 'क' पुस्तकेऽविद्यमानो भागोऽत्र क्रोडीकृतः ।

( २ ) 'पर्यवन्दन् प्रजास्तं तु ( राज्ये ? ) नवगुरौ मृते' इति 'क' पुस्तके ।

शिशिक्ष चैनं राज्येन (१) प्रजाभिः सहितस्तदा ।
तमुवाचाथ देवापिः प्रह्वं तं(२) प्राञ्जलिस्थितम् ॥४॥
न राज्यमहमर्हामि त्वग्दोषोपहतेन्द्रियः ।
याजयिष्यामि ते राजन् वृष्टिकामेज्यया स्वयम् ॥५॥
ततस्तं तु पुरोऽधत्त चार्त्विज्याय स शन्तनुः(३) ।
स चास्य चक्रे कर्माणि वार्षिकाणि यथाविधि(४) ॥६॥
बृहस्पते प्रती त्यृग्भिरीजे चैव बृहस्पतिम् ॥

तथा ऋग्विधानम् (श्लो० ५९७)—

बृहस्पते प्रतीत्येति वृष्टिकामः प्रयोजयेत् ।
पर्जन्यं तु नमस्कृत्वा वृष्टिं विन्दति शोभनाम् ॥

'बृहस्पते द्वादशार्ष्टिषेणो देवापिर्वृष्टिकामो देवांस्तुष्टाव' इत्यनुक्रमण्याम् ( का० स० ऋ० १०।९८ ) ।

ऋचोऽयमर्थः । आर्ष्टिषेणः ऋष्टिषेणस्य पुत्रो देवापिः (५) देवसुमतिं देवानां कल्याणीं मतिं स्तुतिं चिकित्वान् ज्ञातवान् जानन् वा होत्रं होतृकर्म कर्तुं निषीदन् निषण्णो भवति । स उत्तरस्माद् उपरि वर्तमानादन्तरिक्षात् समुद्रात् । समुद्रः अध्वरः इति तन्नाम ( निघण्टु १-३ )। अधरम् अधो वर्तमानं पार्थिवं समुद्रं दिव्याः दिवि भवाः अपः वर्ष्याः वर्षाभवाश्च अभ्यसृजत् आभिमुख्येन तं पार्थिवं समुद्रं प्रति ससर्ज (६) ।

---

( १ ) 'शिशिक्ष राज्यं चैवैनं' इति 'क' पुस्तके ।
( २ ) 'तु' इति मु० बृ० पुस्तके ।
( ३ ) 'कौरवः' इति 'क' पुस्तके ।
( ४ ) 'चकार सोऽस्य कर्माणि यथाविधि समाहितः' इति 'क' पुस्तके ।
( ५ ) 'ऋषिः' इति वे० भा० ।
( ६ ) अत्र 'आर्ष्टिषेणः ऋष्टिषेणस्य पुत्रः' ( नि० २।११ ) इत्यादि निरुक्तं द्रष्टव्यम् ।

सत्त्ववान् जयतीत्यर्थं आह—

**सदा सत्त्वपरैर्भाव्यं सद्भिर्विजयकाङ्क्षिभिः ।**
**द्रुघणेनापि गा जिग्ये मुद्गलः सत्त्ववान् रणे(१) ॥१५४॥**

अत्राख्यानम्(२)—

मुद्गलस्य हृता गावश्चोरैस्त्यक्त्वा जरद्गवम् ।
स शिष्टं(३) शकटे कृत्वा गत्वैक ऋजुराहवम्(४) ॥ १ ॥
द्रुघणं युयुजेऽन्यत्र(५) चौरमार्गानुसारकः(६) ।
द्रुघणं चाग्रतः क्षिप्त्वा(७) चौरेभ्यो जगृहे स्वगाः(८) ॥ २ ॥

तत्र ऋक् ( ऋ० १०.१०२.९; )—

**इमं तं पश्य वृषभस्य युञ्जं काष्ठाया मध्ये द्रुघणं शयानम् ।**
**येन जिगाय शतवत् सहस्रं गवां मुद्गलः पृतनाज्येषु ॥**

**इमम् । तम् । पश्य । वृषभस्य । युञ्जम् । काष्ठायाः । मध्ये । द्रुऽघनम् । शयानम् । येन । जिगाय । शतऽवत् । सहस्रम् । गवाम् । मुद्गलः । पृतनाऽज्येषु ॥ १७७ ॥**

---

(१) 'सङ्ग्रामे मुद्गलस्तद्वान् विजिग्ये द्रुघणेन गाः' इति 'क' पुस्तके।

(२) आख्यानमिदं षड्गुरुशिष्येण वेदार्थदीपिकायामुदाहृतं दृश्यते ।

(३) 'शिल्पं' इति 'ग' पुस्तके ।

(४) 'युक्त्वैकत्र जरद्गवम्' इति वे० दी० ।

(५) 'ह्यत्र' इति 'ग' पुस्तके ।

(६) 'चौरमार्गानुसारतः' इति वे० दी० ।

(७) 'कृत्वा' इति वे० दी० ।

(८) अत्र निरुक्तम् ( नि० ९।२५ )—"द्रुघणो द्रुममयो घनः । तत्रेतिहासमाचक्षते मुद्गलो भार्म्यश्व ऋषिर्वृषभं च द्रुघणञ्च युक्त्वा सङ्ग्रामे व्यवहृत्याजिं जिगाय" इति ।

कश्चन सखायं सेनादिसहायाभावेन जयविषये उपहासं कुर्वाणं प्रति ब्रवीति(१)। मुद्गलस्त्रिष्टुभा द्रुघणं तुष्टाव।

ऋचोऽयमर्थः—हे सखे तमिमं द्रुघणं पश्य। कीदृशम्। युञ्जम्। युज्यते इति युक्तम् (२)। पुनः कीदृशम्। वृषभस्य सखायं सखिभूतम्। वृषभो यावन्तमर्थं साधयति तावन्तमेव साधयन्तमित्यर्थः। पुनः कीदृशम्। काष्ठाया मध्ये शयानम्। 'आज्यन्तोऽपि काष्ठोच्यते। क्रान्त्वा स्थितो भवति' इति निरुक्तम् (नि० २।१५) आज्यन्तस्य। सङ्ग्रामस्य मध्ये शयानमित्यर्थः। हन्तव्यान् सर्वान् हत्वा सुखेन स्वपन्तमित्यर्थः। निर्व्यापारेण (३) वर्तमानम् ईदृशं द्रुममयं घनं पश्येत्यर्थः। येन द्रुघणेन शतवत् शतोपेतं गवां सहस्रं पृतनाज्येषु प्रधने सङ्ग्रामे वा जिगाय(४)। सत्त्ववानहमजैषम् तमिमं पश्येति समन्वयः(५)।

यो दाता स मृतोऽप्यमृत इत्यर्थं आह—

मृतो योऽप्यमृतो रक्षेद् दक्षिणया गलद्धनम्।
दक्षिणादं मृतं भोजं दिव्यस्तुष्टाव चामृतम्॥ १५५॥

अस्मिन्नर्थे ऋक् (ऋ० १०.१०७.८)—

न भोजा मम्रुर्न न्यर्थमीयुर्न रिष्यन्ति न व्यथन्ते ह भोजाः।
इदं यद्विश्वं भुवनं स्वश्चैतत्सर्वं दक्षिणैभ्यो ददाति॥

---

(१) 'अत्र वेदभाष्ये तु 'राजा द्रुघणेन वृषभेण चाजिं जिगायेत्युक्तत्वात् पूर्वं वृषभो वर्णितः। अत्र द्रुघणो वर्ण्यते' इति कथितम्।

(२) 'युजेरसमासे (पा० ७।१।७१) इति नुम्।

(३) 'अतिव्यापारत्वेन' इति 'क' पुस्तके। 'निर्व्यापारत्वेन' इति वे० भा०।

(४) जिगाय—जयतेर्लिट्। सन्लिटोर्जेः (पा० ७।३.५७) इत्यभ्यासादुत्तरस्य कुत्वम्। मिपो णल् (पा० ३।४।८२)।

(५) अत्र निरुक्ते (नि० ९।२४)—"इमं तं पश्य" इत्यादि ऋचो व्याख्यानं द्रष्टव्यम्।

न । भोजाः । मम्रुः । न । निऽअर्थम् । ईयुः । न । रिष्यन्ति । न । व्यथन्ते । ह । भोजाः । इदम् । यत् । विश्वम् । भुवनम् । स्वः १ रिति स्वः । च । एतत् । सर्वम् । दाक्षिणा । एभ्यः । ददाति ॥ १७८ ॥

दिव्य ऋषिर्दातॄन् भोजांस्त्रिष्टुभा तुष्टाव(१)।

ऋचोऽयमर्थः । भोजा भोजयितारः ( धनादिदानेन ) दातारः । 'भोजं दातारमब्रवम्' ( ऋ० ८।३।२४ ) इत्युक्तत्वात्।

न मम्रुः मृता अपि कीर्त्यादिभिर्न म्रियन्ते(२)। अत एव न्यर्थम्(३) निकृष्टोऽर्थो न्यर्थः । निकृष्टां गतिं नेयुः(४) न प्राप्नुवन्ति । तथा

---

( १ ) तत्रानुक्रमणी ( का० स० ऋ० १०।१०७ ) आविर्दिव्यो दक्षिणा वा प्राजापत्या दक्षिणां तद्दातॄन्वाऽस्तौच्चतुर्थी जगती' इति ।

अत्रानुक्रमणीवृत्तिः—'दिव्यो नामाङ्गिरस ऋषिः । दक्षिणा नाम प्रजापतेः सुता वर्षिका । दक्षिणां यजमानैर्ऋत्विग्भ्यो दीयमानां तद्दातॄन् यजमानान् वाऽस्तौद्याजकादित्वात् । 'तृजकाभ्यां कर्तरि' ( पा० २।२।१५ ) इति न षष्ठीसमासप्रतिषेधः' इति ।

तत्र बृहद्देवता –( अ० ८ श्लो० २२-२३; )

सूक्तेन तु परेणात्र स्वयमाविरभूदिति ।
आत्मानमेव तुष्टाव प्राजापत्याऽथ दक्षिणा ॥ २२ ॥
दातॄनत्र स्तुतानेके दक्षिणानां वदन्ति तु ।
दातृत्वाद्दक्षिणानाञ्च भोजाश्चतसृभिः स्तुताः ॥ २३ ॥

( २ ) 'देवत्वं भजन्त इत्यर्थः' इति वे० भा० ।

( ३ ) ऋगस्तौ–उषिकुषिगार्तिभ्यः स्थन् ( उ० १६१ ) इति स्थन् प्रत्ययः । थाथघञ्क्ता० ( पा० ६।२।१४४ ) इत्यादिना समास थाथादिस्वरोऽन्तोदात्तः ।

( ४ ) इण् गतौ—लिटि 'दीर्घ इणः किति' ( पा० ७।४।६९ ) इति दीर्घः ।

न रिष्यन्ति कैश्चिदपि हिंसिता न भवन्ति। रुष रिष हिंसायाम्(१)। अत एव भोजाः दातारः न व्यथन्ते(२) अरिभिरपि न पीड्यन्ते (ह प्रसिद्धौ) किञ्च इदं परिदृश्यमानं विश्वं सर्वं यद् भुवनं यद् भूतजातमस्ति स्वश्च स्वर्गलोकश्च एतत् सर्वं दक्षिणा एभ्यो दातृभ्यो दानप्रभावाद् ददाति प्रयच्छति। अत एव मृता अपि अमृता भवन्तीत्यर्थः।

(३)आत्मनाम गुरोर्नाम नामातिकृपणस्य च।
श्रेयस्कामो न गृह्णीयाज्ज्येष्ठापत्यकलत्रयोः॥

असद्भिर्मैत्रीं न कुर्यादित्यर्थ आह—

वक्रैः क्रूरतरैर्लुब्धैर्न कुर्यात् प्रीतिसेवनम्।
असुरैः पणिभिर्नैच्छन् मैत्रीं (४)हि सरमा पुरा॥१५६॥

तत्राख्यानम्—इन्द्रपुरोहितस्य बृहस्पतेर्गोषु वलनाम्नोऽसुरस्य भटैः पणिनामकैरसुरैरपहृत्य गुहायां निहितासु सतीषु बृहस्पतिप्रेरितेनेन्द्रेण गवान्वेषणाय सरमा नाम देवशुनी प्रेषिता। सा च(५) महतीं नदीं शतयोजनविस्तीर्णामुत्तीर्य वलपुरं प्राप्य गुप्तस्थाने निहिता गा ददर्श। तस्मिन्नन्तरे पणयः इमं वृत्तान्तमवगच्छन्तः एनां मैत्रीं कर्तुं (६) संवादमकुर्वत (७) इति।

---

(१) 'कर्मणि व्यत्ययेन परस्मैपदम्' इति वे० भा०।

(२) 'परस्परं न भीता न बाधिता वा भवन्ति' इति वे० भा०।

(३) श्लोकोऽयं 'क' पुस्तक एव दृश्यते।

(४) 'पाणिभिर्नैदूशैरैच्छन्०' इति 'क' पुस्तके।

(५) 'सा च रसां' इति 'ग' पुस्तके।

(६) 'मित्रीकर्तुं' इति वे० भा०। 'मित्रं कर्तुं' इति 'ग' पुस्तके।

(७) बृहद्देवतोक्तोऽयमितिहासः प्रागेव इन्द्रस्याङ्गिरसां चेति (पृ० ४१) ऋचो व्याख्यानसमये निरूपितः। स द्रष्टव्यः।

तत्र ऋक् ( ऋ० १०. १०८. ९ )—

एवा च त्वं सरम आजगन्थ प्रबाधिता सहसा दैव्येन ।
स्वसारं त्वा कृणवै मा पुनर्गा अप ते गवां सुभगे भजाम ॥

एव । च । त्वम् । सरमे । आऽजगन्थ । प्रऽबाधिता । सहसा । दैव्येन । स्वसारम् । त्वा । कृणवै । मा । पुनः । गाः । अप । ते । गवाम् । सुऽभगे । भजाम ॥ १७९ ॥

पणयस्तां मैत्रीमिच्छन्तः आहुस्त्रिष्टुभा । अयमर्थः । हे सरमे त्वं दैव्येन देवसम्बन्धिना सहसा बलेन प्रबाधिता यथा तथा वा बलपुरं प्राप्य तत्र स्थिता गा दृष्ट्वा पुनरागच्छेति तेन प्रपीडिता त्वं एवा च एवं चेत् । 'च' शब्दश्चेदर्थे । आजगन्थ(१) आगतवती असि । तर्हि त्वा त्वाम् अस्माकं गणे स्वसारं भगिनीं कृणवै करवै । ( समूहापेक्षयैकवचनम् ) त्वं तु मा पुनर्गाः । इन्द्रादीन् मा गच्छ । अपि तर्हि हे सुभगे सौभाग्यवति सरमे । देवाश्रयत्वात्सौभाग्यम् । ते त्वदीयानां गवां समूहं पर्वतादपगमय्य भजाम त्वं च वयं च विभजाम । विभागं करवामेत्यर्थः ।

अनया त्रिष्टुभा मैत्रीमनिच्छन्ती सरमा पणीन् प्रत्याह—

तत्र ऋक् ( ऋ० १०.१०८.१० )—

नाहं वेद भ्रातृत्वं नो स्वसृत्वमिन्द्रो विदुरङ्गिरसश्च घोराः ।
गोकामा मे अच्छदयन् यदायमपात इत पणयो वरीयः ॥

---

( १ ) 'निपातैर्यद्यदिहन्त०' ( पा० ८।१।३० ) इति तिङो निघाताभावः । गमेर्लिटि थलि रूपम् । 'सह सुपा' ( पा० २।१।४ ) इत्यत्र सहेति योगविभागात् समासः । 'तिङि चोदात्तवति' ( पा० ८।१।७१ ) इति गतिरनुदात्तः । 'लिति' ( पा० ६।१।१९३ ) इति लित्स्वरः प्रत्ययात्पूर्व उदात्तः ।

न । अहम् । वेद । भ्रातृऽत्वम् । नो इति । स्वसृऽत्वम् । इन्द्रः । विदुः । अङ्गिरसः । च । घोराः । गोऽकामाः । मे । अच्छदयन् । यत् । आयम् । अप । अतः । इत । पणयः । वरीयः ॥१८०॥

हे पणयः अहं भ्रातृत्वं न वेद न जानामि । तथा स्वसृत्वं च नो वेद नैव जानामि । तर्हि के जानन्ति तानाह । इन्द्रः घोराः शत्रूणां भयङ्कराः अङ्गिरसश्च विदुः जानन्ति । किञ्च अहं यद्यदा आयम् अस्मात् स्थानाद्गत्वा इन्द्रादीन् प्राप्नुयां तदा मे मदीयाः गोकामाः युष्माभिरपहृताः गाः कामयमानाः इन्द्रादयः अच्छदयन् युष्मदीयं स्थानमाच्छादयन्ति । अतः कारणाद् हे पणयः यूयं गवां वृन्दं परित्यज्य वरीयः उरुतरम् अतिदूरं देशमपेत अपगच्छत । वरीयः उरुशब्दादायसुनि 'प्रियस्थिरस्फिरोरु०' (पा० ६।४।१५७) इत्यादिना वरादेशः ।

तथा–'आरम्भगुर्वी क्षयिणी क्रमेण(१)' इति दुर्जनप्रीतिसेवनं निषिद्धम् ।

सत्सङ्गं स्तुवन्नाह–

यस्य स्यात् सङ्गतं(२)सद्भिर्भवेत् सोऽल्पोऽपि(३)भाग्यवान्।
देवशुनीन्द्रसङ्गत्या जित्वाऽभूत् सुभगा पणीन् ॥१५७॥

परि दिवो अन्तान्सुभगे पतन्ती ( ऋ० १०. १०८. ५ )

अप ते गवां सुभगे भजाम ( ऋ० १०. १०८. ९ )

---

(१) भर्तृहरेर्नीतिशतकस्थोऽयं श्लोकस्त्वेवम्—
आरम्भगुर्वी क्षयिणी क्रमेण लघ्वी पुरा वृद्धिमती च पश्चात् ।
दिनस्य पूर्वार्धपरार्धभिन्ना छायेव मैत्री खलसज्जनानाम् ॥
(२) 'सङ्गतिः' इति 'क' पुस्तके ।
(३) 'स्वल्पोऽपि' इति 'क' पुस्तके ।

इति इन्द्रप्रभावादेवं सम्बोधनमुक्त्वा ते तुष्टुवुरिति तस्मात् सुभगाऽभूदित्युक्तम् ।

तस्याः जये एषा ऋक् ( ऋ० १०.१०८.११; )—

**दूरमित पणयो वरीय उद्गावो यन्तु मिनतीर्ऋतेन ।**
**बृहस्पतिर्या अविन्दन्निगूह्ळाःसोमो ग्रावाण ऋषयश्च विप्राः॥**

दूरम् । इत । पणयः । वरीयः । उत् । गावः । यन्तु । मिनतीः । ऋतेन । बृहस्पतिः । याः । अविन्दत् । निऽगूह्ळाः । सोमः । ग्रावाणः । ऋषयः । च । विप्राः ॥१८१॥

सरमा त्रिष्टुभा जितान् पणीन् हितमन्वशात् (१) । हे पणयः यूयं वरीयः उरुतरं दूरं देशम् इत गच्छत । 'वरीयो वरतरमुरुतरं वा' इति यास्कः ( नि० ८।९ ) । युष्माभिर्दूरं गच्छाद्भिः पश्चाद्गावः युष्माभिरपहृताः इमाः ऋतेन नाम सत्येन मिनतीः मिनत्यः द्वारस्य पिधायकं पर्वतं हिंसत्यः विदारयन्त्यः उद्यन्तु तस्मात्पर्वतादुद्गच्छन्तु (२) । निगूह्ळाः निगूढाः नितरां स्थापिताः गाः याः बृहस्पतिः अविन्दत् (३) लप्स्यते । तथा सोमः तदभिषवकारिणो ग्रावाणश्च विप्राः मेधाविन ऋषयोऽङ्गिरसो लप्स्यन्ते ।

तदा युष्माकं शरीरसन्देहो भविष्यतीति मद्वाक्यात्तेषामागमनात् पूर्वं गच्छतेति सरमया जिताः इन्द्रसङ्घादित्युक्तम् ।

---

( १ ) 'हि अभ्यवदत्' इति 'क' पुस्तके ।

( २ ) 'यद्वा–मिनतीः व्यत्ययेन कर्मणि शता । मीयमाना युष्माभिर्बाध्यमानाः ताः गावः । सुव्व्यत्ययः । गाः ऋतेन स्तुतिभिर्गन्तव्येनेन्द्रेण सहायेन बृहस्पत्यादय उद्यन्तु पर्वतादुद्गमयन्तु' इति वेदभाष्ये ।

( ३ ) विद्लृ लाभे तौदादिकः । तस्मात् 'छन्दसि लङ् लुङ् लिटः' ( पा० ३।४।६ ) इति भविष्यदर्थे लङ् । 'शे मुचादीनाम्' (पा० ७।१।५९) इति नुमागमः ।

अशुद्धा भार्या त्याज्येत्याह—

शुद्धा भार्या परिग्राह्या त्याज्याऽशुद्धा नरैः सदा ।
ब्रह्मणाऽपि(१) जुहूं त्यक्तां शुद्धां देवादयो ददुः ॥१५८॥

तत्राख्यानम्(२)—ब्रह्मणो जाया जुहूर्नाम बभूव । कदाचिदस्याः किल्बिषमस्या दौर्भाग्यरूपेणासाञ्चक्रे । अत एव स तां पर्यत्याक्षीत् । अनन्तरमादित्यादयो देवा मिथो विचार्य एनामकिल्बिषां कृत्वा पुनर्ब्रह्मणे प्रादुरिति ।

तत्र ऋक् ( ऋ० १०.१०९.६ )—

पुनर्वै देवा अददुः पुनर्मनुष्या उत ।
राजानः सत्यं कृण्वाना ब्रह्मजायां पुनर्ददुः ॥

पुनः । वै । देवाः । अददुः । पुनः । मनुष्याः । उत । राजानः । सत्यम् । कृण्वानाः । ब्रह्मऽजायाम् । पुनः । ददुः ॥ १८२ ॥

जुहूर्नाम ब्रह्मवादिनी ऋषिः ब्रह्मपुत्र ऊर्ध्वनाभा वाऽनुष्टुभाऽऽह । ऋचोऽयमर्थः—देवाः इन्द्रादयः तां निष्किल्बिषां जुहूं ब्रह्मणे पुनरददुः अदुः(३) । उतापि च । उताप्यर्थे । मनुष्याः पुनरददुः । एवं देवमनुष्यैः कृतं दानं सत्यं यथार्थं कृण्वानाः कुर्वाणाः राजानोऽपि पुनस्तस्मै ददुः । एवमव्यवहार्यनिमित्तं पापमपि व्यनाशयन्निति भावः ।

---

(१) 'ब्रह्मणाऽपि जुहूस्त्यक्ताऽशुद्धा देवादयो ददुः' इति 'ग' पुस्तके ।

(२) अत्रेतिहासमाचक्षते—जुहूरिति वाङ्नाम । सा ब्रह्मणो जाया च बृहस्पतेर्वाचस्पतित्वाद् बृहस्पतेर्जुहूर्नाम भार्या बभूव । कदाचिदित्यादि वे० भा० ।

(३) 'वै शब्दः प्रसिद्धवाची' इति वेदभाष्ये ।

पितृदेवार्थिशेषान्नमश्नीयादित्याह(१)—

पितृदेवार्थिशेषान्नं योऽश्नीयात् सोऽमृतं द्विजः ।
मोघं शेषमभुञ्जानो भिक्षुणा गदितोऽघभुक् ॥ १५९ ॥

याज्ञवल्क्योऽपि ( या० स्मृ० १.५.१०५ )—

बालस्ववासिनीवृद्धगर्भिण्यातुरकन्यकाः ।
सम्भोज्यातिथिभृत्यांश्च दम्पत्योः शेषभोजनम् ॥

तत्र ऋक् ( ऋ० १०.११७.६ )—

मोघमन्नं विन्दते अप्रचेताः सत्यं ब्रवीमि वध इत्स तस्य ।
नार्यमणं पुष्यति नो सखायं केवलाघो भवति केवलादी ॥

मोघम् । अन्नम् । विन्दते । अप्रऽचेताः । सत्यम् । ब्रवीमि । वधः । इत् । सः । तस्य । न । अर्यमणम् । पुष्यति । नो इति । सखायम् । केवलऽअघः । भवति । केवलऽआदी ॥ १८३ ॥

भिक्षुर्ऋषिरदातारं त्रिष्टुभा निन्दति । अप्रचेताः अप्रकृष्टज्ञानः दाने चेतो मनो यस्य न भवति स । मोघं व्यर्थमेवान्नं विन्दते(२) लभते । इदं सत्यं यथार्थमेव ब्रवीमि । ऋषिरहं वदामि । न केवलं व्यर्थम् । किन्तु तस्य पुरुषस्य वध इत् वध एव । स निरर्थको वध एव यः पुरुषः अर्यमणम् । उपलक्षणमिदम् । अर्यमादीन् सर्वान् देवान् न पुष्यति हविःप्रदानेन न पोषयति । नो नापि सखायं समानख्यानमभ्यागतमतिथिं मित्रवर्गं च न पोषयति ।

---

( १ ) 'पितृदेवार्थिनां शेषमश्नीयादित्याह'—इति 'क' 'ख' पुस्तकयोः ।

( २ ) विद्लृ लाभे तौदादिकः । शे मुचादीनाम् ( पा० ७।१।५९ ) इति नुमागमः ।

अत एव केवलादी(१) केवलमसाक्षिकमन्नं भुञ्जानः स केवलाघो भवति केवलपापवान् भवति । अघमेव केवलं तस्य शिष्यते नैहिकं नामुष्मिकमिति । तस्माद्यथा कथञ्चिद्दातव्यमित्यभिप्रायः।

सपत्नीजं दुःखं(२) दुःसहमित्याह—

सपत्नीजं सदा दुःखमिन्द्राण्या अपि दुःसहम् ।
साऽब्रोचदोषधीर्दुःखं पतिं मे केवलं कुरु(३) ॥ १६० ॥

तदर्थेयमृक् ( ऋ० १०.१४५.२ )—

उत्तानपर्णे सुभगे देवजूते सहस्वति ।
सपत्नीं मे परा धम पतिं मे केवलं कुरु ॥

उत्तानऽपर्णे । सुऽभगे । देवऽजूते । सहस्वति । सऽपत्नीम् । मे । परा । धम । पतिम् । मे । केवलम् । कुरु ॥ १८४ ॥

इन्द्राण्यनुष्टुभा ओषधीस्तुष्टाव । ऋचोऽयमर्थः । हे उत्तानपर्णे उत्तानान्यूर्ध्वमुखानि पर्णानि पत्राणि यस्यास्तादृशि हे सुभगे सौभाग्यहेतुभूते हे देवजूते देवेन स्रष्ट्रा प्रेरिते हे सहस्वति अभिभवनवति ईदृशे हे पाठे मम सपत्नीं परा धम(४) पराङ्मुखीं जहि । धमतीति वधकर्मा ( निघण्टु २।१९ ) । एवं तस्या वधं कृत्वा मे मम पतिं केवलमसाधारणं कुरु इति ।

---

( १ ) केवलादी—अदेः 'सुप्यजातौ णिनि०' ( पा० ३।२।७८ ) इति णिनिः । अत उपधालक्षणा वृद्धिः ( पा० ७।२।११६ ) इति वेदभाष्ये ।

( २ ) 'सपत्नीदुःखं' इति 'क' पुस्तके ।

( ३ ) 'दुःखात् केवलं कुरु मे पतिम्' इति 'ग' पुस्तके ।

( ४ ) 'परागमय' इति वेदभाष्ये ।

अथ ग्रन्थकर्तुः प्रार्थना ।

प्रथमम्—अलक्ष्मीर्दुःखमूला तस्याः परिहारं शिरिम्बिठमयाचत (१)—

**यस्याः शिरिम्बिठोऽलक्ष्म्या नाशं चकार यः पुरा ।**
**तमानम्येति वोचेऽहं तस्या नाशोऽस्तु मे कुले ॥ १६१ ॥**

तथा ऋग्विधानम्(२)—

अलक्ष्मीनाशनार्थंतु जपेन्नित्यं शिरिम्बिठिम् ( ६६७ ) ।
अलक्ष्मीं नुदते देहादपि वर्षसहस्रकीम् ( ६६९ ) ॥

अरायीति ( ऋ० १०.१९९ ) शिरिम्बिठोऽलक्ष्मीनाशं कृतवान् ।

तत्र ऋक् ( ऋ० १०.१९९.१ )—

**अरायि काणे विकटे गिरिङ्गच्छ सदान्वे ।**
**शिरिम्बिठस्य सत्वभिस्तेभिष्ट्वा चातयामसि ॥**

**अरायि । काणे । विऽकटे । गिरिम् । गच्छ । सदान्वे । शिरिऽम्बिठस्य । सत्वऽभिः । तेभिः । त्वा । चातयामसि ॥ १८५ ॥**

ऋचोऽयमर्थः। हे अरायि अदायिनि दानविरोधिनि अलक्ष्मि ।

---

( १ ) 'शिरिम्बिठ आह' इति 'ग' पुस्तके ।

( २ ) अत्र ऋग्विधानगतश्लोकानामाद्यान्त्यार्धाविवाह । पूर्णश्लोकास्त्वेवम्—

अलक्ष्मीनाशनार्थं तु जपेन्नित्यं शिरिम्बिठम् ।
अपामार्गमयीं शाखां सदर्भां सवीरुधैः ॥ ( ६६७ ) ॥
गृहीत्वाऽऽत्मानं पावयेदधश्चोर्ध्वञ्च नित्यशः ।
आज्यं वाऽनेन जुहुयात् सहस्रं दशतीर्दश ।
त्र्यहेण नुदते देहादलक्ष्मीं शतवार्षिकीम् ॥ ( ६६८ ) ॥
चान्द्रायणं चरन्नेतत् सूक्तं सिद्धिकरं जपेत् ।
अलक्ष्मीर्नुदते देहादपि वर्षसहस्रिकी ॥ ( ६६९ ) ॥

हे काणे कुत्सितदर्शने(१) हे विकटे विकृतगमने(२)। सदान्वे सदा नोनुवे शब्दकारिके(३) दुर्भिक्षाधिदेवते गिरिं पर्वतं निर्जनं देशं गच्छ। अस्मान् मा बाधिष्ठाः। यदि न गच्छासि तर्हि शिरिम्बिठस्य मेघस्य। बिठमन्तरिक्षम्। शीर्यते बिठेऽन्तरिक्षे इति शिरिम्बिठो मेघः। तस्य यानि सत्त्वानि उदकानि तेभिः तैः सत्त्वभिः(४) उदकैः त्वा त्वां चातयामसि चातयामः विनाशयामः। चातयतिर्नाशने। अपि च(५) शिरिम्बिठो भारद्वाजः भरद्वाजपुत्रः ऋषिः तस्य सत्त्वानि यानि ज्योतिष्टोमादीनि कर्माणि। तेभिः तैः कर्मभिः हे अलक्ष्मि त्वां विनाशयामः।

तत्र निरुक्तम् ( नि० ६।३० ) "अरायिनि काणे विकटे।" इत्यादि द्रष्टव्यम्।

अथ 'धनमिच्छेद् हुताशनात्' इत्युक्तत्वादग्निं धनं याचते इत्यर्थ आह—

बन्धुर्मेधा यशो ब्रह्म वेदो रत्नं भगो व्रतम्।
धनं यस्याष्टौ तस्याऽग्नेर्याचेऽतः केतुवर्द्धनम् ॥१६२॥

तत्र ऋक्—( ऋ० १०. १५६. १. )—

अग्निं हिन्वन्तु नो धियः सप्तिमाशुमिवाजिषु।
तेन जेष्म धनंधनम् ॥

अग्निम्। हिन्वन्तु। नः। धियः। सप्तिम्। आशुम्ऽइव। आजिषु। तेन। जेष्म। धनम्ऽधनम् ॥ १८६ ॥

केतुर्ऋषिर्गायत्र्याऽग्निं तुष्टाव। ऋचोऽयमर्थः। नः अस्माकं

---

( १ ) 'कुत्सितशब्दकारिणि कुत्सितदर्शने वा' इति वे० भा०।
( २ ) 'विकृतगमने विकृताङ्गि वा' इति वे० भा०।
( ३ ) 'आक्रोशकारिणि' वे० भा०।
( ४ ) 'अन्तर्वर्तमानैरुदकैः' वे० भा०।
( ५ ) 'यद्वा' इति वे० भा०।

धियः कर्माणि स्तुतयो वा अग्निं हिन्वन्तु प्रेरयन्तु यागार्थमुद्योजयन्तु प्रवर्द्धयन्तु वा । हि गतौ वृद्धौ च । तत्र दृष्टान्तः । आजिषु सङ्ग्रामेषु सप्तिम् अश्वं आशुमिव शीघ्रगामिनमिव । सप्तिः वह्निः तन्नाम ( निघण्टु १।१४ )। यथा योद्धारः सङ्ग्रामे शीघ्रगामिनमश्वं प्रेरयन्ति तद्वत् । तेनाग्निना धनंधनं सर्वं धनं वयं जेष्म जयेम । वीप्सा आदरार्था ।

'इन्द्रो जयेम त्वया धनंधनम्' ( ऋ० ९।८९।८ ) इति ।

'धनमूलमिदं जगद्' इति वेदेऽपि दृष्ट्वा धनबन्ध्वादिगुणान् प्रदर्श्य, यदि धनं ददासि तर्हि एतदभिमतं कुर्वित्यग्निं ग्रन्थकृत् प्रार्थयति—

मा हर मा हरस्यर्य चेद् बन्ध्वादिगुणं वसु ।
अन्त्यसूक्तफलान् मा भूद् वियोगो नाविळापद ॥१६३॥

हे अर्य स्वामिन् अग्ने चेत् यदि बन्ध्वादयो गुणाः यस्मिंस्तद्बन्ध्वादिगुणं वसु धनं याच्यमानः त्वं पूर्वजन्मनि अदत्तदानान्नाहरासि धनं न ददासि मा हर मा देहि । भाग्यं विना कथं त्वं ददासीति । मम तस्मिन् धने आग्रहो नास्ति । यत्राग्रहस्तत् प्रयत्नेन याचे । हे इळापद । इळा पृथिव्येव पदं स्थानं यस्य सः तथोक्तः । 'अग्निः पृथिवीस्थानः' ( नि० ७. ९ ) । नौ आवयोः वियोगः विश्लेषः मा भूत् । एतन् मन्त्रान्तरेऽपि विरूपेण प्रार्थितं दृष्टम्—

यदग्ने स्यामहं त्वं त्वं० ( ऋ०८।४४।२३ )

इत्यनया । तस्मान् मयैतत् सम्यगुक्तम् ।
तदर्थेयमृक्—( ऋ० १०. १९१. १ ) ।

संसमिद्युवसे वृषन्नग्ने विश्वान्यर्य आ ।
इळस्पदे समिध्यसे स नो वसून्याभर ॥

सम्ऽसम् । इत् । युवसे । वृषन् । अग्ने । विश्वानि । अर्यः । आ । इळः । पदे । सम् । इध्यसे । सः । नः । वसूनि । आ । भर ॥ १८७ ॥

संवननोऽनुष्टुभाऽग्निं तुष्टाव । ऋचोऽयमर्थः । हे वृषन् कामानां वर्षितर् अग्ने । अर्यः(१) ईश्वरस्त्वम् । विश्वानि सर्वाणि भूतजातानि संसमित् । प्रसमुपोदः पादपूरणे (२) । आ युवसे आसमन्तान् मिश्रयसि । देवेषु मध्ये त्वमेव वैश्वानरात्मना सर्वाणि भूतानि व्याप्नोषि नान्य इत्यर्थः । किञ्च इळस्पदे इळायाः पृथिव्याः पदे स्थाने वेदिलक्षणे(३) समिध्यसे ऋत्विग्भिः सम्प्रदीप्यसे । तादृशस्त्वमस्माकं वसूनि धनानि आभर आहर । हृग्रहोरिति (पा० ३।१।८४ वा० ) भत्वम् । यदि नाहरसि तर्हि भ्रातृत्वं मा त्याक्षीः' इति । इळस्पदे–'इळाया गा नमसो देवयुर्दुहो० ( ऋ० प्रा० ४।४९ ) इति विसर्गस्य सत्वम् ।

'अग्ने भ्रातः सहस्कृत रोहिदश्व शुचिव्रत' ( ऋ० ८।४३।१६ )

इति विरूपेण ऋषिणाऽग्निर्भ्राता उक्तः । तस्माद् भ्राता सदा भवति।

---

( १ ) अर्यः स्वामिवैश्ययोरिति ( पा० ३।१।१०३ ) यत्प्रत्ययान्तो निपातितः । 'अर्यः स्वाम्याख्यायाम्' इत्यन्तोदात्तत्वम् ।

( २ ) 'प्रसमुपोदः पादपूरणे' इति समो द्विर्वचनम् । इच्छब्दोऽवधारणे ।

( ३ ) उत्तरवेदिलक्षणे । 'एतद्वा इळायास्पदं यदुत्तरवेदी नाभिरिति ब्राह्मणम्' ( ऐ० ब्रा० १।२८ ) इति वे० भा० ।

अग्निं(१) प्राथ्य संज्ञानं देवं प्रार्थयते—

संज्ञानं(२) द्वेषनाशाय वन्दे द्वेष्यपि मे न सः ।
प्रकारैर्दशभिः सैकैर्ये मां कृत्वा ऋचः पठन् ॥१६४॥

तत्र ऋक् ( ऋ० १०.१९१.४ )—

समानीव आकूतिः समाना हृदयानि वः ।
समानमस्तु वो मनो यथा वः सुसहासति ॥

समानी । वः । आऽकूतिः । समाना । हृदयानि । वः । समानम् । अस्तु । वः । मनः । यथा । वः । सुऽसह । असति ॥ १८८ ॥

संवनन ऋषिः संज्ञानं प्रार्थयते (२) । अयमर्थः । (३) हे जनाः भिन्नबुद्धयः वो युष्माकं आकूतिः सङ्कल्पो व्यवसायो (४) वा समानी एकविधा अस्तु । तथा वो युष्माकं हृदयानि भिन्नबुद्धि-

---

( १ ) अस्यावतरणिका 'ग' पुस्तके त्वेवम् ।
जनेभ्य आशिषं ददाति—
समानीव आकूतिः० इत्यादि ।

( २ ) अत्र ऋग्विधानम्—
'सं समिद्युवसे वृषन्' सौभ्रातृकरणं महत् ।
ज्ञातिभेदे प्रयुञ्जीत न भिद्यन्ते कदा चन ॥७१३॥
कृतभेदे तु संज्ञानमेतत् सन्धिकरं जपेत् ।
न तत्र भेदो भूयः स्याद् यत्रैतत् सततं जपेत् ॥७१४॥

( ३ ) 'हे ऋत्विग्यजमानाः' इति वेदभाष्ये । अस्या ऋचो व्याख्यानं 'क' 'ख' पुस्तकयोर्न दृश्यते ।

( ४ ) 'अध्यवसायो वा' वे० भा० ।

युक्तानि समानानि एकविधानि सन्तु। तथा वो युष्माकं मनोऽन्तः-करणं ( प्रत्येकविवक्षयैकवचनम् ) तदपि समानमस्तु । यथा वा युष्माकं सुसह शोभनसाहित्यं असति भवति तथा समानमस्त्विति । असति—अस्तेर्लेटि बहुलं छन्दसीति शपो लुगभावः ।

इति द्याद्विवेदकृते नीतिमञ्जरीभाष्येऽष्टमे नीतिवाक्यानि ।

इति समाप्तोऽयमष्टमाष्टकः ॥

श्रीरामचन्द्रार्पणमस्तु ॥ श्रीरस्तु ॥



परिशिष्ट १.

# नीतिमञ्जरीस्थपद्यानामकारादिवर्णानुक्रमेण सूची ।

## परिशिष्ट २

# नीतिमञ्जरीस्थऋङ्मन्त्राणामकारादिवर्णानुक्रमेण सूची।

( कोष्ठान्तर्गतानि तत्सदृशनिगमान्तराणि )

## परिशिष्ट ३.

# नीतिमञ्जरीस्थप्रधानऋङ्मन्त्रसादृश्योपन्यस्त-निगमान्तरशणामकारादिवर्णानुक्रमेण सूची

## परिशिष्ट ४.

# नीतिमञ्जर्यां प्रमाणत्वेनोपन्यस्तग्रन्थग्रन्थकाराणा- मकारादिवर्णानुक्रमेण सूची

( अत्राङ्काः पृष्ठद्योतकाः )

## परिशिष्ट ८

# नीतिमञ्जरीस्थसंज्ञाशब्दानामकारादिवर्णानुक्रमेण सूची ।

